कृत्वोदङ्मुखमत्र सूत्रमथ मध्याद् द्वारविस्तारत-
स्तूत्कृत्याव्यशतांशकान् प्रतिगमय्योदीचि चैन्द्राम्रकम् ।
सर्वेष्वीशहरीशयोः पुनरिदं वार्चांशतोऽथाखिले
दिश्यैश्यां गमयेद् यवं यवयुगं वार्चोद्भवं सन्धितः ॥

इत्येतेषां पद्यानां व्याख्यानानि विमर्शिन्यां द्वादशपटले ७, ८, ९ तम-पद्येषु दृश्यन्ते । द्वितीयपटलस्थविंशपद्ये 'पङ्क्त्या गर्भगृहं करोतु' इत्युक्तम् । कृते च गर्भगृहे प्रतिष्ठास्थाननियमो नोक्तः । स इदानीं कर्मशेषपटल उच्यत इति विमर्शिनीकाराशयः ।

कृते च गर्भगृहे प्रतिष्ठास्थानजिज्ञासोदेति । तां शमयितुमत्रैव 'कृत्वा गर्भगृहम्' इत्येषां निवेशः समुचित इति विवरणकाराशयः ।

तथा द्वितीयपटले १३, २४, २५ तमश्लोकव्याख्या विवरणे ३४ तम-श्लोकानन्तरं दृश्यन्ते । २५ तमपद्ये स्तम्भोपजीवितोरणलक्षणमुक्तम् । ततः पूर्वं स्तम्भस्थानादि वक्तुमुचितमिति विवरणकाराशयः ।

अम्बुमार्गरचनं 'प्रत्यन्ते वा गलान्ते' इत्यनेनोक्तम् । प्रतेरुपरि स्तम्भविनिवेशनमिति विमर्शिनीकाराशयः ॥

तथा ३६ तमश्लोकव्याख्यानं २२ तमश्लोकव्याख्यानानन्तरं विवरणे दृश्यते । तच्च 'प्रत्यन्ते वा गलान्ते' इति प्रतिप्रस्तावादुक्तं प्रतिभाति ।

तोरणलक्षणानन्तरं प्रत्युत्तरान्तर्भित्तिविरचनमिति सङ्गतिर्विमर्शिनीपक्षे ।

तथा ३८ तमश्लोकव्याख्यानं ४१ तमश्लोकव्याख्यानानन्तरं दृश्यते विवरणे । तच्च

'शालाकूटकनासिकादिविलसज्जालोज्ज्वलत्पञ्जरः ।'

इति तत्रत्यचतुर्थपादस्वारस्यात् कूटजालादिलक्षणानन्तरं वक्तुमुचितमिति विवरणकाराशयः ॥

भित्तिलक्षणप्रस्तावानन्तरं भित्तिभूषणप्रस्ताव इति विमर्शिनीकाराशयः ।

तथा ५१ तमश्लोकव्याख्यानं ६१ तमश्लोकानन्तरं विवरणे दृश्यते । उत्तमतले शिखरप्रक्रिया द्वितीयादितलानामुपरतलैः सन्धिप्रदर्शनानन्तरं कार्येति विवरणकाराशयः ।

स्तूपिकाप्रस्तावानन्तरं विमानशिखरप्रस्ताव इति विमर्शिनीकाराशयः ।

तथा ५५ तमश्लोकव्याख्यानं ५६ तमश्लोकानन्तरं दृश्यते विवरणे। तलान्तरविधिप्रकारप्रस्तावानन्तरे तलसङ्ख्याकथनमुचितमिति विवरणकाराशयः ॥

एकतलद्वितलत्रितलानां नियममुक्त्वा तलान्तरविधिप्रकारप्रस्ताव इति विमर्शिनीकाराशयः।

तथा ६६ तमश्लोकव्याख्यानं ६७ तमश्लोकानन्तरं दृश्यते विवरणे। वृत्तप्रासादप्रस्तावानन्तरमर्धवृत्तप्रासादकथनं ततो दीर्घचतुरश्रलक्षणकथनमिति विवरणकाराशयः।

हस्तिपृष्ठात्मप्रासाद इति नामान्तरेण वदति विमर्शिनीकारः।

अथ च विमर्शिन्यदृष्टाधिकपाठो द्वितीयपटले १८ तमश्लोकानन्तरं विवरणे दृश्यते। स चाधिकपाठस्तावत् —

बाह्यस्तम्भसमुच्छ्रये विदलिते भूतादिवस्वन्तिमै-
रेकांशाभ्यधिकोच्छ्रयान् विरचयेत् स्तम्भांस्ततो गर्भगान्।
गर्भस्तम्भसमुच्छ्रये विदलिते भूतादिवस्वन्तिमै-
र्गर्भागारमसूरकं विरचयेदेकांशतः साम्मितम् ॥

इति। स च गर्भगृहस्य स्तम्भप्रमाणं प्रथमस्तम्भेभ्यो जनयितुमुक्तः।

तथा ७९ तमश्लोकानन्तरं,

तादृग्दण्डे प्रकल्प्योत्तरमनधिगतालिन्दकं गर्भसूत्रं
कृत्वा मूलाग्रयोस्तत्ततिदलमपनीयैषु शैलाङ्गभक्तम्।
कृत्वा चैकांशतस्तत्ततिमपि परिकल्प्योनितांशं सुयोज्य
न्यस्यान्यान्युत्तराण्यारचयतु तदलिन्दोत्तराद्यङ्गशेषम् ॥

इति दृश्यमानं पादसूत्रसमालक्षणायोक्तम्।

तथा द्वितीयपटले दशमश्लोकानन्तरं 'स्तम्भोच्चस्य' इत्यादिश्लोकव्याख्यामध्ये विमर्शिन्यदृष्टानामन्येषामपि केषाञ्चित् पद्यानां प्रतीकानादत्ते विवरणकारः। परन्तु तदाधारभूतानि पद्यानि नोपलभ्यन्ते। तथा २० तमश्लोकानन्तरं 'कृत्वा गर्भगृहम्' इत्यादि श्लोकव्याख्यायामन्ते 'सर्वत्र' इति प्रतीकमादाय परिदृश्यमानस्य व्याख्यानस्य, तथा ६५ तमश्लोकानन्तरं 'इति समचतुरश्र' इति प्रतीकमुपादाय प्रवृत्तस्य व्याख्यानस्य चाधारभूतानि पद्यानि नोपलभ्यन्ते।

अथ व्याख्ययोरुभयोरप्यवतारिकयैव प्रतीयमानमभिप्रायभेदमधिकृत्य किञ्चिदिव निरूप्यते।

अभिप्रायभेदः ।

| पुटम्. | विमर्शिनी. | विवरणम्. |
| --- | --- | --- |
| ७ | अथ चिकीर्षितग्रन्थस्य देवतानियमादिकमाह — श्रीशेति । | ननु यद्यप्ययं तन्त्राणां समुच्चय आरभ्यते तथापि किंवपुषो देवस्येदं सपरिकरं समाराधनं, कथं दानेन समुच्चयेनापि तत्प्रतिपादनमित्यपेक्षया तत्सर्वं तन्त्रसमुच्चयप्रकारप्रतिज्ञानेन दर्शयति — श्रीशेति । |
| १८ | वरणकर्मोपसंहरन् मूर्त्तिपलक्षणमाह — एवमिति । | मूर्त्तिपानां लक्षणं सङ्ख्यां च वदन् वरणमुपसंहरति — एवं गुरुमिति । |
| २२ | अथ भूमेर्वर्जनीयलक्षणान्याह — वृत्तेति । | स्वतन्त्राधमभूमिमाह — वृत्तेति । |
| २६ | एवं वर्णवशाद् भूमेर्लक्षणमुक्त्वा कामवशादप्याह—कर्पूरेति । | अथ फलभेदेनापि भूलक्षणमाह — कर्पूरेति । |
| २८ | एवं भूलक्षणं भूपरीक्षाविधानं चोक्त्वा भूपरिग्रहविधानमाह— आचार्य इति । | एवं परिग्राह्यां भुवमुक्त्वा तत्परिशोधनप्रकारमाह —आचार्योऽथेति । |
| ७८ | शिलालक्षणमाह — सिद्धेति । | शिलालक्षणमपि दिङ्मात्रेणाचष्टे—सिद्धाद्याकरसम्भवेति । |
| ७९ | वर्ज्यां शिलामाह —दुष्टोद्देशेति । | अथ पादुकादिविषये शिलां दुष्टां वदन् शिष्टां ग्राह्यां दर्शयति — दुष्टोद्देशसमुद्भवेति । |
| ८७ | कीदृशी योनिरित्याकाङ्क्षायां योन्यादिकमाह — इष्टातानवितानेति । | एवमुपादेयाया योनेः कार्यभूतं तत्तत्परिधिमानमुपायविशेषेणोपदिशति — इष्टातानेति । |
| ८९ | अष्टानां योनीनां नामानि कथयति — ध्वजेति । | नक्षत्रादीनां प्रसिद्धत्वादप्रसिद्धा योनीर्गणयति — ध्वजेति । |

| पुटम्. | विमर्शिनी. | विवरणम्. |
|---|---|---|
| ९१ | स्तम्भाधिष्ठानयोरुन्नतेर्नियममाह — गेह इति । | अथाधिष्ठानस्यापि जनकं स्तम्भोन्मानं विस्तारादेव जनयति— गेह इति । |
| ९७ | पक्षान्तरेणाप्यधिष्ठानविशेषमाह — वास्त्वाधोरेति । | सम्प्रत्यधिष्ठानालङ्कारान् दर्शयति—वास्त्वाधारसमुच्छ्रय इति । |
| १०२ | भित्तिलक्षणमाह—बाह्येति । | सम्प्रति बाह्यान्तरभित्त्योर्वितानमाह — बाह्येति । |
| १०७ | कुड्यस्तम्भस्थापने नियममाह — स्तम्भा इति । | इदानीं स्तम्भानां स्थानानि सङ्ख्याश्च दर्शयति — स्तम्भा इति । |
| ११० | द्वारकल्पनमाह — भित्तीति । | अधिष्ठानजन्यमपि मानमाह—वास्त्विति । |
| १११ | कीदृशौ द्वारोत्सेधविस्ताराविव्याकाङ्क्षायामाह—गर्भागारेति । | प्रधानद्वारप्रमाणं गर्भगेहाज्जनयितुमाह—गर्भागारप्रतान इति । |
| १२८ | पक्षान्तरेण शिलादिभिराच्छादनादिक्रममाह—द्वारार्धत इति | वैमानिकप्रासादसम्भवं प्रकारान्तरमाह — द्वारार्धत इति । |
| १३३ | तलान्तरविधिप्रकारमाह — आरूढेति । | अथानेकतलादिविषयं वदन् पूर्वतलावसानप्रकारमाह— आरूढेति । |
| ११७ | मध्यमशिखराणां क्लृप्तिमाह—बाह्योत्तरेणेति । | द्वितीयादितलानामुत्तरतलैः सह सन्धिं दर्शयति — बाह्योत्तरेणेति । |
| १४३ | चतुरश्रादिप्रासादानां नामानि कथयति — मूलादीति । | इदानीं वृत्तादिषूपरितलसंस्थानं दर्शयति — मूलादीति । |
| १४६ | प्राकारान् प्रति दण्डविधिमाह— भक्तायामिति । | अथान्तर्मण्डलगतं कृत्यविशेषमाह — भक्तायामिति । |
| १४७ | पूजामण्डपं विधत्ते — अन्तर्मण्डलत इति । | नमस्कारमण्डपं लक्षयति— अन्तर्मण्डलत इति । |
| २५५ | क्रियाशेषमाह — अग्न्यादीति । | वेद्याः शुद्धिमभिधत्ते — अग्न्यादीति । |

# पाठभेदाः ।

## प्रथमः पटलः ।

| श्लोकः | विमर्शिनीपाठः | विवरणपाठः | विशेषः |
|---|---|---|---|
| ६ | देवालयगुरुनिलयाद्येषु सम्मार्जनाद्यैः | देवालयगुरुनिलयादौ स्वमन्त्राञ्चितात्मा | यन्मन्त्रमूर्तिर्देवः प्रतिष्ठापयितुमभिमतस्तन्मन्त्रेण सकलीकरणमात्माराधनं चोद्दिष्टम् । तच्च विवरणपाठेनैव स्फुटमवगम्यते । |
| ,, | आचार्यं मूर्तिपालानपि मनुमहितात्मेष्टविघ्नाधिराजः संबन्धैतान्निदध्याच्छिवदिशि यजमानोऽर्ध्यपाद्यादिकानि | कर्ता स्नातान् यथार्हं गुरुमथ तदुदङ्मूर्त्तिपान् विघ्नमिष्ट्वा दीपं चामून् प्रबन्धेश्वरदिशि पुरतोऽर्घ्यादि सम्पादयेच्च । | गुरोर्मूर्तिपानां च स्थाननियमो दीपप्रपूजनं च विमर्शिन्यनुक्तमत्रोच्यते । |
| ४५ | आचम्य सम्यक् | आचम्य मन्त्री | मन्त्रीति पाठः प्रतिष्ठापनीयदेवमन्त्राभिज्ञत्वरूपसाभिप्रायः |
| ५४ | कृत्वा कल्पित | भित्वा कल्पित | शङ्कून् भूमावग्रप्रवेशनेन स्थापयित्वेत्यर्थो विवरणपाठादेव भवति । |
| ५५ | आचार्यो मनुभाविते‌ऽह्नि सुशुभे लग्ने वृषाभ्यां मिथस्तुल्याभ्यामसनादिजैर्हलयुगाद्यैर्दर्भमालासितैः । प्रागास्यो मिहिरार्णलक्षिरथवा कृष्ट्वा क्षितिं पञ्चधा मुद्गादीनि समुप्य मूलमनुना सिञ्चेज्जितन्ताणुना ॥ | स्नातो गुरुर्मन्त्रविदञ्चितात्मा शुभेऽह्नि संस्कृत्य वृषौ सुतुल्यौ । अयुक्तपूर्वावसनादिक्लृप्तं हलादि मुद्गादि च बीजजातम् ॥ बद्ध्वालङ्कृतयोर्नवं युगहलाद्युक्षणोस्तयोर्योगवित् तिष्ठन् पश्चिमतोऽत्र दर्भमयमालाभिः सुलग्ने ततः । प्रागास्यो मिहिरार्णलक्षिरथवा कृष्ट्वा क्षितिं पञ्चधा बीजानीह समुप्य मूलमनुना सिञ्चेज्जितन्ताणुना । | वृषौ वाहनकर्षणादावयोजितावित्याद्यर्थलाभो विवरणपाठादेव भवति । |

| श्लोकः | विमर्शिनीपाठः | विवरणपाठः | विशेषः |
|---|---|---|---|
| ७१ | अमुष्मै निवेद्याथ तद्देवताभ्यस्त्रिपञ्चाशते तत्र दद्याद् बलिं च | अमुष्मै निवेद्याथ विद्वान् प्रदद्याद् बलिं चाखिलाभ्यो ऽथ तद्देवताभ्यः | विद्वानिति वास्तुशरीराभिज्ञत्वप्रतिपादकम् |
| ७३ | तद्वास्तुदैवतकदम्बकृतावलम्बं | तद्वास्तुदैवतकदम्बकृतेरलम्बं | वास्तुदेवतानामित्थं पूजायां विनिपाताभाव इत्यर्थलाभाय विवरणपाठः |
| १३४ | मृत्युजिन्मनुवरेणेशे स्वमूलान्तत: | कल्पवित् त्रिनयने मृत्युञ्जयेनापि तत् | कल्पवित्पदेन देवतासन्निधावेव बीजमुख्यासिपूजा तद्बहिरङ्गावरणपूजेत्यर्थस्फुरणम् |
| | | **द्वितीयः पटलः ।** | |
| ४ | प्रागादि | पूर्वादि | |
| ८ | स्तम्भांस्ततोऽष्ट्यङ्गुलवर्धितान् | स्तम्भान् युगाङ्ग्यङ्गुलवर्धितान् | द्विघ्नकुलवर्धितान् चतुरङ्गुलवर्धितानिति चाभिप्रायभेदेनोभयं प्रवृत्तम् |
| ,, | करोत्वधिष्ठानम् | कुर्यादधिष्ठानं | ... |
| १६ | यावत् स्वायोच्चमानं | यावत् स्वोत्सेधमानं | ... |
| ,, | गमयेन्मानसूत्रात् समन्तात् | गमयेदन्तरावेशयेद्वा | अन्तरावेशनविकल्पस्याधिकतयोक्तः |
| २६ | भित्तिव्यासमितैः | वास्वाधारमितैः | ... |
| ३८ | चतुर्द्वारान्वितो मण्डित- | चतुर्द्वारान्वितोऽतोऽधिकः | त्रिभूम्यादिग्रहणार्थमतोऽधिक इति पाठः |
| ४१ | यावत् स्वोत्सेधनीव्रप्रसरवलभितः | स्वोपानत्तुल्यनीव्रप्रसरयुतकपोतम् | स्फुटार्थोऽयं पाठभेदः |
| ४६ | जयन्तीस्तदुपरि सुसमीकृत्य कृत्वानुमार्गम् | जयन्तीरधितुलमनुमार्गैः समीकृत्य चैताः | ,, |
| ,, | निजांशाविहितं | निजांशसुसमम् | ... |
| ५६ | च तलिते | सुतलिते | विवरणपाठः श्रोत्ररमणीयः सम्यक् तले क्लृप्ते इत्यर्थलाभाय च |

| श्लोकः | विमर्शिनीपाठः | विवरणपाठः | विशेषः |
|---|---|---|---|
| ७१ | पृथगात्तलक्ष्मसु विदध्यादात्मनः सम्मतम् | पृथगात्तदेशगुणकालादीक्षया सम्मतम् | विवरणपाठो ज्यायानिति प्रतिभाति |
| ७८ | पृष्ठे सपार्श्वे | पृष्ठे च पार्श्वे | विवरणपाठः श्रोत्रसुखाय स्पष्टमर्थप्रतिपादनाय च |
| ,, | ततोऽन्तराले | तदन्तराले | तस्यान्तराल इत्यर्थो विमर्शिनीपाठे गम्यः इह तु वाच्यः |
| | | **तृतीयः पटलः ।** | |
| १ | शैलेषुप्रमितेऽथवाधिगत | शैलेषुप्रमितेऽथवातिगत- | विवरणपाठादेवार्थः स्फुटो भवति । |
| २८ | शुद्धस्वालयसम्मुखीन-शयनीयन्यस्तबिम्बाक्षिणी | शुद्धस्वालयसम्मुखीनशयने संवेशितार्चादृशौ | यतिभङ्गनिवृत्त्यर्थो विवरणपाठः |
| ३१ | गुरुः | बुधः | अर्थविशेषस्फोरणाय बुधपदग्रहणम् |
| ५७ | [illegible]र्भालयेऽभ्[illegible]र्चितविष्टरे | गर्भालयेऽभ्यर्चितदर्भके | विवरणपाठेनैवार्थः स्फुटतरः |
| ६९ | शुद्धोद्गभवने च | शुद्धोद्गभवनेऽथ | विवरणपाठ एव युक्ततरः |
| ७० | मध्यान्तर्नव | मध्यान्तं नव | अत्र विवरणपाठस्यैव ज्यायस्त्वम् |
| | | **चतुर्थः पटलः ।** | |
| ६ | नामभिरपि | नाममनुभिः | नाममन्त्रैरित्यर्थविवरणं विवरणपाठेनैव भवति । |
| ३९ | परिलिखेद् कुण्डे वक स्वाक्तवत् | प्रजनयेत् कुण्डे स्वकेऽथानलम् | अग्निजननप्रस्तावे विवरणपाठ एव ज्यायान् |
| ५१ | परिषेकान्तं विधिं चाचरेत् | तनुयात् पर्युक्षणान्तं विधिम् | विवरणपाठः स्फुटतरः |
| ५४ | तत्पीठदृढाभिमानिनी | तस्मिञ्छयने समाहितः | स्वकीयशक्तेर्विशेषणतया विमर्शिन्यामुक्तम् । एतद् विशेषणं नावश्यकमिति विवरणकाराशयः |
| ५६ | अपि ते द्वये | द्वितयेऽपि ते | विवरणपाठः समीचीन |

भाषाग्रन्थावलौ ६४ तमाङ्कतया प्रसाधिते तन्त्रसमुच्चये प्रथमपटले ५० तमश्लोके 'ततो गुरुः' इति दृश्यते । विवरणपाठस्तु स्नातो गुरुः इति । अथ च 'स्तम्भोच्चस्य'इत्यादिपद्यस्य प्रथमपटले निवेशः । विवरणे तु द्वितीयपटले । तथा प्रथमपटले ७२ तमपद्ये 'षडंशविस्तृततदष्टांशाधिकोच्चो घटः' इति विमर्शिनीपाठ आदृतः । एतेन भाषाव्याख्यानं विमर्शिनीव्याख्यामनुसृत्य प्रवृत्तमिति वा विवरणमाश्रित्य प्रवृत्तमिति वा वक्तुं न शक्यते ।

तन्त्रसमुच्चयकर्तुर्नारायणस्य पिता रविरिति पूर्वमुक्तम् । स च रविः प्रयोगमञ्जरीकाराद् रवेर्भिन्नो न वेति विचिकित्सोदेति । तत्रेदमवधारणीयम् । गुरुदेवः स्वकृतेशानगुरुदेवपद्धतौ प्रयोगमञ्जरीपद्यं प्रमाणतयोद्धरति । ततश्च गुरुदेवो रवेरर्वाचीन इति फलति । विमर्शिनीकर्ता शङ्करश्च गुरुदेवपद्यं प्रमाणतयोद्धरति । एवं च गुरुदेवादप्ययं नारायणोऽर्वाचीन इति फलति । एतेनार्वाचीनतमस्यास्य नारायणस्य पिता नायमिति प्रतीयते ।

विवरणसंशोधनायाधारभूता आदर्शास्तावत् —

१. कुलिक्काट्टिलं ब्रह्मश्रीमहेश्वरभट्टतिरिमहाशयादधिगतः क. संज्ञः ।

२. मुट्टविळमठब्रह्मश्रीकृष्णर् नारायणर् महाशयादधिगतः ख. संज्ञः ।

३. चिरक्कल् राजकीयग्रन्थशालातोऽत्र पारितोषिकतया लब्धो ग. संज्ञः ।

४. पुलियन्नूर् ब्रह्मश्रीनारायणनूनम्पूरिप्पाड्महाशयादधिगतो घ संज्ञः ।

५. अक्कमालिमट्टप्पलिमठादानीतो घसंज्ञः ।

६. तिरुवाप्पु स्वामियार् मठादानीतश्चसंज्ञः ।

इति षट् । एष्वादिमौ द्वौ दशमपटलविकलौ, तृतीय आदौ मध्ये च किञ्चिद्विगलितांशः । चतुर्थपञ्चमषष्ठाः समग्राः । पञ्चस्वप्येषु द्वितीयपटले ७९ तमश्लोकानन्तरमापटलपरिसमाप्ति व्याख्या लुप्ता ।

प्रचिकाशयिषितस्यास्य ग्रन्थस्योपोद्धातादिकरणे समुचितमुपदेशं कृतवत्सु पौरस्त्यग्रन्थप्रकाशनकार्यालयाध्यक्षेषु श्रीयुतमीमांसकरत्न बि. ए. रामस्वामिशास्त्रिमहाशयेष्वकैतवां कृतज्ञतां प्रकटयन्निममुपोद्घातमुपसंहरामि ॥

चित्रोदयमहाराजशासनेन प्रकाशितम् ।
समुच्चयाख्यं कुसुममामोदायास्तु सर्वदा ॥

अनन्तशयनम्,
१७-८-११९.

एन्. रामशास्त्री.

## विषयानुक्रमणी ।

### प्रथमः पटलः ।

## द्वितीयः पटलः ।

प्रासादलक्षणे —

॥ श्री ॥

नारायणप्रणीतः

# तन्त्रसमुच्चयः

शङ्करप्रणीतया विमर्शिन्याख्यया नारायण-
शिष्यप्रणीतया विवरणाख्यया
व्याख्यया च समेतः ।

---

श्रीमत् षड्गुणसम्भृतं वपुरधिष्ठायानुगृह्णाति यः
श्रद्धाभक्तिपवित्रितोपहरणैः स्वारम्भभूतात्मकैः ।
पूर्णानन्दरसानुभूरपि सदा सन्तर्पितो यज्वन-
स्तं देवं निगमागमाद्यधिगतं नित्यं समाराध्नुयाम् ॥ १ ॥

विमर्शिनी

हरीशेशहरिस्कन्ददुर्गार्यगणपात्मना ।
मूर्तिभेदेन पूज्याय नमोऽस्तु परमात्मने ॥

अथ खलु नारायणाख्यः परमपुरुषः स्वस्वागमेषु पृथक् पृथगवस्थितं तन्त्रं तत्कर्तॄणां युगपदेवावगमनायैकत्रैव समुच्चिचीषया तन्त्रसमुच्चयाख्यं ग्रन्थं कर्तुकामः प्रथमतस्तदविघ्नेन परिसमाप्त्यादिप्रयोजनाय स्वबुद्धाववस्थितानां सप्तानामपि देवतानां कारणात्मिकां परदेवतामुद्दिश्य स्वस्यैव तदाराधनस्य परमपुरुषार्थत्वं मन्यमानो विषयादिकमप्यर्थात् सूचयन् 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इति प्रसिद्धस्याशीर्वादस्य ग्रन्थारम्भयोग्यत्वादाशिषं प्रयुङ्क्ते — श्रीमदित्यादिना । तं देवं नित्यं समाराध्नुयामिति सम्बन्धः ।

G. P. T. 1497. 500. 17-1-117. B

देवो द्योतनात्मकः परमात्मा[1] । तच्छब्दस्य यो यज्वनोऽनुगृह्णाति, तमिति पूर्ववाक्येन सम्बन्धः । नित्यं नैरन्तर्ययुक्तं यथा भवति तथेति क्रियाविशेषणम् । समाराधनं समीचीना पूजा । पूजायाः सम्यक्त्वं नामात्मद्रव्यदेवतानामैक्यम् । तदिह प्रार्थनीयमित्याशिषोऽर्थवत्त्वम् । ननु केन प्रमाणेन देवस्यास्तित्वं कल्प्यत इत्यत्राह — निगमागमाद्यधिगतमिति । निगम्यन्ते स्थिरीक्रियन्तेऽर्था एभिरिति निगमा वेदाः । आगमा विष्णुसंहितादयः । आदिशब्देन पुराणादय उक्ताः । तेषु निगमागमपुराणादिषु, व्याप्तमित्यर्थः । आराधनफलमनुवादरूपेणाह — यो यज्वनोऽनुगृह्णातीति । यज्वनः यष्टॄन् । 'यज्वा तु विधिनेष्टवानि'त्यमरः । ईश्वरस्यानुग्रहो नाम साधकं प्रति स्वतादात्म्यपर्यन्ता प्रीतिः । तथाहि विष्णुसंहितायां —"भक्त्यैव परया तुष्टो देवदेवः स योगिनाम् । पूजाद्यनुग्रहायादौ रूप भेजे चतुर्भुजम् ॥" इति । ननु कथंभूतोऽनुगृह्णातीत्यत्राह — सन्तर्पित इति । यज्वभिरिति शेषः । सन्तर्पितः सम्यक् प्रसादितः । ननु केन द्रव्येण प्रसादित इत्यत्राह — श्रद्धाभक्तिपवित्रितोपहरणैरिति । श्रद्धा विश्वासः, भक्तिः स्नेहः विश्वासात्मको मानसो विकारः, ताभ्यां श्रद्धाभक्तिभ्यां पवित्रितैर्देवोपयोगयोग्यत्वं प्राप्तैरुपहरणैर्गन्धादिभिः । तेषामुपहरणानां स्वरूपमाह — स्वारम्भभूतात्मकैरिति । स्वस्य साधकस्यारम्भकाणि सम्भूतिकारणानि भूतानि पृथिव्यादीनि स्वरूपं येषामुपहरणानां ते तथोक्ताः । तत्र पृथिव्येव गन्धः, आकाश एव पुष्पं, वायुरेव धूपः, तेज एव दीपः, आप एव जलं निवेद्यं च । इति विभागः । ननु तैरुपहरणैः सन्तर्पितोऽपि कथमनुगृह्णातीत्यत्राह — षड्गुणसम्भृतं[2] वपुरधिष्ठायेति । षड्भिर्गुणैः सम्भृतं षड्गुणसम्भृतम् । गुणाः सर्वज्ञतादयः । "ज्ञानसन्तोषनित्यत्वस्वातन्त्र्याविघ्नवैभवैः । हृदयादिगुणैर्युक्तः सकलोऽनुग्रहादिकृत् ॥" इत्यादिभिर्गुणानां षडङ्गत्वेनागमेषु प्रसिद्धत्वात् । तैः षड्भिर्गुणैः सम्भृतं संगृहीतम् । वपुः विग्रहम् । अधिष्ठाय आश्रित्य । तच्च वपुः श्रीमच्च अतिशयेन कान्तिमत् , नास्मदादिशरीरवज्जडमित्यर्थः । ननु कथं सर्वकारणभूतस्य देवस्य परिच्छिन्नैरुपहरणैस्तृप्तिरित्यत्राह — सदा पूर्णानन्दरसानुभूरपीति । पूर्णोऽखण्डः आनन्दमयो रसः आनन्दरसः, पूर्णमानन्दरसमनुभवतीति पूर्णानन्दरसानुभूः सदेत्यनेन पूर्णानन्दरसानुभवस्य नैरन्तर्यमुच्यते । अपिशब्दो विरोधे । सदा पूर्णानन्दरसानुभूरपि कदाचिद्यज्वभिर्दत्तैरल्पैरुपहारैः सन्तर्पितस्ताननुगृह्णातीति परमेश्वरस्वभावस्यापरिमेयत्वं द्योत्यते । अत्रादौ श्रीमदिति श्रीशब्दप्रयोगेणैवास्मिन्

१. 'त्मा । यो', २. 'तं गुणाः' ग. पाठः.

ग्रन्थे सर्वमङ्गलानां सन्दोहो भवतीत्यपि ग्रन्थकृता विवक्षितम् । देवमाराध्नुयामित्यनेन वाक्येन देवाराधनप्रतिपादनमस्य ग्रन्थस्य विषय इति सूचितम् । अनुगृह्णातीति पदेन देवानुग्रह एवात्र प्रयोजनमित्यपि सूचितम् । यज्वन इति पदेनाधिकारिणः सूचिताः । सम्बन्धश्च प्रतिपादकस्यै ग्रन्थस्य प्रतिपाद्यस्य तन्त्रस्य चाभिधानाभिधेयभावः सूचितः ॥ १ ॥

विवरणम्

नमो हरिहराद्याख्यजगद्विख्यातमूर्तये ।
देवायार्चयमानेभ्यो भोगानुग्रहदायिने ॥ १ ॥
गुरून् गणाधिराजं च नत्वा गुरुनिर्देशतः ।
तत्कृतं विवरिष्यामः स्फुटं तन्त्रसमुच्चयम् ॥ २ ॥

ग्रन्थारम्भे समुचितं मङ्गलाचरणमर्थाद्विषयादिप्रतिपादनं च करोति— **श्रीमत् षड्गुणसम्भृतमिति** । श्रीशब्दारम्भो मङ्गलप्रकर्षार्थ एव । तं देवं नित्यं समाराध्नुयामिति सम्बन्धः । नित्याराधनेयमर्थ्यते । तस्याः सुकरत्वेऽपि बाह्याभ्यन्तराणां तत्साधनानां बहुतरत्वात् तेषां च प्रायो दुस्संपादनत्वात् तदर्थनोपपत्तिः । ननु कीदृशमेतत् समाराधनं, किं वा तत्फलमिति तत् सर्वं तमेव देवं स्तुवन् दर्शयति— श्रद्धाभक्तिपवित्रितोपहरणैः सन्तर्पितो यो यज्वनोऽनुगृह्णातीति । जलगन्धादीनि समाराधनद्रव्याण्युपहरणानि, तानि च यज्वनामेव श्रद्धाभक्तिभ्यां पवित्रितानि । समाराधने श्रद्धा देवे च भक्तिः ताभ्यां पवित्रितानि परिशुद्धतां गमितानि, तैरुपहरणैः सन्तर्पितस्तैरेव यज्वभिस्सन्तृप्तिं प्रापितस्सन्,ताननुगृह्णाति । विविधोपभोगासिद्धिसालोक्यादिपूर्वकपरमकैवल्यलक्षणो यथाधिकारमनुग्रहः, तेनानुग्रहेण (यो) योजयति तं देवमिति सम्बन्धः । जलगन्धादिभिर्देवस्य सन्तर्पणरूपं समाराधनमनुग्रहश्च तस्य फलमिति भावः । जलादिद्रव्याणां स्वतो न परिशुद्धिस्तदभावो वा । किन्तु तानि श्रद्धाभक्तिपूर्वकं देवे विनियुज्यमानान्यपूर्वां परिशुद्धिमपि प्राप्तानि भवन्ति । यद्वा पूर्वं परिशुद्धानामपि पवित्रितत्वं तद्गतरसादीनां भूमापत्तिनिबन्धनं संस्कारान्तरम् । नैतान्युपहरणानि लौकिकजलगन्धाद्यर्थमात्राणीत्यपि दर्शयति— स्वारम्भभूतात्मकैरिति । स्वे आरम्भान्निजनिजोपादानानि पञ्चभूतानि तैस्समाविष्टतया तदात्मकैरुपहरणैः । तदुक्तम्—

१. 'त्वि', २. 'स्य प्र' ग. पाठः.

"पञ्चीकृतमहाभूतपञ्चकं कारणान्वितम् । सपर्यावस्तु निर्दिष्टम्" इति । भूतशब्देन चेह व्यष्टिसमष्टिकारणावस्थानां पञ्चभूतानां ग्रहणम् । तदप्युक्तम् ।

"व्यष्ट्या चापि समष्ट्या च भूतानामशियायिनाम् ।
कारणेनापि सम्भेदाद् रसस्तु त्रिविधो मतः ॥"

इति । कथमेभिर्देवस्य सन्तृप्तिसम्भव इति । स्वारम्भभूतात्मकैः । आरम्भा इह कार्याणि । शोभना आरम्भा येषामिति स्वारम्भाणि, तान्येव व्यष्ट्याद्यवस्थानि पञ्चभूतानि तदात्मकैः । जलगन्धादिगतभूतकार्याणां शोभनत्वं रसात्मकत्वम् । तदुक्तम् — 'तत्राभिव्यक्तरूपाणाम्' इत्यादि । रसयोगात् तु जलगन्धादिभिः स्वकारणयोगिभिरपि देवसन्तृ(ति ? प्त्यु)पपत्तिभावः । रसस्य च भूतव्यष्ट्याद्यन्वयतः स्वरूपभेदः । तदप्युक्तम्—'स पुनस्त्रिविधो रस' इत्यादि । प्रतिपत्तिविशेषमप्यु(प)हरणेषूपदिशति — स्वारम्भभूतात्मकैरिति । स्वशब्देनेह यज्वसम्बन्धिनां ग्रहणम् । पञ्चभूतारब्धानि हि साधकानां सभोग्यार्थजातानि शरीराणि । वक्ष्यति च — "भूतानि पञ्च परमात्मनी"त्यादि । तदात्मनां तेषां यज्वनां निजनिजारम्भकपञ्चभूतात्मकैरुपहरणैः जलगन्धाद्युपहरणसमर्पणविधौ तद्द्वारा देवे स्वकीयकृत्स्नसमर्पणमेव यज्वभिरवहितैर(नु)सन्धेयमिति भावः । जलगन्धादिसमर्पणयोग्यतामपि देवस्याह —वपुरधिष्ठायेति । जलगन्धादिग्रहणोचितैः रसनाघ्राणाद्यखिलकरणैः सहितं मन्त्रमयविग्रहं तदभिमान्यात्मतयाविश्य तत्स्वामितया तत्रावस्थायेत्यर्थः । उपहरणैस्सन्तर्पितोऽनुगृह्णातीति सम्बध्यते । समाराधनसम्बन्धमप्युपदिशति — सदापि पूर्णानन्दरसानुभूरिति । तत्कालविशेषणं चैतत्—सदापीति । स्थूलात्मनि जलगन्धादिमयसमरससमर्पणसमये सूक्ष्मात्मनि तत्समष्टिमयामृतसमर्पणसमये परात्मनि तत्कारणमयप्रकृतिसमर्पणसमयेऽपीत्यर्थः । वक्ष्यति च — "स्थूलात्मतोन्मेषविधायिके"त्यादि । पूर्णमानन्दरसमनुभवतीति पूर्णानन्दरसानुभूः । आनन्द इह देवस्य स्वरूपानन्द एव । रसश्च यथासमर्पणं रसामृतप्रकृतिलक्षणः । तयोः सामानाधिकरण्येनोभयोरेकतादात्म्यलक्षणः सम्बन्धः । रसादीनां यावद् यज्वाभिप्रैति देवो वा तावान् भूमा भवतीति तस्य पूर्णविशेषणम् । तदुक्तम् — 'रसं ब्रह्माण्डसम्मितम्" इति । एतदर्थमेव च दर्शितं पवित्रिताभिधानं समाराधनविधौ । व्यष्ट्यादिभूतात्मकस्य रसादेः स्थूलात्मादिना तादात्म्यमापादनीयमित्येतदपीहोक्तम् । नन्वेवमाहार्यसन्तृप्तेरपरिपूर्णस्यास्य

परानुग्रहायोग इति । नेत्याह —सदा पूर्णानन्दरसानुभूरपीति । सदेति । समाराधनावस्थायामवस्थान्तरेष्वपीत्यर्थः । पूर्णानन्दः स्वरूपानन्द एव । स च चरमः फलरूपो रसः । उपहरणरसा हि क्रमोत्कर्षिणो मायीया एव । स्वरूपानन्दस्तु नित्योऽकृत्रिमो रसः । तस्य देशकालाद्यनवच्छिन्नत्वाद् घनत्वाच्च पूर्णत्वम् । तदनुभूरपि सन्नित्यर्थः । ननु यद्येवं पूर्णानन्दरसानुभूर्देवः, तदा कथमस्य समाराध्यताद्युपपत्तिरित्यत आह — श्रीमत्षड्गुणसम्भृतं वपुरधिष्ठायेति । देवस्यैव स्वस्वरूपाव्यतिरिक्ता शक्तिरिह श्रीर्व्यपदिश्यते । सैव मायाप्रकृतिः । तदवान्तरशक्तयो ज्ञानैश्वर्यादयः । ताश्च समुचितानुग्रहादिकार्यविषयतया प्रधानस्य देवात्मतत्त्वस्य तदुपकारितया षड्गुणा षड् वाङ्गानि । यद्वा कल्याणस्वभावतया षड्गुणा एव, तैः श्रीसमन्वयतन्त्रीमद्भिः षड्गुणैः सम्भृतं हृदयाद्यवयवसम्भवक्रमेण उपकल्पितं वपुरधिष्ठायेति । देवस्य स्वरूपानन्दनिर्वृतत्वेऽपि सकलानुग्रहादिकरशक्तियोगतः समारा(ध्याद्? ध्यताद्यु)पपत्तिरिति भावः । श्रीमदिति पृथग्वा पदम् । श्रीशब्देन तद्वपुषः स्वाभाविकी भूषणादिप्रभवा च शोभा गृह्यते । स्वोक्तेऽर्थे प्रमाणमपि वदन् वेदानुसारितामप्यस्य समाराधनस्य दर्शयति — निगमागमाद्यधिगतमिति । निगमो वेदः । आगमश्च विष्णुसंहितादितन्त्रम् । सदाचारादेरादिशब्देन ग्रहणम् । परदेवतानुसरणमाशीर्लक्षणं च मङ्गलाचरणमेवं कृतम् । परदेवतायाः समाराधनोचिततयानुस्मरणात् तत्समाराधनार्थनायाश्च अस्य समुचितत्वम् । किञ्च परदेवतात एवेयमर्थनार्थतो भवति । ततश्च अर्थनयैव सपरिकरसमाराधनसम्पत्तौ तदन्यतमस्यापि समाराधनक्रमगुणनिकासाधनस्यास्य ग्रन्थस्याविघ्नेन परिसमाप्त्याद्यपि लभ्यत इति । इह सपरिकरं समाराधनं विषयः । तत्साध्योऽनुग्रहश्च प्रयोजनमिति च अर्थात् प्रतिपादितम् । किञ्च षड्गुणसम्भृतं वपुरिति भूसंस्कारादिपूर्वकमाधारशिलादिस्तूप्यन्तप्रासादवपुषो ब्रह्मशिलाद्याधेयप्रतिमावपु(ष)श्च विरचनमपि सूचितम् । वपुरधिष्ठायेति तयोः स्वोचितसंस्कारादिपूर्वकं प्रतिष्ठापनं वाहनादि सर्वं सूचितम् । श्रद्धाभक्तिपवित्रितोपहरणैः सन्तर्पित इति समाराधनोत्सवौ । श्रीमदिति स्नापनं प्रायश्चित्तजीर्णोद्धारौ च । वक्ष्यति च—'विशुद्धिसान्निध्यसमृद्धिकारकम्' इति । बिम्बादेरशुद्धिजीर्त्त्यादिपरिहृतिरपि पुनश्शोभाहेतुर्भवति । कुण्डमण्डलादिलक्षणं तु इहैवान्तर्भूतमिति प्रतिपाद्यभेदा इहैव सूचिता इति ॥ १ ॥

गुरुदिवाकरभद्रकटाक्षरुक्-
स्फुरितहृत्कमलोदरसम्भृतम् ।
लिखितयाम्यथ तन्त्रसमुच्चयं
गुणनिकाविधिसाधनसिद्धये ॥ २ ॥

विमर्शिनी

एवमाशीर्वादरूपमङ्गलाचरणं कृत्वा गुरुस्मरणपूर्वकं ग्रन्थमारभते — **गुरुदिवाकरेति** । अथ गुणनिकाविधिसाधनसिद्धये तन्त्रसमुच्चयं लिखितयामि । अथेत्याशीर्वचनानन्तरम् । सकृद् गृहीताया विद्यायाः पुनरभ्यासो गुणनिका, गुणनिकैव विधिर्गुणनिकाविधिः, विधिः करणं, तस्य साधनसिद्धये साधनपरिग्रहाय । तन्त्रसमुच्चयं तन्त्राणां समुच्चयरूपत्वात् तन्नामकं ग्रन्थम् । लिखितयामि लिखितं करोमि, पुस्तकस्थं करोमि । ननु कथम्भूतं तन्त्रसमुच्चयमित्यत्राह — गुरुदिवाकरभद्रकटाक्षरुक्स्फुरितहृत्कमलोदरसम्भृतमिति । गुरुरेव दिवाकरो गुरुदिवाकरः सूर्यः, तस्य भद्राः प्रसादयुक्ताः कटाक्षा एव रुचो रश्मयस्तैः स्फुरितस्य विकसितस्य हृदयकमलस्योदरेऽन्तर्भागे सम्भृतं संगृहीतम् । यथा दिवाकररश्मिभिः कमलानि विकसन्ति, तथा गुरोः प्रसादयुक्तैः कटाक्षरश्मिभिर्हृदयकमलस्य विकासनं सञ्जातमिति रूपकालङ्कारच्छलेन स्वगुरोर्दिवाकरनामत्वमपि सूचितम् ॥ २ ॥

विवरणम्

मङ्गलाचरणेनाविघ्नसम्पत्तौ विषयादिप्रतिपादनेन श्रोतुः सपरिकरसमाराधनप्रतिचिकित्सोपपत्तौ च बाह्यं तत्प्रतिपादनप्रकारं तदुचितग्रन्थकरणे प्रतिज्ञानेन वदन् तदीयं प्रयोजनमपि दर्शयति — **गुरुदिवाकरेति** । अथ तन्त्रसमुच्चयं लिखितयामि इत्यन्वयः । तन्त्राणां वैष्णवशैवादीनां तद्भेदानां च विष्णुसंहितादीनाम् अर्थात् प्रतिष्ठासमाराधनाद्यर्थं समुच्चयस्तन्त्रसमुच्चयस्तम् । लिखितयामि लिखितं करोमि । पुस्तके विनिवेशयामीति यावत् । गुरुरेव दिवाकरो गुरुदिवाकरः तस्य भद्रास्सन्तः कटाक्षा एव रुचो रश्मयः ताभिः स्फुरितं विकसितं हृत्कमलं तदुदरे सम्भृतम् । सकलतन्त्रतो यथोपदेशमावश्यकमशेषमुपादायोपकल्पितमिति । नानातन्त्रगतस्य सपरिकरस्य समाराधनस्य तेषाम् अर्थतः

---

१. 'दम' ग. पाठः. २. 'का' ख. पाठः. ३. 'रोर्दिवाकरभद्रस्य कटाक्षस्य रश्मिभिः स्फु' ग. पाठः.

समुच्चयेन इदं प्रतिपादनमिति बाह्यः प्रतिपादनप्रकारोऽप्युक्तः । तथाप्रतिपादनं च लघुप्रयत्नेन प्रतिपत्त्यार्थात् सिद्धमेव । लिखितयामीति तथाग्रन्थकरणमुक्तम् । तत्प्रयोजनमुच्यते—गुणनिकाविधीति । गुरोः सकाशात् सकृत् प्रतिपन्नस्यार्थस्य स्थैर्यसिद्धये पुनःपुनरनुसन्धानरूपोऽभ्यासो गुणनिका, तस्यां विधिर्विधानं करणं तस्य साधनमुपाय आश्रयः तस्य सिद्धय इति । ग्रन्थद्वारा हि क्रियमाणा गुणनिका निरुपप्लवेति भावः । तदेतत् स्वं प्रयोजनं परार्थं चैतद्ग्रन्थकरणम् । ततश्च तदीयं प्रयोजनमप्येतत् । अत्र च गुरुदिवाकरेति दिवाकरो नाम निजगुरुः, तथा रविर्नाम स्वपिता च परिगृह्यते । ततश्च प्रकरणारम्भे परदेवानुस्मरणानन्तरं स्वगुर्वनुस्मरणमपि कृतमिति ॥ २ ॥

**श्रीशेशसेशहरिसुम्भजिदाम्बिकेय-**
**विघ्नेशभूतपतिनामविभिन्नभूम्नः ।**
**वक्ष्ये परस्य पुरुषस्य समानरूप-**
**मर्चाविधिं सह पृथक् च विशेषयुक्तम् ॥ ३ ॥**

विमर्शिनी

अथ चिकीर्षितग्रन्थस्य देवतानियमादिकमाह — **श्रीशेशेति** । श्रीशेशसेशहरिसुम्भजिदाम्बिकेयविघ्नेशभूतपतिनामविभिन्नभूम्नः, श्रीशो विष्णुः, ईशः शिवः, सेशहरिः शिवनारायणः, सुम्भजिद् दुर्गा, आम्बिकेयः स्कन्दः, विघ्नेशो गणपतिः, भूतपतिः शास्ता, एतैर्नामभिरेव विभिन्नं विशेषतः पृथग्भूतं भूम महत्त्वं यस्य तस्य । परस्य पुरुषस्य परमात्मनः, अर्चाविधिं पूजाविधानं वक्ष्ये । अर्चाविधिमित्यनेन भूपरिग्रहादितीर्थस्नानपर्यन्तं कर्म विवक्ष्यते । तत्र समानरूपम् एकप्रकारेण स्थितम् अर्चाविधिम् । सह एकरूपत्वेन । विशेषयुक्तं विशेषसहितम् । पृथक् च विभागेन ॥ ३ ॥

विवरणम्

ननु यद्यप्ययं तन्त्राणां समुच्चय आरभ्यते तथापि किंवपुषो देवस्येदं सपरिकरं समाराधनं, कथं वा अनेन समुच्चयेनापि तत्प्रतिपादनमित्यपेक्षया तत्सर्वं तन्त्रसमुच्चयप्रकारप्रतिज्ञानेन दर्शयति—**श्रीशेति** । श्रीशो विष्णुः, ईशः शिवः, सेशहरिः शङ्करनारायणः, सुम्भजिद् दुर्गा, आम्बिकेयः सुब्रह्मण्यः, विघ्नेशो गणपतिः, भूतपतिश्शास्ता, श्रीशादिसप्तनामभिर्विभिन्नो विष्ण्वादिमूर्त्तिरूपभेदतो विभक्तो भूमा स्वतोऽनवच्छिन्नमपि महत्स्वरूपं यस्य स

तथोक्तः । विष्ण्वादिवपुषः सप्तात्मकस्य देवस्येदं प्रतिष्ठादिपूर्वकं समाराधनमिति भावः । परस्य पुरुषस्येति । तं देवमिति प्रकृतस्येति भावः । समानरूपमर्चाविधिं सहेति । अर्चा प्रतिमा समाराधनं वा, तद्विषयं सर्वमपि समानरूपमेकतया वक्ष्ये इति । यथा -- स्नात्वाचम्याथ देवालयगुरुनिलयादाविति, क्षेत्रे वारिधिवर्गकोष्ठसुविचित्र इति । विशेषयुक्तमर्चाविधिं पृथक् (च) । चेन समुच्चयेन कचित् कचिद्विशेषोऽप्युक्तः । यथा---विष्णौ माषपयोऽधिकं स्मृतमिहार्घ्यमिति, शार्ङ्गीशदुर्गाजिते बीजौघ इति । अयमिहाभ्यन्तरः सपरिकरसमाराधनप्रकार इति ॥ ३ ॥

वर्णाश्रमाधिकृतकर्मरतस्तदुक्त-
न्यायात्तवित्तनिचयः परमस्य पुंसः ।
नित्यार्चनादिविधये प्रतिमाप्रतिष्ठा-
कर्मोन्मना गुरुवरं प्रथमं वृणीत ॥ ४ ॥

विमर्शिनी

कर्तृनियमं वदन् गुरुवरणं प्रस्तौति — वर्णाश्रमेति । वर्णाश्रमाधिकृतां कर्मरतः ब्राह्मणादिवर्णानां ब्रह्मचर्याद्याश्रमाणामधिकृतेषु विहितेषु कर्मसु रतः नित्योद्युक्तः । तदुक्तन्यायात्तवित्तनिचयः । तेषामुक्तेन न्यायेन ब्राह्मणानां याजनाध्यापनप्रतिग्रहैः, क्षत्रियाणां परिपालनादिभिः, वैश्यानां कृष्यादिभिः शूद्राणां त्रैवर्णिकशुश्रूषणेन इत्यादिन्यायेनात्तेन परिगृहीतेन वित्तनिचयेन धनसमुदायेन युक्तः । स्वाभीष्टदेवतात्मकस्य परमस्य पुंसः । नित्यार्चनादिविधये नित्यपूजोत्सवादिविधानाय । प्रतिमाप्रतिष्ठाकर्मोन्मनाः प्रतिमायाः प्रतिष्ठाकर्मण्युद्युक्तचेताः कर्ता । प्रथममादौ । गुरुवरं गुरुश्रेष्ठं वृणीत ॥ ४ ॥

विवरणम्

अथ प्रथमं तावद् अर्चाविधावधिकारिविशेषं वदन् तदीयं प्रथमकर्तव्यमपि विधत्ते --- वर्णाश्रमाधिकृतकर्मरत इति । ब्राह्मणादयो वर्णाः तेषु ब्रह्मचार्यादय आश्रमाः । वर्णग्रहणमनुलोमानां सूतकस्य चोपलक्षणार्थम् । तेष्वधिकृतानि कर्माणि सन्ध्योपासनाग्निहोत्रादीनि नित्यसमाराधनादीनि च श्रुतिस्मृत्यागमसिद्धानि तेषु रतः तात्पर्यप्रवृत्तः । तेषां वर्णाश्रमाणां वृत्त्यर्थमुक्तेन न्यायेन आत्त आर्जितो वित्तनिचयो निजवृत्तिदेवप्रतिष्ठादिपर्याप्तो येन स तथोक्तः । परमस्य पुंसो नित्यार्चनादिविधय इति । काम्यनैमित्तिकानामादिशब्देन ग्रह(ण)म् । श्रीशेशादिवपुषः परस्य पुरुषस्येति प्रकरणाल्लभ्यते ॥ ४ ॥

**विप्रः कुलीनः कृतसंस्क्रियौघः**
**स्वधीतवेदागमतत्त्ववेत्ता ।**
**वर्णाश्रमाचारपरोऽधिदीक्षो**
**दक्षस्तपस्वी गुरुरास्तिकोऽस्तु ॥ ५ ॥**

विमर्शिनी

गुरुलक्षणमाह — **विप्र** इति । विप्रो गुरुरस्तु ब्राह्मणो गुरुर्भवतु । सर्ववर्णेषु मध्ये ब्राह्मणस्यैव प्रतिष्ठादिकर्मण्यधिकार इत्यर्थः । तेषु मध्ये कुलीनः विशिष्टकुले जातः । तेष्वपि मध्ये कृतसंस्क्रियौघः संस्क्रियाः गर्भाधानाद्यग्न्याधानान्तिमाः क्रियाः, तासामोघः समूहः, स कृतो यस्य स तथोक्तः । तेष्वपि मध्ये स्वधीतवेदागमतत्त्ववेत्ता सुष्ठु सद्गुरुभ्यस्तदधीनो भूत्वाधीतानां पठितानां वेदानामागमानां चार्थस्य तात्पर्यस्य च ज्ञाता । तेष्वपि मध्ये वर्णाश्रमाचारपरः । वर्णाश्रमयोर्विहितेष्वाचारेषु तत्परः । तेष्वपि मध्येऽधिदीक्षोऽधिगतदीक्षः प्राप्तदीक्षः । तेष्वपि मध्ये दक्षः कर्मणि पटुः । तेष्वपि मध्ये तपस्वी बहुप्रकारतपोयुक्तः । तेष्वपि मध्य आस्तिक ईश्वरादिष्वस्तित्वबुद्धियुक्तः ॥ ५ ॥

विवरणम्

गुरुलक्षणमाह — **विप्र** इति । गुरुरस्त्विति सम्बन्धः । संस्क्रिया गर्भाधानादयः । तासामोघो यथाशक्ति निचयः । तत्त्वं तात्पर्यतः प्रतिपाद्यं वस्तु । अधिगता लब्धाः गुरुतः प्राप्ताः, दीक्षास्तन्त्रसिद्धाः संस्क्रियाः येन सोऽधिदीक्षः । तपांसि मासोपवासादीनि ॥ ५ ॥

**स्नात्वाचम्याथ देवालयगुरुनिलयाद्येषु सम्मार्जनाद्यै-**
**र्भूमिं संशोध्य सोदग्दशपटयुगदर्भासनेषूपवेश्य ।**
**आचार्यं मूर्तिपालानपि मनुमहितात्मेष्टविघ्नाधिराजः**
**संवन्द्यैतान्निदध्याच्छिवदिशि यजमानोऽर्घ्यपाद्यादिकानि ॥ ६ ॥**

विमर्शिनी

अथ गुरुवरणविधानमाह — **स्नात्वे**ति । अथ यजमानोऽर्घ्यपाद्यादिकानि निदध्यादिति सम्बन्धः । अथेत्यस्य धनधान्यादिसाधनसम्पत्तौ सत्यामुत्तरायणादिकाले च प्राप्त इत्यर्थः । यजमान इत्यस्यात्र वरणकर्मणि ब्राह्मणक्षत्रियेष्वन्यतमो[2] यजमानश्चेत् स्वयमेव वृणीत, वैश्यशूद्रानुलोमप्रतिलोमेष्वन्यतमश्चेद्

---

१. 'मा: ता' क. पाठः. २. 'ययोरन्य' क. ख. पाठः.

ब्राह्मणेन तत्कर्म कारयित्वा स्वयं तस्य दक्षिणां दत्त्वा तत्कर्म परिगृह्णीयादित्यभिप्रायः । किं कृत्वेत्यत्राह — स्नात्वाचम्येति । स्नानमाचमनं च विशेषतस्तदर्थं कर्तव्यमित्यभिप्रायः । देवालयगुरुनिलयाद्येषु कस्मिंश्चिद् देवालये गुरुगृहे वा, आद्यशब्देन स्वालयादौ वा गुरुमानीय्य । सम्मार्जनाद्यैर्भूमिं संशोध्य मुष्ट्यादिसादनपूर्वकं यथावत् स्थलशुद्धिं कृत्वा । सोदग्दशपट्युगदर्भासनेषु उदग्दशानामुदगग्राणां पटानां वस्त्राणां युगेन युग्मेन प्रागग्रैर्दर्भैश्च युक्तेष्वासनेषु । दक्षिणादिक्रमेण आचार्यं स्वगुरुम् । मूर्तिपालान् दीक्षाकाल एवाचार्येण दत्तां स्वां स्वां वासुदेवादिकां मूर्तिं पालयन्ति सेवन्ते इत्याचार्यशिष्या एव मूर्तिपालाः, तानपि । हस्तालम्बनपूर्वकं पूर्वाभिमुखानेवोपवेश्य । मनुमहितात्मा भूत्वा गुरुवन्दनादिपूर्वं स्वस्वमूलमन्त्रस्य सकलीकरणं शङ्खपूरणमात्माराधनं च कृत्वेत्यर्थः । इष्टविघ्नाधिराजश्च भूत्वा स्वबीजेन गणपतिमूलेन प्रदीपं चाराध्येत्यर्थः । एतान् गुरुमूर्तिपालान् संवन्द्य तदनुज्ञापुरस्सरं शिवदिशि ईशानकोणे अर्घ्यपाद्यादिकानि निदध्यात् ॥ ६ ॥

विवरणम्

इदानीं गुरुवरणं प्रस्तौति—स्नात्वाचम्येति* । अथ कर्ता स्नात्वाचम्येति योजनीयम् । कर्माङ्गतया स्नानमेतत् । देवालयगुरुनिलयादाविति स्वालयपुण्योद्यानादिग्रहणम् । स्वमन्त्राञ्चितात्मेति । यन्मन्त्रमूर्तिर्देवः प्रतिष्ठापयितुमभिमतस्तन्मन्त्र इह स्वमन्त्रोऽभिप्रेत, तस्य सकलीकरणमात्माराधनं च कृत्वेति भावः । भूमिं संशोध्येति । वरणमण्डपं संवृतोद्देशमेव वा सम्पाद्य तत्र स्थलं मुष्ट्यादिभिर्मार्जनालेपनाभ्यामेव वा शोधयित्वेत्यर्थः । सोदग्दशपट्युगदर्भासनेष्विति । उदग्दशयोः पटयोर्युगेन दर्भेण च सहितेष्वासनेष्वित्यर्थः । गुरोर्मूर्त्तिपानां च आसनानि पश्चिमोद्देशे दक्षिणादिक्रमेण निधाय तदुपर्युदग्दशतया वस्त्राणां द्वयं द्वयमास्तीर्य तदुपरि ह्रस्वदर्भांश्च कृत्वा तेष्वासनेष्विति भावः । उपवेश्येति हस्तग्रहणेनोप-

---

१. 'ये वा गु', २. 'चार्यं स' ख. पाठः.

---

*स्नात्वाचम्याथ देवालयगुरुनिलयादौ स्वमन्त्राञ्चितात्मा
भूमिं संशोध्य सोदग्दशपट्युगदर्भासनेषूपवेश्य ।
कर्ता स्नातान् यथार्हं गुरुमथ तदुदङ्मूर्त्तिपान् विघ्नमिष्ट्वा
दीपं चामून् प्रवन्द्येश्वरदिशि पुरतोऽर्घ्यादि सम्पादयेच्च ॥

इति विवरणपाठः.

वेशनमुक्तम् । यथार्हं स्नातानिति कर्माङ्गतया मन्त्रस्नानाद्यभिप्रायम् । यथार्हमुपवेश्येति पादप्रक्षाळनादिपूर्वकत्वमुक्तम् । किं च यथार्हं गुरुं मूर्तिपांश्चेति । यथार्हं सत इत्यर्थः । गुरुस्तावत् स्वयमेव देवः, तस्य कलाव्यष्टयो यथास्वं वासुदेवशर्वादिमूर्तयस्तद्रूपा मूर्त्तिपाः । तथा सतो गुरुं मूर्त्तिपांश्चेति भावः । तथानुसन्धानार्थमेतदुक्तम् । गुरुमपि तदुदङ्मूर्तिपानिति । दक्षिणासनादिक्रमेणेति भावः । विघ्नमिष्ट्वेति । तत्र प्राग्भागे स्थण्डिले स्वस्तिके वा गणपतिं निजबीजमन्त्रेण पूजयेत् । तद्विधानं च पूजापटले भविष्यति । दीपं चेति । इष्ट्वेत्यनुकर्षः । प्रणवेन श्रीबीजेन वा दीपपूजा । एतान् अमूनिति गुरुमूर्तिपान् । पुरत ईश्वरदिश्यर्घ्यादि सम्पादयेच्चेति सम्बन्धनीयम् ॥ ६ ॥

**न्यक् पात्राणि निधाय दर्भनिचये वस्त्राद्यपि प्रोक्षणी-**
**तोयैः प्रोक्ष्य सुसंस्कृतैरथ समुत्तानेषु पात्रेष्वपि ।**
**कूर्चं न्यस्यतु तारतोऽर्घ्यमपि पाद्याचामकं योजयि-**
**त्वाभ्यर्च्याभिमृशेत् स्वमूलमनुना मूर्त्याह्वयैर्वाङ्गकैः ॥ ७ ॥**

विमर्शिनी

सादनक्रममाह — **न्यगिति** । दर्भनिचये स्वस्येशभागे स्थण्डिलमालिप्य दर्भसमूहं विन्यस्य तत्र प्रोक्षणीपात्रेण सह चत्वारि पात्राणि न्यक् अधोमुखं निधाय । वस्त्राद्यपि वस्त्राङ्गुलीयकुण्डलयज्ञसूत्रभूषणादीन्यपि निधाय । सुसंस्कृतैः प्रोक्षणीतोयैः प्रोक्षणीसंस्कारं कृत्वा तज्जलैः प्रोक्ष्य । अथ धारणादिभिश्च संशोध्य । समुत्तानेषु पात्रेष्वपि प्रोक्ष्य तेषु तारतः कूर्चं न्यस्यतु । अर्घ्यं पाद्याचामकमपि पाद्यमाचमनीयं च स्वस्वद्रव्यैर्योजयित्वा स्वमूलमनुना मूर्त्याह्वयैः स्वस्वमूर्तीनां मन्त्रैः । अङ्गकैः स्वार्थ एव कप्रत्ययः । स्वस्वदानकाले वक्ष्यमाणैरङ्गैरेव वा अभ्यर्च्य अभिमृशेत् स्पृष्ट्वा जपेत् ॥ ७ ॥

विवरणम्

एतदेव विवृणोति — **न्यक्पात्राणी**ति । प्रागग्रे दर्भनिचये पश्चिमादिक्रमेण प्रोक्षणीपात्रमर्घ्यादिपात्रत्रयं च सादयेत् । वस्त्राद्यपीति वस्त्राङ्गुलीयककुण्डलयज्ञसूत्रादिग्रहणम् । सुसंस्कृतैः प्रोक्षणीतोयैरिति । प्रोक्षणीसंस्कारः कल्पप्रसिद्धः । यद्वा तन्त्रसिद्ध एव । यदाह —

"सकूर्चे गन्धपुष्पाढ्ये जले ताराभिमन्त्रिते ।
ध्यात्वा मन्त्रमयं ज्योतिः प्रोक्षणं द्रव्यशोधनम् ॥"

इति । समुत्तानेषु पात्रेष्वपि प्रोक्ष्येत्यन्वयः । मनुविदिति फडन्तप्रणवेन प्रोक्षणमुक्तम् । शोषणादि सर्वं सामान्यसिद्धम् । वस्त्रादिष्वपि प्रोक्षणमपिशब्देनोक्तम् । तारत इति योजने पूजने च मन्त्र उक्तः । स्वमूलमनुना मूर्त्याह्वयैरभिमृशेदित्येकः पक्ष उक्तः । इह सर्वेषामपि सर्वैरभिमन्त्रणं कार्यम् अङ्गैर्वेत्यपरः पक्षः । अत्र तु अर्घ्यस्य शिरसा पाद्यस्य हृदयेन आचमनीयस्य शिखयेत्यादि यथाविनियोगमङ्गनियमोऽवसेयः । पूजनाभिमन्त्रणे वस्त्रादिष्वपि भवतः ॥ ७ ॥

**विष्णौ माषपयोधिकं स्मृतमिहार्घ्यं पद्मपत्रादिकै-**
**स्तान्याच्छाद्य गुरुं समूर्तिपममुं संवन्द्य दद्यात् क्रमात् ।**
**पाद्याचामकमर्घ्यकं स्वमनुतो हृच्छीर्षशैखैस्तु वा**
**वस्त्रे द्वे कवचाणुनास्त्रमनुना स्वर्णाङ्गुलीयं तथा ॥ ८ ॥**

विमर्शिनी

विष्णौ इह वरणे अर्घ्यं माषपयोधिकं स्मृतम् । तानि पात्राणि पद्मपत्रादिभिराच्छाद्यामुं[1] गुरुं समूर्तिपं मूर्तिपैः सहितं संवन्द्य । पाद्याचामकमर्घ्यकं[2] क्रमात् पाद्याचमनीयार्घ्यक्रमात् । स्वमनुतः गुरुमूर्तिपानां मन्त्रैः । तेभ्यो दद्यात् । हृच्छीर्षशैखैस्तु वा हृदयशिरश्शिखामन्त्रैर्वा । त्विति पाद्यादिना पादशौचादिकं कर्तव्यमिति विशेषद्योतकः । तस्मिन् पक्षे वस्त्रे द्वे द्वे वस्त्रे कवचाणुना कवचमन्त्रेण । तथा स्वर्णाङ्गुलीयं सुवर्णशलाकादिभिर्बद्धं पवित्रमयमङ्गुलीयकम् । अस्त्रमनुना पञ्चाङ्गस्यावसेयत्वात् ॥ ८ ॥

विवरणम्

इहार्घ्यमिति । वरण एव, न तु सपर्यादिष्वित्यर्थः । पद्मपत्रादिभिरिति पलाशपत्रादिग्रहणम् । स्वमनुत इति । मूलेन गुरवे वासुदेवादिमन्त्रैर्विष्ण्वादिमन्त्रैर्वा तत्तन्मूर्तिपेभ्य इत्यर्थः । हृच्छीर्षशैखैस्तु वेत्यङ्गाभिमन्त्रणपक्षे द्रष्टव्यम् । स्वमनुत इत्यस्य वेत्यस्य च भूषान्तमनुवृत्तिरिष्यते ॥ ८ ॥

**दत्त्वास्त्रतः कुण्डलयज्ञसूत्र-**
**भूषास्ततः स्वाणुभिरर्चयित्वा ।**
**अर्घ्यं च दत्त्वा सहमूर्तिपालं**
**सम्भोजयेत् साज्यममुं पयोन्नम् ॥ ९ ॥**

---

१ 'द्याथामुं' ग. पाठः. २. 'कं पा' क. ख. पाठः.

विमर्शिनी

कुण्डलादीनां को मन्त्र इत्यत्राह— दत्त्वास्त्रत इति । कुण्डलयज्ञसूत्र-भूषाः स्वर्णमयं कुण्डलयुगं यज्ञसूत्रं चन्दनादि च अस्त्रतो दत्त्वा । ततः स्वाणुभिः स्वस्वमन्त्रैर्जलगन्धपुष्पधूपदीपाक्षतैरर्चयित्वा । पुनरप्यर्घ्यं दत्त्वा सहमूर्तिपालं मूर्तिपालैः सहितममुं गुरुं साज्यं पयोन्नं पायसं सम्भोजयेत् सम्यग् यथाभिलषितं भोजयेत् ॥ ९ ॥

विवरणम्

भूषाः उष्णीषकटकाद्यलङ्काराः । ततः स्वाणुभिरित्येतदङ्गपक्षेऽपि समानम् । स्वाणुविदिति वा पाठः । अङ्गपक्षे गुरुमूर्तिपानामप्यर्चने मूलमेव मन्त्र इह लभ्यते । सघृतं पयोन्नमिति । पायसं घृतप्रधानमुपसेचनादियुक्तमिति भावः ॥ ९ ॥

**भुक्त्वाचान्तेष्वेषु दत्त्वावसानी-**
**याध्यं तेभ्यो भुक्तसत्कारपूर्वम् ।**
**आलिप्योर्वीं तान् प्रणम्याभिवाद्य**
**प्रार्थ्यानेनालम्ब्य पाणौ वृणीत ॥ १० ॥**

विमर्शिनी

भुक्त्वा एषु गुरुमूर्तिपेषु आचान्तेषु कृताचमनेषु सत्सु । तेभ्यो भुक्तसत्कारपूर्वं भोजनानन्तरं योग्याः सत्कारास्ताम्बूलापूपादयः ते पूर्वं यथा भवति तथा । अवसानीयार्घ्यं अवसानभवमर्घ्यं दत्त्वोच्छिष्टादिकमुद्धृत्य उर्वीं भूमिमालिप्य तान् प्रदक्षिणीकृत्य प्रणम्याभिवाद्य प्रसादं प्रार्थ्य । पाणौ दक्षिणकरे दक्षिणकरेणालम्ब्यानेन मन्त्रेण वृणीत ॥ १० ॥

विवरणम्

भुक्त्वाचान्तेष्विति करमुखशोधनादिपूर्वमाचमनमुक्तम् । भुक्तसत्कारपूर्वमिति । ताम्बूलपूगफलमोदकादिदानमुक्तम् । दक्षिणापि यथाशक्तीष्यत एव । यदाह— "शक्त्या दत्त्वा च दक्षिणाम्" इति । तान् प्रणम्येति । तत्तन्मन्त्रैरिति शेषः ॥ १० ॥

**मया सम्पूजितैरत्र दक्षिणाभिश्च तोषितैः ।**
**क्रियतां विष्णुयागो मे प्रार्थयामि प्रसीदत ॥ ११ ॥**

विमर्शिनी

वरणमन्त्रं पठति— मया सम्पूजितैरिति ॥ ११ ॥

विवरणम्

प्रार्थनामन्त्रमाह — मयेति । सकृन्मन्त्रप्रयोगः पाणावालम्ब्य वृणीतेति क्रियतां विष्णुयागो म इति प्रार्थनायां वरणे च साधारणम् । ततश्च सकृन्मन्त्रोच्चारणेन प्रार्थना गुर्वादिकरग्रहणरूपं वरणं च कार्यम् । वक्ष्यति च — "सङ्ग्रहेण वरणक्रियाक्रमः" इति । यद्वा प्रार्थनाया-मेवायं मन्त्रः । वरणं तु पुनः स्यात् । यदुक्तं— "इत्युक्त्वा दक्षिणे पाणावा-लम्ब्य वरयेत् ततः" इति । वरणं त्वेवं वा स्यात् । 'ओं विष्णुयागे गुरुकर्म क्रियताम् ओं विष्णुयागे मूर्तिपकर्म क्रियताम् इति, ओं विष्णुयागे गुरुं त्वां वृणे गुरुकर्म क्रियतां विष्णुयागे मूर्तिपं त्वां वृणे मूर्तिपकर्म क्रियताम्' इति वा ॥११॥

**स्वस्वदोस्समवलम्बने वद-**
**न्त्वों तथेति गुरुमूर्तिपालकाः ।**
**इत्यभाषि हरिसुम्भविद्विषोः**
**संग्रहेण वरणक्रियाक्रमः ॥ १२ ॥**

विमर्शिनी

ते गुरुमूर्तिपालकाः स्वस्वदोस्समवलम्बने स्वस्वकरग्रहणे 'ओं तथा' इति वदन्तु । प्रथमं गुरोर्वरणं कृत्वा मूर्तिपालानपि पृथक् पृथग् वृणुयात् । तदा तदा स स मूर्तिपः 'ओं तथे'ति वदत्वित्यर्थः । हरिसुम्भविद्विषोः विष्णु-दुर्गयोः वरणक्रियाक्रमः वरणक्रियाविधिः । संग्रहेण संक्षेपेण इति अभाषि उक्तः ॥ १२ ॥

विवरणम्

सङ्ग्रहेणेति । अनेन समाचारे विशेषोऽपि सूचितः ।

"दत्त्वा कूर्चान्यथैतेषामासनार्थं तु वाग्यतः ।
सपवित्रैर्जलैः पादौ क्षालयेद्धृदयेन तु ॥" इत्यादि ॥ १२ ॥

**पाद्याद्यङ्गानि क्रमात् स्वाभिषेके**
**वक्ष्ये मूलं स्याद् गुरोर्मूर्तिपानाम् ।**
**मन्त्राः स्वे स्वे मूर्तिमन्त्राः शिवादि-**
**ष्विष्टे पाद्यादिक्रमान्न्यासदाने ॥ १३ ॥**

---

१. 'याया वि' क. पाठः.

विमर्शिनी

**पाद्याद्यङ्गानि** पाद्यादीनां द्रव्यभेदान् । स्वाभिषेके स्वस्वद्रव्यकलशविधौ क्रमाद् वक्ष्ये । गुरोः मूलं मन्त्रः स्यात् । मूर्तिपानां स्वे स्वे मूर्तिमन्त्राः वासुदेवादयो मन्त्राः स्युः । शिवादिषु देवेषु पाद्यादिक्रमात् पाद्यार्घ्याचमनीयक्रमात् न्यासदाने न्यासं सादनं प्रदानं च इष्टे भवतः ॥ १३ ॥

विवरणम्

**स्वाभिषेक** इति । विष्णुदुर्गयोः शिवादीनामपि स्नपनप्रकरण इत्यर्थः । मूलं स्याद् गुरोरिति शिवाद्यभिप्रायमेव । तेन शिवादिषु मूलपक्ष एवास्ति नत्वङ्गपक्ष इत्यपि प्रतिपादितं भवति । स्वे स्वे मूर्तिमन्त्रा इति । अयमिह मूर्तिविभागः । विष्णौ वासुदेवादयश्चत्वारो विष्ण्वादयोऽष्टौ केशवादयो द्वादश । दुर्गायां पौरुष्याद्याश्चत्वारो जयाद्या अष्टौ । शिवे तत्पुरुषादयश्चत्वारश्शर्वादयोऽष्टौ । उभये द्वादश । शङ्करनारायणे तु शैववैष्णवा व्यामिश्राः । स्कन्दे सनत्कुमारस्कन्दादयः षट् । गणपतौ विघ्नविनायकादयश्चत्वारो गणञ्जयादयोऽष्टौ । उभये द्वादश । शास्तरि प्रभुगोप्तृमहाशास्तृरेवन्ताश्चत्वारो गोप्त्रादयोऽष्टौ । उभये द्वादश । सर्वेष्वपि तु यावतामुपर्यधिवासहोमादिकार्यं तावतामिह वरणम् । वक्ष्यति हि—"स्वहवनाद्यनुसृत्ये"ति । न्यासदाने इति न्यासस्सम्पादनम् । सर्वेषु मूलमूर्तिमन्त्राः पूजाकर्मशेषभाविन एव ॥ १३ ॥

**शर्वायक्षित्यादिप्रभिन्नात्मवर्णो**
**ङेनत्यन्तः स्यान्मूर्तिपाणुर्महेशे ।**
**तेषां नत्यां क्षित्यादिमन्त्रा गुरोस्तु**
**शैवी गायत्री त्र्यम्बकायेत्यणुर्वा ॥ १४ ॥**

विमर्शिनी

**महेशे** शिवे शर्वायक्षित्यादिप्रभिन्नात्मवर्णः 'शर्वाय क्षिति' इत्यादिभिः सम्भिन्नो युक्त आत्मवर्णः आत्म इति वर्णः । ङेनत्यन्तः, ङे चतुर्थ्येकवचनं तद्, नतिः नम इति च अन्ते अवसाने यस्य स तथा । 'शर्वाय क्षित्यात्मने नमः' इति द्रष्टव्यः । मूर्तिपाणुः मूर्तिपानामणुः मन्त्रः । तेषां मूर्तिपानां नत्यां नमस्कारे क्षित्यादिमन्त्राः क्षितीत्यादिः यस्य स क्षित्यादिः, क्षित्यादिरादिर्येषां ते क्षित्यादिमन्त्राः । गुरोस्तु तस्यां शैवी गायत्री तन्महेशायेत्याद्या मन्त्राः, त्र्यम्बकायेत्यणुर्वा । त्र्यम्बकायेति मन्त्रः मङ्गलाङ्कुररोपणे वक्ष्यते ॥ १४ ॥

---

१. 'दिः क्षित्यादिरा' क. पाठः.

विवरणम्

शिवे त्वस्ति विशेष इति मन्यमानस्तस्मिन् मूर्तिमन्त्रानुद्धरति **शर्वाय-क्षित्यादिप्रभिन्नात्मवर्ण** इति। यथा— ओं शर्वाय क्षित्यात्मने नमः, ओं रुद्रायाग्न्यात्मने नमः, इत्यादि। मूर्तिपाणुरिति मूर्तिपानां मन्त्राः। त्र्यम्बकायेत्यणुर्वेति बीजवापे वक्ष्यमाणस्य ग्रहणम् ॥ १४ ॥

**शर्वो रुद्रः पशुपतिरथेशानयुक्तौ भवोग्रौ**
**प्रोक्ताः शर्वादय इति महादेवभीमौ च ते स्युः।**
**क्षित्यग्न्याख्यौ त्रिपुरजयिनो यज्ञसूर्यौ जलाख्यं**
**वायुं सोमं समभिदधते व्योम चाप्यष्टमूर्तीः ॥ १५ ॥**

विमर्शिनी

शर्वादीनाह— शर्व इति। अथ शर्वः रुद्रः पशुपतिः ईशानयुक्तौ ईशानसहितौ भवोग्रौ ईशानो भव उग्रश्चेत्यर्थः। महादेवभीमौ महादेवो भीमश्च। ते शर्वादयः प्रोक्ताः स्युः। क्षित्यग्न्याख्यौ क्षितिमग्निं च। यज्ञसूर्यौ यज्ञं सूर्यं च। जलाख्यं जलमित्याख्या यस्य स जलाख्यः, तं च। वायुं सोमं व्योम च। त्रिपुरजयिनः शिवस्य। अष्टमूर्तीः अष्टमूर्तिसंज्ञाः। समभिदधते ब्रुवते। बुधा इति शेषः ॥ १५ ॥

विवरणम्

शर्वादिमूर्तिमन्त्रान्तर्गतान् पठति— **शर्वो रुद्र** इति। क्षित्यादीनपि पठति — क्षित्यग्न्याख्याविति ॥ १५ ॥

**क्षितिर्वै धार्यते लोकान् लोकाः क्षितिमयाः स्मृताः।**
**सर्वगं क्षितिरूपं ते क्षितिमूर्ते! नमोऽस्तु ते ॥ १६ ॥**

**अग्निर्वै धार्यते लोकान् लोका अग्निमया स्मृताः।**
**सर्वगमग्निरूपं ते अग्निमूर्ते नमोऽस्तु ते ॥ १७ ॥**

**यज्ञो धारयते लोकान् लोका यज्ञमयाः स्मृताः।**
**सर्वगं यज्ञरूपं ते यज्ञमूर्ते! नमोऽस्तु ते ॥ १८ ॥**

**सूर्यो धारयते लोकान् लोकाः सूर्यमयाः स्मृताः।**
**सर्वगं सूर्यरूपं ते सूर्यमूर्ते! नमोऽस्तु ते ॥ १९ ॥**

जलं वै धार्यते लोकान् लोका जलमयाः स्मृताः ।
सर्वगं जलरूपं ते जलमूर्ते ! नमोऽस्तु ते ॥ २० ॥
वायुर्धारयते लोकान् लोका वायुमयाः स्मृताः ।
सर्वगं वायुरूपं ते वायुमूर्ते ! नमोऽस्तु ते ॥ २१ ॥
सोमो धारयते लोकान् लोकाः सोममयाः स्मृताः ।
सर्वगं सोमरूपं ते सोममूर्ते ! नमोऽस्तु ते ॥ २२ ॥
व्योम धारयते लोकान् लोका व्योममयाः स्मृताः ।
सर्वगं व्योमरूपं ते व्योममूर्ते ! नमोऽस्तु ते ॥ २३ ॥

विमर्शिनी ।

नमस्कारमन्त्रान् पठति —क्षितिर्वै धार्यत इत्यादि ॥ १६–२३ ॥

विवरणम् ।

मूर्तिपानां नमस्कारमन्त्रानपि पठति— क्षितिर्वै इति ॥ १६—२३ ॥

स्वस्वनाम वरणाणुविष्णुशब्दास्पदेऽत्र सुयुनक्तु युक्तितः ।
वास्तुसंग्रहपुरःसराणुना बाहुलेयविषये वृणीत तान् ॥ २४ ॥
वास्तुसंग्रहमारभ्य तीर्थस्नानावसानिकम् ।
क्रियतां स्कन्दयागो मे प्रार्थयामि प्रसीदत ॥ २५ ॥

विमर्शिनी ।

अत्र वरणाणुविष्णुशब्दास्पदे वरणाणोर्वरणमन्त्रस्य 'मया संपूजितैरि'-त्यस्य विष्णुशब्दास्पदे विष्णुशब्दस्य स्थाने । स्वस्वनाम शिवादिनाम । युक्तितः पद्याविरोधेन । सुयुनक्तु 'क्रियतां शिवयागो मे' इत्यादिप्रकारेण युञ्ज्यादित्यर्थः । बाहुलेयविषये बाहुलेयः स्कन्दः तद्विषये वरणे । तान् गुरुमूर्तिपान् । वास्तुसंग्रहपुरस्सराणुना वास्तुसंग्रहमिति पुरतः सरति गच्छतीति वास्तुसंग्रहपुरस्सरः । 'वास्तुसंग्रहमि'त्यादिना मन्त्रेण वृणीतेत्यर्थः ॥ २४–२५ ॥

विवरणम् ।

सर्वेषु प्रार्थनामन्त्रे विशेषं दर्शयति — **स्वस्वनामे**ति । मया सम्पूजितैरित्ययं वरणमन्त्रः, तस्मिन् विष्णुशब्दस्य स्थाने । स्वस्वनाम युक्तितस्सुयुनक्त्विति । पूर्वानुरोधेनेति भावः । यथा दुर्गायागो मे क्रियताम् । शिवयागो मे (क्रियतां) हरीशयागः क्रियतामित्यादि ॥ २४ ॥

सङ्ग्रहेण तु मन्त्रान्तरमाह — वास्तुसङ्ग्रहेत्यादि । नाममन्त्रेणेत्यर्थः ॥ २५ ॥

एवं गुरुं गुरुनियोगकृतो विनीतान्
विप्रान् विधानकुशलानपि मूर्तिपालान् ।
सर्वेष्वपीह चतुरो द्विगुणान् वृणीत
षड्वा तथा स्वहवनाद्यनुसृत्य कर्ता ॥ २६ ॥

विमर्शिनी ।

वरणकर्मोपसंहरन् मूर्तिपलक्षणमाह— एवमिति । कर्ता सर्वेष्वपि देवेषु एवमुक्तेन प्रकारेण गुरुम् । इह मूर्तिपवरणे । गुरुनियोगकृतः गुरोर्नियोगं कुर्वन्तीति गुरुनियोगकृतः, तान् । विनीतान् स्वतः क्षमाशीलान् । विधानकुशलान् कर्मसु विदग्धान् विधिज्ञांश्च । विप्रान् ब्राह्मणानेव मूर्तिपालानपि । चतुरः चतुःसङ्ख्यान् । द्विगुणान्[1] तद्द्विगुणान् अष्टौ वेत्यर्थः । तथा षड् वा द्वादश वा, यथा चतुःसङ्ख्योक्तिः । स्वहवनादि स्वस्वहोमादिकर्माणि[2] । अनुसृत्य विमृश्य वृणीत ॥ २६ ॥

विवरणम् ।

मूर्तिपानां लक्षणं सङ्ख्यां च वदन् वरणमुपसंहरति— एवं गुरुमिति । षड्वेति स्कन्दविषयम् । वक्ष्यति च—"षाण्मातुरे षट्स्वि"ति । स्वहवनाद्यनुसृत्येति । अधिवासहोमाद्यनुसारेणेत्यर्थः । यावन्तोऽधिवासहोमाः तावन्तोऽवश्यं मूर्तिपाः स्युः । यत उक्तम् —

"चतुर्भिर्मूर्तिपैस्सार्धमष्टद्वादशभिस्तु वा ।"

इति । एकहोमोपपत्तौ तु अन्यत्रापि मूर्तिपोपयोगाद् एकोऽपि वरणीयः । आदिशब्देन दिशाहोमचतुर्थदिनस्नपनादि गृह्यते । तत्रापि बलिपीठद्रव्यकलशबहुत्वात् तत्पूजौचित्येन मूर्तिपसङ्ख्यानियमात् प्रायश्चित्तहोमो वा दिशाशब्देनाभिप्रेतः । तत्राप्यनया रीत्या वरणं कार्यमित्यप्यर्थादवसीयते । यदुक्तम् —

"प्रार्थितस्त्वेवमाचार्यो मूर्तिपालैः समन्वितः ।
स्थानशुद्धिं ततः कुर्याद्"

१. 'न् अ' ख. पाठः. २. 'र्माणि वि' ग. पाठः.

इत्यादि । एवं जीर्णोद्धारेऽपि । अथवा स्वहवनाद्यनुसृत्य वृणीतेति । स्वीयहोमपूजादौ स्वस्याधिकारे सति कर्ता स्वयं वृणीतेति । तदनधिकारे तु परेणैव वरणं कारयेत् । तत्रापि वरणमात्रं तु स्वयं कुर्यादिति । शूद्रादेर्न होमादावधिकारः । तदुक्तम्—

"व्याख्या(?)स्थापितदेवार्चाहोमेष्वस्य न कर्तृता ।
दीक्षितस्यापि किन्त्वेष कामं विप्रैस्तु कारयेत् ॥" इति ॥ २६ ॥

**यियक्षुणाचार्यवरो वृतोऽथ समूर्तिपः कर्म समातनोतु ।**
**प्रतिश्रुतं भूमिपरिग्रहादि तीर्थाभिषेकावधिकं क्रमेण ॥ २७ ॥**

विमर्शिनी ।

एवं यजमानस्य कर्माभिधाय गुरोः कर्मोद्दिशति — **यियक्षुणेति** । अथ यियक्षुणा यष्टुमिच्छावता । यजनं नाम भूपरिग्रहादि तीर्थस्नानपर्यन्तं कर्म विवक्ष्यते । यजमानेन वृत आचार्यवर इत्यनेन प्रतिष्ठादिकर्मण्याचार्यश्रेष्ठस्यैवाधिकार इत्युक्तम् । समूर्तिपः मूर्तिपैर्युक्तः । भूमिपरिग्रहादि भूमिपरिग्रहमारभ्य । तीर्थाभिषेकावधिकम् उत्सवान्तगततीर्थस्नानमवधीकृत्य । यत् कर्म स्वेन प्रतिश्रुतं प्रतिज्ञातं, तत् क्रमेण समातनोतु कुर्यात् ॥ २७ ॥

विवरणम् ।

अथ वृतस्य गुरोः कृत्यं वदन् वक्ष्यमाणकर्मसु तस्यैव सम्प्रत्यय इत्यपि नियमयति— यियक्षुणेति । भूपरिग्रहादितीर्थस्नपनान्तं कर्मेह यजनम् । प्रतिश्रुतं, वरणसमय ओं तथेति प्रतिज्ञातम् ॥ २७ ॥

**तीर्थान्ते तटिनीतटे जलनिधेस्तीरे सरित्सङ्गमे**
**शैलाग्रेऽद्रितटे वनोपवनयोरुद्यानदेशे तथा ।**
**सिद्धाद्यायतनेषु वा गुरुवरो ग्रामे पुरे पत्तने**
**देशेऽन्यत्र मनोरमे सुरसमिज्यायै क्षितिं कल्पयेत् ॥ २८ ॥**

विमर्शिनी ।

सर्वदेवानां सामान्येन प्रतिष्ठास्थानान्याह— **तीर्थान्त** इति । तीर्थान्ते तीर्थसमीपे । तटिनीतटे नदीतीरे । जलनिधेस्तीरे, जलनिधिः समुद्रः तस्य तीरे । सरित्सङ्गमे नद्योर्मिथः सङ्गमे नदीसमुद्रसङ्गमे च । शैलाग्रे पर्वतोपरिभागे ।

---

१. 'द्वासान्त' ग. पाठः.

अद्रितटे पर्वतस्य पार्श्वप्रदेशे । वनोपवनयोः वने उपवने च । उपवनं ग्रामसमीपस्थारण्यम् । उद्यानदेशे उद्यानं कृत्रिमोपवनम् । वातथाशब्दौ विकल्पद्योतकौ । सिद्धाद्यायतनेषु, सिद्धास्तपआदिभिः कृतकृत्याः, तेषां तादृशानामन्येषां चायतनेष्वाश्रयस्थानेषु । ग्रामे विप्रसमूहस्यावासे । पुरे राजधान्याः समीपे । पत्तने नगराभ्याशे । अन्यत्र मनोरमे च देशे । गुरुवरः सुरसमिज्यायै देवप्रतिष्ठाविधये क्षितिं कल्पयेत् । अत्र पूर्वपूर्वोक्तानि स्थानानि श्रेष्ठानीत्यवगन्तव्यम् ॥ २८ ॥

विवरणम् ।

तत्र प्रथमं भूपरिग्रहं विवक्षन् परिग्राह्याया भुवो लक्षणपरीक्षाभ्यामवधारणमिति तदभिधित्सायाः पूर्वं तावत् तद्भूसमुचितान् प्रदेशानुपदिशति — **तीर्थान्त** इति । अन्तशब्दः समीपवचनः । तटिनी नदी । सिद्धाद्यायतनेषु वेति । यत्र सिद्धाः सिद्धिं प्राप्तास्तत् सिद्धायतनम् । सिद्धद्याद्यायतनेषु वेति वा पाठः । आदिशब्देन धर्मायतनादिग्रहणम् । वेति सर्वत्र योज्यम् ॥ २८ ॥

**प्राचि प्रतीचि च हरौ निजदिश्युमेशे**
**वायौ निसुम्भजिति तारकजित्युदीच्याम् ।**
**ग्रामादिकेषु निर्ऋतौ गणपार्यनाम्नो-**
**र्गृह्णातु भूमिमखिलेष्वपि मध्यतो वा ॥ २९ ॥**

विमर्शिनी ।

अथ ग्रामे पुरे पत्तन इत्युक्तेषु ग्रामादिकेषु विष्ण्वादीनां देवानां स्थाननियममाह— **प्राचीति** । हरौ ग्रामादिकेषु प्राचि प्राग्भागे प्रतीचि च प्रत्यग्भागे भूमिं गृह्णातु । उमेशे शिवे निजदिशि ईशभागे । निसुम्भजिति दुर्गायां वायौ वायुभागे । तारकजिति स्कन्दे उदीच्यां उदग्भागे । गणपार्यनाम्नोः गणपतौ शास्तरि च निर्ऋतौ निर्ऋतिभागे । अखिलेषु विष्ण्वादिसप्तस्वपि मध्यतो वा मध्यभागे वा ॥ २९ ॥

विवरणम् ।

सुरसमिज्यायै देवप्रतिष्ठापनार्थं ग्रामादिष्वपि प्रदेशविशेषानाह— **प्राचीति** । ग्रामादिकेषु प्राचि प्रतीचि चेत्यन्वयः । उमेशे निजदिशीति । ऐशान्यामित्यर्थः । अखिलेष्वपि मध्यतो वेति । शिवनारायणे मध्यतः । तदितरेषु सर्वेष्वपि मध्यतो वेत्यर्थः । स्वपदे गिरीशे वायौ निसुम्भजिति इति वा पठनीयम् । तेन प्रागादि सर्वमपि वास्तुपदमिति विशेषो लभ्यते । ग्रामपुरादिभूमण्डला

सप्तवर्गकोष्ठतयाष्टवर्गकोष्ठतया नववर्गकोष्ठतया वा विभज्य मध्यतः कोष्ठचतुष्कं कोष्ठनवकं वा ब्राह्मं पदं सङ्कल्य तत्परितो दैवमानुषपैशाचावरणान्येकैकपरिपङ्क्त्या कल्पयेत् । तत्र पैशाचे प्राचि प्रतीचि चोद्देशे हरेः स्थानम् । सोमभृशपदोपलक्षणमेतत् । न चैष नियमः । यदाह—

"अन्तरालेषु सर्वेषु दिक्षु चैवं विदिक्षु च ।
सर्वत्र वैष्णवं गेहं ग्रामस्य नगरस्य च ॥"

इति । स्वपद इति पर्जन्यजयन्तपदोपलक्षणम् । नाप्येष नियमः । यदप्याह—

"अष्टदिक्षु च कर्तव्यं ग्रामादिषु शिवालयम् ।
पैशाचिकपदे कुर्यादालयं तु पराङ्मुखम् ॥" इति ।

"मानुषे तु पदे वाथ कर्तव्यं शिवमन्दिरम् ।" इति ।

"स्वयम्भुदैविकं चार्षं यत्र तत्र स्थितं तु वा ।
न दोषाय भवेत् तस्याप्यग्रं वर्ज्यं शुभार्थिभिः ॥"

इति । वायाविति मुख्यसोमोपलक्षणम् । उदीच्यां सोमपदे यमवरुणेन्द्राग्निपदोपलक्षणमेतत् । निर्ऋताविति । विघ्ने शोषनागमुख्यभल्लाटसोमपदोपलक्षणम् । शास्तरि तु यमादितिपदोपलक्षणम् । शिवोक्तस्थानेष्वपि शिवनारायणः स्यात् । दैवमानुषयोरपि प्रोक्तस्थानेषु स्कन्दस्थापनमिष्यते इति ॥ २९ ॥

**गोमर्त्यैः फलपुष्पदुग्धतरुभिश्चाढ्या समा प्राक्प्लवा**
**स्निग्धा धीररवा प्रदक्षिणजलोपेताशुबीजोद्गमा ।**
**सम्प्रोक्ता बहुपांसुरक्षयजला तुल्या च शीतोष्णयोः**
**श्रेष्ठा भूरधमा समुक्तविपरीता मिश्रिता मध्यमा ॥ ३० ॥**

विमर्शिनी ।

अथ भूमेरुत्तमादित्वमाश्रित्य भेदमाह— **गोमर्त्यैरिति** । गोभिर्मर्त्यैश्चाढ्या आश्रिता । फलपुष्पदुग्धतरुभिः फलवद्भिः पुष्पवद्भिः क्षीरवद्भिश्च वृक्षैराढ्या पूर्णा । समा निम्नोन्नतवर्जिता । प्राक्प्लवा प्राग्भागनिम्ना । स्निग्धा निबिडा । धीररवा गम्भीरस्वरा । प्रदक्षिणजलोपेता प्रादक्षिण्येन नद्यादिनोपलक्षिता । आशुबीजोद्गमा बीजावापे शीघ्रमुद्गच्छदङ्कुरा । बहुपांसुः खात्वा तत्पांसुभिरेव पूरिते गर्तातिरिक्तपांसुयुक्ता । अक्षयजला ग्रीष्मेऽपि प्रभूतजलयुक्ता । शीतोष्णयोस्तुल्या शीतकाले चोष्णकाले च तुल्या, शैत्याधिक्येनौष्ण्याधिक्येन च

रहिता । एवम्भूता भूमिः श्रेष्ठा उत्तमा सम्प्रोक्ता । समुक्तविपरीता उक्तलक्षण-वैपरीत्ययुक्ता अधमा । मिश्रिता मिश्रलक्षणयुक्ता मध्यमा ॥ ३० ॥

विवरणम् ।

हेयोपादेयभूविशेषलक्षणमाह— **गोमत्यैरिति** । फलपुष्पदुग्धतरुभिरिति । फलतरुभिः पुष्पतरुभिः दुग्धतरुभिश्च । समा निम्नोन्नतरहिता । प्राग्जलस्य प्लवो यत्र सा प्राक्प्लवा । प्रागित्युदगैशोद्देशोपलक्षणम् । स्निग्धता चिक्कणता । यस्यां दण्डाद्याघाते गम्भीरो ध्वनिः प्रवर्तते सा धीररवा । आशुबीजोद्गमेति । यदुक्तम्— 'यत्र बीजानि त्रिरात्रेण प्ररोहन्ति सोत्तमा' इति । बहुपांसुरिति । यदप्युक्तम् —

"हस्तमात्रं समं खात्वा तन्मृदा पूरयेत् पुनः ।
मृत्सयाधिकया श्रेष्ठा समया मध्यमा हि भूः ॥"

इति । अक्षयजलेति । यदपि चोक्तम् —

"तत्खातं वा जलापूर्णं कृत्वा पादशतं व्रजेत् ।
पुनरागच्छतः प्राग्वत् पूर्णं चेद् भूमिरुत्तमा ॥"

इति । समुक्तविपरीतेति । यथा गोमत्यन्यतिरिक्तसत्त्वैरत्यन्ताविद्यमानफलपुष्पदुग्धतरुभिश्च युक्तेत्यादि । मिश्रिता मध्यमेति पूर्ववदूह्यम् । द्वयोर्लक्षणयोर्मध्यभाक्त्वं मिश्रितत्वम् । यदुक्तम् । "समया मध्यमा हि भूः" इत्यादि । किं च नानालक्षणद्वयसन्निपातोऽपि मिश्रितत्वम् । यथा—गोमत्यैरफलपुष्पदुग्धतरुभिश्चाढ्या" इत्यादि ॥ ३० ॥

**वृत्तार्धेन्दुनिभा त्रिपञ्चरसकोणा शूलशूर्पाकृति-**
**र्मत्स्यानेकपकोलपृष्ठकपिलावक्त्रोपमा मेदिनी ।**
**भस्माङ्गारतुषास्थिकेशकृमिवल्मीकादिभिः संयुता**
**वर्ज्या मध्यनता सगर्भकुहरा विस्रा विदिक्स्थापि च ॥**

विमर्शिनी ।

अथ भूमेर्वर्जनीयलक्षणान्याह— **वृत्तेति** । वृत्ता स्वत एव वृत्ताकारा । अर्धेन्दुनिभा अर्धचन्द्राकारा । त्रिपञ्चरसकोणा त्रिकोणा पञ्चकोणा षट्कोणा च । शूलशूर्पाकृतिः शूलाकृतियुक्ता शूर्पाकृतियुक्ता च । मत्स्यानेकपकोलपृष्ठकपिला-

१. 'कूर्मपृ इति मूलकोशपाठः.

वक्रोपमा मीनद्विपवराहाणां पृष्ठसमाना पशुमुखसमाना च । भस्माङ्गारतुषास्थि-केशकृमिवल्मीकादिभिः संयुता भस्मभिः कृष्णाङ्गारैः (അംഗാരം=കരിക്കട്ട) तुषैः (തുഷം=ഉമി) अस्थिभिः केशैः कृमिभिर्वल्मीकैर्युक्ता[1]। (अत्र[2] पृष्ठसमानपशु-मुखसमानरधधार्थं तथा च प्रसिद्धे तर्वा?) मध्यनता मध्यभागनिम्ना । सगर्भकुहरा अन्तर्भागे बिलयुक्ता । विस्रा दुर्गन्धयुक्ता । विदिक्स्थापि च कोणगतदैर्घ्यवि-स्तारयुक्ता च । एवंभूता मेदिनी भूमिर्वर्ज्या ॥ ३१ ॥

विवरणम् ।

स्वतन्त्राधमभूमिमाह — वृत्तेति । अनेकपो गजः । कोलः सूकरः । कपिला गौरेव । सगर्भकुहरेति गर्भवती बिलयुक्ता च । विस्रा आम-न्धिनी । विदिक्स्थेति । आग्नेयादिविदिग्गतपार्श्वचतुष्टया । यदा तु प्रागुक्तोत्तम-भूमिरप्येतदधमलक्षणयोगिनी तदा साप्युपेक्षणीयैवेति बोद्धव्यम् । सर्ववर्ण-सामान्यतो भूलक्षणमेवमुक्तम् ॥ ३१ ॥

**विप्रादिक्रमतः कुशेषुवनदूर्वाकाशयुक्ता भुव-**
**स्तुल्यातानवितानसिन्धुररसाब्ध्यंशाधिदीर्घा अपि ।**
**श्वेतापाटलपीतमेचकरुचश्चाज्यासृगन्नासवा-**
**मोदाः स्वादुकषायतिक्तकटुकास्वादान्विताश्च स्मृताः ॥ ३२ ॥**

विमर्शिनी ।

अथ ब्राह्मणाद्यधिकारिभेदेन भूमेर्लक्षणमाह — विप्रादीति । कुशेषु-वनदूर्वाकाशयुक्ताः कुशैरिषुवनेन दूर्वाभिः काशैश्च युक्ताः । भुवः भूभागाः । विप्रादिक्रमतः ब्राह्मणक्षत्रियवैश्यशूद्रक्रमेण स्मृताः । तुल्यातानवितानसिन्धुर-रसाब्ध्यंशाधिदीर्घाः तुल्यदैर्घ्यविस्तारचतुरश्राः । सिन्धुरा गजाः । सिन्धुररसा-ब्धि[3]शब्दैः अष्टषट्चतुःसङ्ख्या लक्षिताः । विस्तारादष्टषट्चतुरंशाधिकं दैर्घ्ययुक्ताः । अपिः समुच्चये । समचतुरश्रादिचतस्रो भुवो विप्रादिक्रमे[4]तः स्मृता इत्यर्थः । श्वेतापाटलपीतमेचकरुचश्च धवलरक्तपीतकृष्णवर्णाश्च । विप्रादिक्रमतः आज्यासृग-न्नासवामोदाश्च घृतरुधिरहविस्सुरागन्धाश्च । स्वादुकषायतिक्तकटुकास्वादान्वि-ताश्च । (സ്വാദു=മധുരം. കഷായം=ചവൎപ്പു്. കടുകം=എരിച്ചതു്) एते रसाश्च विप्रादिक्रमतः स्मृता इत्यर्थः ॥ ३२ ॥

---

१, 'क्ता । तथाच प्रसिद्धेर्वा' घ. पाठः. २. 'त्र धार्थः ... द्धेर्वा', ३ 'दि', ४. 'मेण स्मृ' ग. पाठः.

विवरणम् ।

अथ वर्णभेदतो भूलक्षणमाह—**विप्रादिक्रमत** इति । इषुः शरस्तम्बः । सिन्धुरो गजः । विस्तारादष्टमषष्ठचतुर्थांशैरधिकायामाः क्षत्रियादिभूमयः । मेचका कृष्णा । असृग् रुधिरम् । आसवस्सुरा । आमोदस्सौरभ्यम् ॥ ३२ ॥

**सङ्कीर्णरूपा वसुधात्र वर्णैर्गन्धै रसैर्वाखिलवर्जनीया ।**
**एनामनालक्षितवर्णचिह्नां नक्तं परीक्षेत निमित्ततश्च ॥ ३३ ॥**

विमर्शिनी ।

वर्णसाङ्कर्ययुक्ता सर्ववर्णैर्वर्जनीयेत्याह—**सङ्कीर्णेति** । अत्र भूपरीक्षायाम् । वर्णैः रूपैः । गन्धै रसैः । वाशब्देन कुशादिभिः समचतुरश्रादिसंस्थानभेदैश्च । सङ्कीर्णरूपा मिश्रिता वसुधा अखिलवर्जनीया सर्ववर्णैस्त्याज्या । चिह्नराहित्ये कथमित्यत्राह—एनामिति । अनालक्षितवर्णचिह्नाम् अपरिस्फुटवर्णलक्षणयुक्ताम् । एनां वसुधाम् । नक्तं रात्रौ । निमित्ततः वक्ष्यमाणनिमित्तेनापि । परीक्षेत परीक्ष्य जानीयात् ॥ ३३ ॥

विवरणम् ।

वर्णिनामेव भूमिस्तत्तद्भेदव्यामिश्रणादनुलोमजसूतभूमिरपि स्यात् । **वर्णैर्गन्धैरिति** । सजातीयसङ्करे तु दोष इति भावः । वर्णाद्युपादानाच्च कुशादिसङ्करे तु न दोषः । अखिलवर्जनीयेति । ब्राह्मणादिसर्ववर्णैरनुलोमसूतैरपि हेयेत्यर्थः । मानुषीं परीक्षामुक्त्वा दैवीं परीक्षामाचष्टे—एनामिति ॥ ३३ ॥

**उपलिप्य महीतलेऽवटे घटमामं भृतधान्यकं न्यसेत् ।**
**तदुपर्यपि वर्धमानकं न्यसतु प्राग्वदनो मृदात्मकम् ॥ ३४ ॥**

विमर्शिनी ।

परीक्षणरीतिमाह—**उपलिप्येति** । महीतलेऽवटे गर्ते गोमयजलेनोपलिप्य प्राग्वदनो मन्त्री मूलमन्त्रं जपन् मृदात्मकं मृण्मयम् आममपक्वं घटं कलशं न्यसेत् । तदुपरि मृदात्मकं वर्धमानकं शरावं न्यसतु ॥ ३४ ॥

विवरणम् ।

अवटे हस्तमात्रखाते । आममपक्वम् । भृतधान्यकं यवमुद्गादिभिर्बीजसेचितैर्धान्यैरापूरितम् । वर्धमानकं शरावम् । मृदात्मकमिति । न लौहम् । प्राग्वदनग्रहणात् सामान्यसिद्धोऽनुष्ठानक्रमोऽपि गम्यते । पूर्वमात्मनः सकली-

करणादि कृत्वा गणपतिं प्रदीपं च सम्पूज्य अवलिप्तेऽवटतले स्वस्तिकाद्या-लिख्याक्षतं निक्षिप्य तत्र घटं शरावं च न्यग्बिलं सादयित्वेत्यादि ॥ ३४ ॥

**कपिलाघृतमात्ममूलतः शतसञ्जप्तममुत्र सिञ्चतु ।**
**चतसृष्वपि दिक्षु वर्तिकास्तनुयाद् वर्णवशात् सितादिकाः ॥ ३५ ॥**

विमर्शिनी ।

अमुत्र शरावे । आत्ममूलतः स्वस्वमूलमन्त्रेण । शतसंजप्तं शतवारं संजप्तम् । कपिलाघृतम् कपिलवर्णायाः पशोर्घृतम् । सिञ्चतु पूरयतु । वर्णवशाद् द्विजादिवर्णक्रमेण । पूर्वादिचतसृषु दिक्ष्वपि सितादिकाः श्वेतरक्तपीतकृष्णवर्णाः वर्तिकाः वर्तीकृतांस्तन्तून् तनुयात् ॥ ३५ ॥

विवरणम् ।

सितादिका इति । "श्वेतापाटलपीतमेचकरुचः" इति ह्युक्तम् ॥ ३५ ॥

**प्रज्वाल्य दिश्यस्वकमूर्तिभिस्तास्ततः समभ्यर्चयतु क्रमेण ।**
**देवं निजं वाथ दिवाकरं वा विज्ञापयेच्चैनमनेन मन्त्री ॥ ३६ ॥**

विमर्शिनी ।

दिश्यस्वकमूर्तिभिः दिग्भवाभिः[1] स्वस्वमूर्तिभिः पूजापटले वक्ष्यमाणाभिः । ताः वर्तिकाः । क्रमेण पूर्वादिक्रमेण प्रज्वाल्य । ततः मध्ये निजं देवं, यं देवं स्थापयितुमेतत् करोति, तं देवमित्यर्थः । दिवाकरं सूर्यं वा समभ्यर्चयतु । अथ प्रसन्नपूजानन्तरम् । एनं देवम् । अनेन मन्त्रेण । विज्ञापयेत् प्रार्थयेत् ॥ ३६ ॥

विवरणम् ।

दिश्यस्वकमूर्तिभिरिति । दिश्याः दिक्षु भवाः । विष्णौ वासुदेवादयः, शिवे तत्पुरुषादय इति । तैर्मूर्तिमन्त्रैः । प्रागादिषु ज्वाला प्रज्वाल्य तैरेव ताः पूजयेत् । निजं देवं वेति । समभ्यर्चयत्विति सम्बन्धनीयम् । मन्त्रीति तत्तन्मन्त्रपूर्वं विज्ञापनमुक्तम् ॥ ३६ ॥

**निमित्तं ब्रूहि मे देव! कल्पप्रोक्तं द्विजादिकम् ।**
**वर्णार्थं तु प्रयुक्तेऽस्मिंस्ततो वर्तिचतुष्टये ॥ ३७ ॥**

विमर्शिनी ।

मन्त्रं पठति—**निमित्तमित्यादि** ॥ ३७ ॥

---

१. 'दि' ग. पाठः.

आच्छाद्य नीतेऽत्र मुहूर्तमात्रे
यस्योज्ज्वलेद् वर्तिरमुष्य सा भूः ।
दीप्तासु सर्वास्वनुवर्णयोग्या
त्याज्या विशीर्णासु समस्तवर्णैः ॥ ३८ ॥

विमर्शिनी ।

फलकादिभिराच्छाद्य मुहूर्तमात्रे काले नीते अतीते । अत्र एषु वर्णेषु यस्य वर्तिरुज्ज्वलेद्, अमुष्य वर्णस्य सा भूर्भवति । सर्वासु वर्तिषु दीप्तासु सतीषु अनुवर्णयोग्या सर्ववर्णं प्रति योग्या । विशीर्णासु अनुज्ज्वलितासु समस्तवर्णैस्त्याज्या भवति ॥ ३८ ॥

विवरणम् ।

**विशीर्णासु** उपशान्तासु वर्तिषु । कदाचित्तु विशेषः । यदुक्तम्—
"अथ सर्वा विशीर्णास्ताः पुनः प्र(ज्वाल्य ? ज्वालि)ता अपि ।
वर्जनीया तु सा नित्यम्"
इति ॥ ३८ ॥

कर्पूरागरुनालिकेरतिलकैर्दर्भैः कदम्बार्जुनै-
र्मालेयैः क्रमुकेक्षुकेतककुरैः कुन्दारविन्दोत्पलैः ।
पूर्वोदक्प्लवशालिनी बहुजला वा या दरीदृश्यते
सेयं शान्तिकरी सुरेशयजने सूक्ता सुपद्मा मही ॥ ३९ ॥

विमर्शिनी ।

एवं वर्णवशाद् भूमेर्लक्षणमुक्त्वा कामवशादप्याह—**कर्पूरेति** । या मही कर्पूरादिभिरुपलक्षिता दरीदृश्यतेऽत्यर्थं दृश्यते, सेयं सुपद्मा नाम । सुरेशयजने, देवं प्रतिष्ठाप्य यजनात् शान्तिकरी दुरितरोगानर्थादिशान्तिकरी । सूक्ता आगमेष्वभिहिता । कर्पूरः स एव । (അഗരു=അകൽ. തിലകം=മൈലെള്ള. കദംബം=കടമ്പ്. അർജ്ജുനം=മരുത്. മാലേയം=ചന്ദനം. കേതകം=കൈത. കുരം=കുരുക്കുത്തിമുല്ല) पूर्वोदक्प्लवशालिनी पूर्वभाग उदग्भागे च निम्नतया युक्ता । बहुजला वा अक्षयजलयुक्ता वा ॥ ३९ ॥

विवरणम् ।

अथ फलभेदेनापि भूलक्षणमाह—**कर्पूरेति** । **पूर्वोदक्प्लवशालिनीति** । प्राक्प्लवेनोदक्प्लवेनेशानप्लवेन वा युक्तेत्यर्थः । दरीदृश्यते अत्यर्थं दृश्यत इत्यर्थः । सुरेशयजनं प्रतिष्ठापनम् ॥ ३९ ॥

---

१. 'त इति । दृशर्यङि रूपम् । स्पष्टतरं दृश्यते अ' ग. पाठः.

**तीरं वारिनिधेः श्रिताथ सरितस्तीर्थस्य वा दक्षिणे**
**व्रीहिक्षेत्रविचित्रिताप्यदिशि यज्ञार्हाङ्घ्रिपैरङ्किता ।**
**कीर्णा पूर्णफलप्रसूनतरुभिर्योद्यानहृद्यापि वा**
**भद्रा सा परिगीयते वसुमती प्रीतिप्रदा यज्वनाम् ॥ ४० ॥**

विमर्शिनी ।

या पुनरेवंभूता वसुमती भूमिः, सा भद्रा परिगीयते भद्रेत्यागमेषूच्यते । यज्वनां प्रीतिप्रदा इष्टदा । वारिनिधेः समुद्रस्य तीरं श्रिता आश्रिता । अथवा सरितो नद्यास्तीर्थस्य प्रसिद्धस्य तीर्थस्य तीरं श्रिता । दक्षिणे दक्षिणभागे । व्रीहिक्षेत्रविचित्रिता व्रीहिक्षेत्रेण संयुक्ता । आप्यदिशि पश्चिमभागे । यज्ञार्हाङ्घ्रिपैः पलाशादिभिर्यज्ञयोग्यैर्वृक्षैरङ्किता चिह्निता । पूर्णफलप्रसूनतरुभिः फलपुष्पपूर्णैर्वृक्षैः । कीर्णा सङ्कीर्णा । अपि वा उद्यानहृद्या उद्यानवद्धृद्या ॥ ४० ॥

विवरणम् ।

**अथ सरितस्तीर्थस्य** वेति । तीरं श्रितेत्यनुषङ्गः । यज्ञार्हा अङ्घ्रिपाः पलाशविकङ्कतादयो वृक्षाः । कीर्णा व्याप्ता ॥ ४० ॥

**प्लक्षन्यग्रोधनिम्बार्जुनवकुलकुलस्थासनाशोकनिष्पा-**
**वाङ्कोलैर्मालतीचम्पकतिलखदिरैः कोद्रवैर्मुद्रिता वा ।**
**भूमिर्या भूधराधीश्वरशिखरगता पार्श्वसंस्थाथवाद्रेः**
**पूर्णा सा पुष्टिदात्री सुरनिलयसमाकल्पने स्वल्पतोया ॥ ४१ ॥**

विमर्शिनी ।

या च पुनरेवंभूता भूमिः सा पूर्णा स्यात् । सुरनिलयसमाकल्पने देवालयनिर्माणे । पुष्टिदात्री धनधान्यप्रदानशीला । प्लक्षन्यग्रोधनिम्बार्जुनवकुलकुलस्थासनाशोकनिष्पावाङ्कोलैः (പ്ലക്ഷം=ഇത്തി. ന്യഗ്രോധം=പേരാൽ നിംബം=വേപ്പ്. അർജ്ജുനം=മരുത്. വകുളം=ഇലഞ്ഞി. കുലസ്ഥം=മുതിര. അസനം=വേങ്ങ. അശോകം=സ്വയമേവ. നിഷ്പാവം=തുവര അങ്കോലം=അഴിഞ്ഞിൽ) एतैर्मुद्रिता अङ्किता वा । मालतीचम्पकतिलखदिरैः (മാലതി=മല്ലി. ചമ്പകം=സ്വയമേവ. തിലം=എള്ള്. ഖദിരം=കരിങ്ങാലി.) कोद्रवैर्वा (കോദ്രവം=വരക്) एतैर्वा । भूधराधीश्वरशिखरगता भूधराधीश्वरः पर्वतश्रेष्ठः तस्योर्ध्वभागस्था वा । अथवा अद्रेः पर्वतस्य पार्श्वस्थिता वा । स्वल्पतोया सुतरामल्पं तोयं यत्र सा ॥ ४१ ॥

विवरणम् ।

मुद्रिता अङ्किता ॥ ४१ ॥

**अर्कैर्वेणुविभीतकैः स्नुहियुतैः श्लेष्मातकैः पीलुभिः**
**संकीर्णा बहुशर्करा च कठिना गर्भान्विता सोषरा ।**
**गृध्रश्येनवराहवायसशिवाशाखामृगैः सन्ततं**
**जुष्टा यष्टुरनिष्टदा निगदिता धूम्रा मही सूरिभिः ॥ ४२ ॥**

विमर्शिनी ।

या तु पुनरेवंभूता मही, सा सूरिभिर्विद्वद्भिः धूम्रा निगदिता उक्ता । यष्टुः यजमानस्यानिष्टदा दुःखदा । अर्कैः सङ्कीर्णा । (അർക്കം=എരിക്ക്.) वेणुविभीतकैः वेणुभिर्विभीतकैश्च । (വേണു=മുള. വിഭീതകം-താന്നി) स्नुहियुतैः श्लेष्मातकैः (സ്നുഹി=കള്ളി. ശ്ലേഷ്മാതകം=നറുവരി) पीलुभिः (പീലു=ഉകം.) एतैर्वा । बहुशर्करा च बह्व्यः शर्करा यत्र सा । कठिना कर्कशा । गर्भान्विता गुहायुक्ता । सोषरा ऊषरयुक्ता । गृध्रश्येनवराहवायसशिवाशाखामृगैः (ഗൃധ്രം=കഴുക്. ശ്യേനം=പരുന്ത്. വരാഹം=പന്നി. വായസം=കാക്ക. ശിവാ=കുറുനരി. ശാഖാമൃഗം=കുരങ്ങ്) एभिः सन्ततं सदा जुष्टा सेविता । एवंभूता मही वर्ज्येत्यर्थः ॥ ४२ ॥

विवरणम् ।

शिवा गोमायवः । शाखामृगा वानरा इति ॥ ४२ ॥

**आचार्योऽथ यथोचितां वसुमतीं लब्ध्वा निशायां समि-**
**ष्टात्माभ्यर्च्य गणेशमस्त्रमनुनाराध्य स्वधित्यादिकम् ।**
**प्राकारावधिकां प्रकल्प्य परितस्तां देवताभ्योऽणुना**
**मध्येऽष्टासु च भूतकूरहविषा दिक्षु प्रदद्याद् बलिम् ॥ ४३ ॥**

विमर्शिनी ।

एवं भूलक्षणं भूपरीक्षाविधानं चोक्त्वा भूपरिग्रहविधानमाह—आचार्य इति । अथशब्द आरम्भार्थः । अथ आचार्यः यथोचितां यथायोग्याम् । वसुमतीं प्रशस्तां भूमिं लब्ध्वा । निशायां रात्रौ क्वचित् प्रदेश उपविश्य । समिष्टात्मा शङ्खपूरणानन्तरमात्मानमिष्ट्वा । गणेशं गुरुगणेशदीपानभ्यर्च्य अग्रतः स्वस्तिकस्थं स्वधित्यादिकं खड्गपरश्वादिकम् । अस्त्रमनुना स्वस्वास्त्रमन्त्रेण

आराध्य । प्राकारावधिकां महामर्यादाप्राकारावसानभूतां तां भूमिं प्रकल्प्य । देवताभ्योणुना 'देवताभ्य' इति मन्त्रेण । मध्ये भूप्रदेशस्य मध्ये । परितोऽष्टासु दिक्षु च । भूतकूरहविषा भूतकूरयुक्तेन हविषा । बलिं प्रदद्यात् ॥ ४३ ॥

विवरणम् ।

एवं परिग्राह्यां भुवमुक्त्वेदानीं तत्परिशोधनप्रकारमाह — आचार्योऽथेति । वसुमती भूमिः । लब्ध्वेति । प्रतिष्ठोचिततयावरोधो लाभः । यद्वा तत्र प्रवेशसमये सकृद्धाविप्राकारसीमपर्यन्ते प्रदक्षिणेन तस्याः परिग्रहो लाभः । निशायां बलिं प्रदद्यादिति सम्बन्धः । समिष्टात्मेति । आत्मनः सकलीकरणादिकमुक्तम् । स्नानाद्यर्थसिद्धम् । हस्त्यादिपरिमिते आयतने नैर्ऋतोद्देशे क्लृप्ते स्थण्डिले उपविश्यैतत्सकलीकरणादि कार्यम् । स्वधित्यादिकमिति वृक्षशिलागुल्मादिशोधनौपयिकशस्त्राणां ग्रहणम् । तेषामस्त्रप्रोक्षणशोषणादि सर्वमप्यर्थसिद्धम् । तां परितः प्राकारावधिकां प्रकल्प्येत्यन्वयः । तां वसुमतीं हस्तिपरिमित्या वंश्यादिपरिमित्या वा कथंचिदवधारणमिह कल्पनम् । देवताभ्योणुनेति । 'देवताभ्यः पितृभ्योऽथे'त्यनेन मन्त्रेणेत्यर्थः । भूतकूरहविषेति । वक्ष्यति च—'हारिद्रं दधिलाजसक्तुपललाढ्यं भूतकूराह्वयम्" इति बलिप्रक्रियोत्सवे द्रष्टव्या । प्रवेशबलिरयं भवति ॥ ४३ ॥

**देवताभ्यः पितृभ्योऽथ भूतेभ्यः सह जङ्गमैः ।**
**एतत्स्थाननिवासिभ्यः प्रयच्छामि बलिं नमः ॥ ४४ ॥**

विमर्शिनी ।

बलिमन्त्रं पठति—**देवताभ्य** इति ॥ ४४ ॥

***आचम्य सम्यक् सकलीकृतात्मा**
**कृतात्मरक्षो[1] रचिताञ्जलिः सन् ।**
**मध्ये स्थितस्तात्स्थितभूतजातं**
**प्रवासयेतेति निवेदयंस्त्रिः ॥ ४५ ॥**

विमर्शिनी ।

अथ आचम्य सकलीकृतात्मा सम्यक् कृतात्मरक्षः कृता आत्मरक्षा येन सः । मध्ये स्थितस्तिष्ठन् । रचिताञ्जलिः सन् भूत्वा । इति वक्ष्यमाणमन्त्रेण ।

१. 'त्कृतवासभूतप्रवासनायेति निवेदयेत् त्रिः' इति मूलकोशपाठः.

* 'आचम्य मन्त्री' इति विवरणरीत्या पाठः प्रतिभाति ।

त्रिः त्रिशः निवेदयन् । तत्स्थितभूतजातं भूतसमूहम् । प्रवासयेत वियोजयेत ॥ ४५ ॥

विवरणम् ।

**मन्त्रीति** प्रतिष्ठापनीयदेवमन्त्राभिज्ञत्वमुक्तम् । कृतात्मरक्ष इति सुदर्शनाद्युदितास्त्रमन्त्रन्यासजपभावनातालत्रयादिभिरात्मरक्षणमुक्तम् । तत्स्थितभूतजातमिति । त्रिर्निवेदयन् प्रवासयेतेति योजना । इतिशब्दो वक्ष्यमाणमन्त्राभिप्रायः । त्रिरिति मन्दमध्यमताराभिप्रायम् । प्रवासयेतेति । मन्त्रान्तरे पुष्पेणोद्वासनमुद्रया आकाशे समुद्वासनमभिप्रेतम् । यद्वा पुनरस्त्रेणोद्वासनमिष्यते । यदुक्तम्—

"इत्यनुज्ञाप्य भूतादीन् पुष्पमस्त्रेण खे क्षिपेदि"ति ॥ ४५ ॥

**भूतानि राक्षसा वापि येऽत्र तिष्ठन्ति केचन ।**
**ते सर्वे व्यपगच्छन्तु स्थानं कुर्यामहं हरेः ॥ ४६ ॥ इति ॥**

विमर्शिनी ।

प्रार्थनामन्त्रं पठति—**भूतानीति** ॥ ४६ ॥

**यद्यदर्थमिह गृह्यते मही तत्पदं हरिपदेऽत्र योजयेत् ।**
**स्कन्दभूतपतिसुम्भजित्सु येयेत्रदेवपदपूर्वतोऽर्थयेत् ॥ ४७ ॥**

विमर्शिनी ।

**इह यद्यदर्थं** यस्य यस्य देवस्य कृते । मही गृह्यते । अत्र मन्त्रे । हरिपदे हरेरिति पदे । तत्पदं तस्य तस्य देवस्य नाम योजयेत् । स्थानं कुर्यां कपर्दिनः, स्थानं कुर्यां हरीशयोः, स्थानं कुर्यां गणेशितुः इति योजयेदित्यर्थः । स्कन्दभूतपतिसुम्भजित्सु स्कन्दे शास्तरि दुर्गायां च । क्रमेण येयेत्रदेवपदपूर्वतः येपदपूर्वो येत्रपदपूर्वो देवपदपूर्वश्च येयेत्रदेवपदपूर्वाः, तैस्तैः । अर्थयेत् प्रार्थयेत् ॥ ४७ ॥

विवरणम् ।

**अत्र हरिपद** इति । युक्तितः ज्ञेयम् । यथा —– स्थानं कुर्यां हरीशयोरित्यादि । येयेत्रदेवपदपूर्वत इति त्रयाणां प्रतीकग्रहणम् ॥ ४७ ॥

**ये वसन्ति वने त्वत्र भूताः प्रेताश्च राक्षसाः ।**
**कूश्माण्डाश्च पिशाचाश्च वेताला ब्रह्मराक्षसाः ॥ ४८ ॥**

निर्गच्छन्त्वन्यतः शीघ्रमितः क्रूराः सुखं पुनः ।
भवनं कुर्महे त्वत्र गुहस्य परमात्मनः ॥ ४९ ॥

येऽत्राशुभकराः सन्ति भूतवेतालराक्षसाः ।
व्यपगच्छन्तु ते शास्तुः कुर्महे भवनं त्विह ॥ ५० ॥

देवदानवगन्धर्वपिशाचा वापि राक्षसाः ।
नागाः सर्पास्तथा कीटा येऽत्र तिष्ठन्ति जन्तवः ॥ ५१ ॥
ते सर्वेऽन्ये च जानन्तु प्रयान्त्वस्माद् यथासुखम् ।
देव्यर्थं प्रतिगृह्णामि सास्माकं क्षम्यतामिति ॥ ५२ ॥

विमर्शिनी ।

प्रार्थनामन्त्रान् पठति—ये वसन्तीत्यादि ॥ ४८—५२ ॥

विवरणम् ।

तानेव क्रमेणाह— ये वसन्तीति । क्षम्यतामितीति । अत्रेतिशब्दो मन्त्रपरिसमाप्त्यर्थ एव । वृत्तानुरुरुत्सायां क्षम्यतामपीत्येवमेषणीयम् ॥ ४८–५२ ॥

तद्वृक्षगुल्मादिकमिष्टशस्त्रै-
रुच्छिद्य संशोध्य निजास्त्रजापी ।
क्ष्मां क्ष्मीकृत्य दिशश्च सम्यग्
ज्ञात्वेष्टयुक्त्या प्रमिमीत चैनाम् ॥ ५३ ॥

विमर्शिनी

ततो निजास्त्रजापी स्वस्वास्त्रमन्त्रं जपन् । इष्टशस्त्रैः पूजितैः खड्गादिभिः । तद्वृक्षगुल्मादिकं तत्रत्यवृक्षवनगह्वरादिकम् । उच्छिद्य संशोध्य । क्ष्मां क्ष्मीकृत्य समीकृत्य । दिशः सम्यक् शङ्कुस्थापनपूर्वकं ज्ञात्वा । एनां भूमिम् । इष्टयुक्त्या स्वेच्छायोगेन । प्रमिमीत मानं कुर्यात् ॥ ५३ ॥

विवरणम् ।

इष्टशस्त्रैरिति । पूजितैः स्वधित्यादिभिः । उच्छिद्येत्युपरिच्छेदनं समूलोन्मूलनमप्युक्तम् । संशोध्येति । विषमप्रस्तरादिपरि[2]हीणत्वमुक्तम् । तृणादि-

१. 'शबरा', २. 'रिहरणमु' ग. पाठः.

संशोधनं तु कर्षणे कृत एव वा स्यात्। यद्वा संशोध्येति कर्षणादिशोधनमप्युक्तम्। यदुक्तम्—

"शतशः कर्षयित्वा च गोकुलं तत्र वासयेत्।
ततो वर्षोषितां कृत्वा तिलादीन्यत्र वापयेत्॥

यदा सस्येषु पुष्पाणि फलान्यपि भवन्ति हि।
तदा कृष्टा पुनर्भूमिः शुद्धिमृच्छत्यसंशयम्॥"

इति। क्षमां क्षमीकृत्येति। तां भुवं देवायतनयोग्यां कृत्वेत्यर्थः। भूमेर्ऋजूकरणाद्यभिप्रायमेतत्। दिशश्च सम्यग्विज्ञायेति। तत्र समतले शङ्कुन्यासादिभिर्दिगवधारणं तत्स्थैर्यसिद्धये जगति क्षेत्रबाह्यतः शिलासु तद्रेखोत्किरणं चोक्तम्। शङ्कुन्यासस्तु कर्मशेषे वक्ष्यते। एनामिष्टयुक्त्या प्रमिमीत चेति। बिम्बजन्यस्वतन्त्रो वा प्रासादः। तदीयदण्डेन प्राकारपर्यन्ता भूमिः प्रमातव्या। ततश्च बिम्बस्य प्रासादस्य वा स्वेष्टमानकल्प्यत्वम्। तदुपपत्त्या च भूमिमानमिति। सर्वं चैतद् द्वितीयपटले वक्ष्यते॥ ५३॥

**पुन्नामैकतरूद्भवान् करमितांस्तत्पादनाहान् दृढान्**
**शङ्कून् प्राग्वदनोऽस्त्रमन्त्रमहितान् मध्यादिशर्वान्तिमम्।**
**कृत्वा कल्पितसालसीम्नि परितः शङ्कुद्विसंवेष्टितं**
**स्वास्त्रेण प्रविसार्य सूत्रमपि गृह्णातु क्षितिं सर्वतः॥ ५४॥**

विमर्शिनी।

पुनः सर्वतः सर्वदेवेषु। प्राग्वदनः प्राङ्मुखो भूत्वा। मध्यादिशर्वान्तिमं मध्ये पूर्वाद्यष्टदिक्षु च। पुन्नामैकतरूद्भवान् एकस्मादेव तरोर्वृक्षादुद्भवान्। (ചുന്നാമം=ചുന്ന) करमितान् करपरिमितदीर्घान्। तत्पादनाहान् षडङ्गुलपरिधियुक्तान्। अस्त्रमन्त्रमहितान् पूर्वमेवास्त्रमन्त्रेण पूजितान्। दृढान् शङ्कून् स्वास्त्रेण कृत्वा स्थापयित्वा। परितः कल्पितसालसीम्नि कल्पितप्राकारावधौ। सूत्रमपि त्रिगुणितं सूत्रम्। शङ्कुद्विसंवेष्टितं शङ्कौ शङ्कौ द्विद्विसंवेष्टितं यथा भवति तथा। स्वास्त्रेण प्रविसार्य अविच्छिन्नं प्रसार्य। क्षितिं गृह्णातु परिगृह्णीयात्॥ ५४॥

विवरणम् ।

एवं भूसंस्कारमुक्त्वेदानीं तत्परिग्रहमाचष्टे — **पुन्नामैकतरूद्भवानिति**। पुन्नागनागादयः पुन्नामानस्तरवः । न द्विवृक्षजा बहुवृक्षजा वैते शङ्कादयः स्युरित्येकग्रहणम् । करमितान् हस्तमात्रायतान् । तत्पादनाहस्तेषां परिणाहः । नाहग्रहणाद् वृत्तत्वमपि लभ्यते । तदनभिधानं तु चतुरश्रविकल्पनार्थम् । यदुक्तम्—

"अधोमूलोर्ध्वशाखास्तु चतुरश्राश्च वर्तुलाः"

इति । तन्निशायामेव चेद् एवं स्यात् । दिनान्तरे तु चेत् स्नानसकलीकरणाद्यपि प्राग्वत् कार्यमेव । अग्रतो दर्भसंस्तरे शङ्कून् मुद्गरं त्रिगुणसूत्रं च संसाद्यास्त्रप्रोक्षणशोषणादिपूर्वकमस्त्रार्चनादिभिर्मन्त्रणं कार्यम् । प्राग्वदनः प्राङ्मुखः । प्राग्वाद्यवादनमप्यनेनोक्तम् । यद्वा वदति शङ्कुताडनतः शब्दं करोतीति वदनो लोहमुद्गरः । प्राङ्मुखतया वदनो यस्येति समासः । मध्यादिशर्वान्तिममिति । प्रासादमध्योद्देशे पूर्वकल्पितप्राकारसीमनि तु पूर्वाद्यष्टदिक्षु चेति भावः । पूर्वादिशर्वान्तिममिति वा पाठः । *मित्वेति । भूमावग्रप्रवेशनेन स्थापयित्वेत्यर्थः । मुद्गरेणाष्टधा ताडनेन कार्यमेतत् । सुलग्ने चैतदिष्यते । तदुक्तम् — "भूपरिग्रहार्थं कर्षणार्थं खननार्थं प्रथमेष्टकार्थं गर्भाधानार्थं प्रतिमाद्रव्यसङ्ग्रहार्थं देवप्रतिष्ठापनार्थम्" इति । स्वास्त्रेणेति सर्वत्र सम्बध्यते । शङ्कुद्विसंवेष्टितं सूत्रमपि प्रसार्येति । सूत्राग्रं मध्यशङ्कौ प्राच्यशङ्कौ वा द्विगुणपरिवेष्टनेन बद्ध्वाग्निकोणान्तं प्रसार्य आग्नेयशङ्कौ द्विगुणपरिवेष्टनेन बद्ध्वेत्यादि बोद्धव्यम् । सर्वत्रान्तस्तालत्रयादि कार्यमिति सामान्यसिद्धम् । गृह्णातु क्षितिं सर्वत इति । एवमुक्तो भूपरिग्रह इत्यर्थः । यद्वा भूपरिग्रहबुद्ध्या सकृत् प्रदक्षिणकरणमनेनोक्तम् ॥ ५४ ॥

**आचार्यो मनुभावितोऽह्नि सुशुभे लग्ने वृषाभ्यां मिथ-**
**स्तुल्याभ्यामसनादिजैर्हलयुगाद्यैर्दर्भमालासितैः ।**
**प्रागास्यो मिहिरार्णतास्त्रिरथवा कृष्ट्वा क्षितिं पञ्चधा**
**मुद्गादीनि समुप्य मूलमनुना सिञ्चेज्जितन्ताणुना ॥ ५५ ॥**

विमर्शिनी

एवं भूमिं परिगृह्यापरस्मिन् मुहूर्ते तस्याः संस्कारं कुर्यादिति वदन् पूर्वं विष्णौ विशेषमाह — **आचार्य** इति । आचार्यः सुशुभेऽह्नि सुशुभे लग्ने

* कृत्वेत्यस्य स्थाने भित्वेति विवरणपाठः । (मिन् प्रक्षेपणे)

राशौ । मनुभावितः सकलीकरणात्माराधनकृद् भूत्वा । असनादिजैः असनवृक्षादिकृतैः । (അസനം=വേങ്ങ) हलयुगाद्यैः हलयुगयष्ट्यादिभिः । (ഹലം=കരിവി. യുഗം=നുകം) दर्भमालसितैः दर्भपाशेन बद्धैः उपलक्षिताभ्यां मिथः अन्योन्यं तुल्याभ्यां वृषाभ्याम् । प्रागास्यः प्राङ्मुखो भूत्वा । मिहिरार्णतो द्वादशाक्षरं जपन् । त्रिः त्रिधा अथवा पञ्चधा क्षितिं कृष्ट्वा । 'कृषि लेखन' इति धातुः । मुद्गादीनि बीजानि मूलमनुना समुप्य वपनं कृत्वा । जितन्ताणुना सिञ्चेत् ॥ ५५ ॥

विवरणम्

प्राक्परिग्रहाभावे चैतत् कर्षणं प्रस्तौति—*स्नातो गुरुरिति । स्नात्वा गुरुरिति वा पठनीयम् । मन्त्रविदिति । वृषादिपूजने प्रणवो योजने मूलं यष्ट्या ताडने फडन्तप्रणव इत्यादि सर्वं विद्वानित्यर्थः । अञ्चितात्मेति स्नानादिपूर्वकं सकलीकरणादिकमुक्तम् । तत्र पश्चिमत उपविश्यैतत्सर्वं कार्यम् । संस्कृत्येति क्षालनपूर्वकमस्त्रप्रोक्षणादिकमुक्तम् । सुतुल्याविति । मिथः सुसदृशौ वर्णतो यजमानस्य सुसदृशौ ।

"श्वेतौ रक्तौ च कपिलौ कृष्णौ जात्यनडुत्क्रमात् "

इति । अयुक्तपूर्वौ पूर्वमन्यत्र वाहनकर्षणादावयोजितौ । असनादिक्लृप्तं हलादीति । सामान्यतोऽसनाश्वत्थवटादिकृतम् । वर्णवशात्तु पलाशादिकृतम् । यदुक्तम्—

"हलं युगं च पालाशं ब्राह्मणस्य विधीयते ।
न्यग्रोधं क्षत्रियस्य स्यात् प्लाक्षं विट्शूद्रयोर्भवेत् ॥"

---

* 'आचार्यो' इत्येतत्पद्यस्थाने

स्नातो गुरुर्मन्त्रविदञ्चितात्मा शुभेऽह्नि संस्कृत्य वृषौ सुतुल्यौ ।
अयुक्तपूर्वावसनादिक्लृप्तं हलादि मुद्गादि च बीजजातम् ॥
बद्ध्वालङ्कृतयोर्नवं युगहलाद्युक्ष्णोस्तयोर्योगवित्
तिष्ठन् पश्चिमतोऽत्र दर्भमयमालाभिः सुलभे ततः ।
प्रागास्यो मिहिरार्णतस्त्रिरथवा कृष्ट्वा क्षितिं पञ्चधा
बीजानीह समुप्य मूलमनुना सिञ्चेज्जितन्ताणुना ॥

इति श्लोकद्वयपाठमवलम्ब्य प्रवृत्तं विवरणव्याख्यानम् । अमुमेव पाठमङ्गीकृत्य गर्तवनस्थ (Kuzikatu)तन्त्रसमुच्चयकेरलभाषाव्याख्यापि प्रवृत्ता । परन्तु पूर्वस्मिन् पद्ये 'स्नातो गुरुः' इत्यस्य 'ततो गुरुः' इति 'वृषौ सुतुल्यौ' इत्यस्य 'वृषौ तु तुल्यौ' इति चाद‍ृतः पाठभेदः ।

इति । आदिशब्देन युगशम्यालाङ्गलयष्टिग्रहणम् । मुद्गादि बीजजातमिति मुद्गतिलसर्षपग्रहणं, सर्वधान्याभिप्रायं वा । वक्ष्यति च—सर्वौषधानि यव-माषेत्यादिसप्तधान्यानि निजनिजबीजवापोक्तानि वा ग्राह्याणि । चकारः संस्कृत्ये-त्येतदनुकर्षणार्थः ॥

बद्ध्वेति । तयोरुक्ष्णोर्युगहलाद्यं दर्भमालाभिर्बद्ध्वेत्यन्वयः । अलङ्कृ-तयोरिति । हिरण्मयशृङ्गखुरादिभिर्गन्धमाल्यादिभिश्च शक्तितोऽलङ्करणमुक्तम् । योगविदिति । युगहलादियोजनाभिज्ञत्वमुक्तम् । वाद्यप्रयोगविदिति वार्थः । यद्वा योगो ध्यानविशेषः । यदुक्तम्—'भूसरोजे च मां ध्यायेद्' इति । तं देवं ध्यायेदिति च तदर्थः । पश्चिमतस्तिष्ठंस्ततः प्रागास्यास्त्रिः कृष्ट्वेत्यन्वयः । प्राग-वधि सकृत्कर्षणं कृत्वा पुनः प्रादक्षिण्येन कृषन् पश्चादवधि गत्वा पुनर्द्वितीयं प्रागवधि कृषेदित्यादि बोद्धव्यम् । तदुक्तम्—

"त्रिपञ्चसप्तमार्गेण कर्षयेच्च प्रदक्षिणम्"

इति । स्थलविस्तारापेक्षया सङ्ख्याधिक्यम् ।

"पञ्चधा दशधा चापि कर्षयेल्लाङ्गलेन तु ।"

इति च । यावदन्तं मण्डलमिष्यते तावदवश्यं कर्षणीयम् । पुनर्दक्षिणतोऽपि प्रक्रम्य तथोदगवधि प्रादक्षिण्येन कर्षणम् । यदाह— 'प्राङ्मुखो वाप्युद-ङ्मुखः कर्षयेदि'ति । सुलग्न इति । गोहिरण्यादिदानमपीष्यते । कर्षणे कृते तदायतनेऽस्त्रप्रोक्षणमप्युचितम् । इहेति । कृष्टायां भूमौ । जितन्ताणुना सिञ्चेदिति । तत्र यावदर्थमालवालान् विधाय जितन्तेन सेचनं कार्यम् । ततः प्रतिदिनं यावत्फलनिष्पत्ति सेचनमपि कार्यम् ॥ ५५ ॥

**चक्रे संरक्ष्य फलान्वितानि**
**गोब्रह्मसात्कृत्य च गा निवास्य ।**
**क्ष्मां साधयेदित्यजिते विधिः स्यात्**
**तदन्यदेवेषु भिदां वदामि ॥ ५६ ॥**

विमर्शिनी

चक्रेण सुदर्शनमन्त्रेण । संरक्ष्य वृतिं कृत्वा । फलान्वितानि फलिते सति तानि बीजानि । गोब्रह्मसात्कृत्य । 'विभाषा साति कार्त्स्न्ये' (५-४-५२) इति सातिप्रत्ययः । गोभ्यो ब्राह्मणेभ्यश्च दत्त्वा । गाश्च निवास्य तत्र गवां निवासं कृत्वा । क्ष्मां साधयेत् । एवं कृते सति क्ष्मा साधिता भवतीत्यर्थः । इत्यजिते विष्णौ विधिः स्यात् । तदन्यदेवेषु भिदां भेदं वदामि ॥ ५६ ॥

विवरणम्

**चक्रेण संरक्ष्येति** । समन्ताद् वृतिकल्पनं तालत्रयादिकं चोक्तम् । फलान्वितानि गोब्रह्मसात्कृत्येति । तानि बीजानि उत्पन्नानि फलान्वितानि गोभ्योऽर्धं ब्राह्मणेभ्यश्चार्धं विभज्य दद्यादित्यर्थः । तदधीनवचने सातिः । मूलमेव मन्त्रः । गा निवास्येति । एकदिनं त्रिदिनं वा तत्र गोकुलवास उक्तः । सम्भवे ब्राह्मणभोजनमपीष्यते ॥ ५६ ॥

**सद्यवामबहुरूपशिवास्यैः कर्षबीजवपनोक्षणरक्षाः ।**
**स्पर्शनं च गिरिशे निजमूलेनाखिलं तदितरेषु विदध्यात् ॥ ५७ ॥**

**हरीशेऽपि गिरीशोक्तक्रमाद् गुह्याणुभिर्निजैः ।**
**कर्षणादिक्रियाः पञ्च कुर्यान्मूलेन वा गुरुः ॥ ५८ ॥**

विमर्शिनी

**गिरिशे** शिवे । सद्यवामबहुरूपशिवास्यैः सद्योजातवामदेवाघोरेशानतत्पुरुषसूक्तैः । कर्षबीजवपनोक्षणरक्षाः कर्षणं बीजवपनमुक्षणं रक्षणं च । स्पर्शनं च । 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनमि'त्यमरः । दानं विदध्यात् कुर्यात् । तदितरेषु देवेषु । तदखिलं कर्म । निजमूलेन स्वस्वमूलमन्त्रेण विदध्यात् ॥ ५७ ॥

**गुरुः** विशेषेण[1] ज्ञातुं शक्तः । हरीशेऽपि निजैर्गुह्याणुभिः पञ्चतत्त्वैः । गिरिशोक्तक्रमात् शिवोक्तमार्गेण । प्रातिलोम्याच्चतुर्थेन दानमित्यभिप्रायः । कर्षणादिपञ्चक्रियाः कुर्याद्, मूलेन वा सर्वमूलमन्त्रेण वा ॥ ५८ ॥

विवरणम्

**बहुरूपो**ऽघोरः । शिवः ईशानः । आस्यं तत्पुरुषः उक्षणं सेचनम् । स्पर्शनं गोब्राह्मणेभ्यो दानम् ॥ ५७ ॥

**गुह्याणुभिरिति** स्वपञ्चतत्त्वग्रहणम् । गिरीशोक्तक्रमादिति । अन्त्यतुर्यमध्यमाद्यद्वितीयक्रमेणेत्यर्थः । यद्वा शिवोक्तं ब्रह्मणां क्रममप्यनुरुध्येति । सद्योजातादितत्तद्ब्रह्मयोगोऽपि गुह्यमन्त्राणामुक्तः ॥ ५८ ॥

**खात्वा क्षितिं तां पुरुषप्रमाणं जलान्तमश्मावधि वा सुलग्ने ।**
**पादोनमापूर्य विशुद्धवेद्यां रात्रौ यजेद् दिश्यथ वास्तुमैश्याम् ॥५९॥**

---

१. 'षं ज्ञा' ग. पाठः.

विमर्शिनी

अथ सुलग्ने शोभने मुहूर्तान्तरे । तां क्षितिं पुरुषप्रमाणं जलान्तमश्मावधि वा खात्वा पादोनं यथा तथा आपूर्य । विशुद्धवेद्यां मार्जनालेपनादिभिः विशुद्धायां वेद्याम् । ऐश्यां दिशि रात्रौ वास्तुं यजेत् ॥ ५९ ॥

विवरणम्

एवमायतनभूमेर्बाह्यं संस्कारमुक्त्वा आन्तरं संस्कारमाह— **खात्वेति** । तां क्षितिं सुलग्ने पुरुषप्रमाणं खात्वा पादोनमापूर्याथ रात्रावैश्यां दिशि विशुद्धवेद्यां वास्तुं यजेदित्यन्वयः । स्नानसकलीकरणादि सर्वं सामान्यसिद्धम् । अस्त्रेण तत्संस्कृतखनित्रेण खननमर्थाद् भवति । पुरुषप्रमाणमित्युद्बाहुकपुरुषमात्रम् । पुरुषग्रहणं तदवयवोपलक्षणम् । तदुक्तम् —

"खात्वा पुरुषमात्रं तु कण्ठहृन्मात्रमेव वा ।
तन्नाभिजानुमात्रं वा जलाश्मान्तमथापि वा ॥"

इति । ब्राह्मणादिवर्णवशाद्वा मुखबाहूरुजानुमात्रं स्यात् । भूम्यन्तर्गतशल्यपरिहारार्थं प्रासादीयस्थलदृढीकरणार्थं चैतत् खननम् । अत एवैतत् प्रासादाभ्यधिकततं स्यात् । तदुक्तम् —

"प्रासादस्य तु विस्ताराद् द्विहस्ताधिकविस्तृतम् ॥"

इति । भुवो दृढीभावोपपत्त्या पुरुषप्रमाणादिविकल्पः । स्वतो दृढे तु स्थले शिलाप्रस्तरसम्भवे च यावदर्थं खननं स्यात् । पादोनमापूर्येति । पुरुषप्रमाणविषयमेतत् । शेषेष्वेतन्मानतुल्यं पूरणम् । यद्वा पादोनमिति पादशब्देन पुरुषपादप्रमाणग्रहणम् । तच्च हस्तमात्रम् । यत उक्तं 'हस्तमात्रं खनेद् विप्रः' इति । पूरणक्लृप्तिं तु वक्ष्यति — गर्तमृत्तिकयेत्यादि । विशुद्धवेद्यां पादोनमापूर्येत्यपि वा योजनीयम् । खातमूलस्थलीमस्त्रप्रोक्षणेनास्त्रगव्यसेचनेन च विशोध्य तत्रास्त्रप्रोक्षितमृदादिभिरापूरणं कार्यम् । विशुद्धवेद्यामिति मार्जनालेपनाभ्यां मुष्ट्यादिभिर्वा स्थलशुद्धिरुक्ता । स्नानसकलीकरणादि सर्वं सामान्यसिद्धम् ॥ ५९ ॥

**क्षेत्रे रन्ध्रपुटे प्रकल्प्य नवकं मध्येऽस्य बाह्यावृतौ**
**षट्कं दिक्षु विदिक्षु युग्मयुगलं चैकैकशस्तद्बहिः ।**
**तस्मिन्नर्पितदर्भके महितपीठे सादिवांवास्तुना**
**वास्तुं प्राक् पुरुषेण ङेनतिमता वामादिकाङ्गैर्यजेत् ॥ ६० ॥**

विमर्शिनी

**रन्ध्रपुटे** आयामतो विस्तारतश्च दशभिः सूत्रपातैर्नवपुटं कृत्वा तत्र क्षेत्रे। मध्ये नवकं पदानां नवकं स्वस्तिकत्वेन प्रकल्प्य। अस्य नवकस्य। बाह्यावृतौ दिक्षु पदानां षट्कं, विदिक्षु युग्मयुगलं द्विकद्वयं, तत्राग्निवायुकोणयोः पूर्वापरायतमितरकोणयोर्दक्षिणोत्तरायतं च प्रकल्प्य। तद्बहिरेकैकशश्च पदानि प्रकल्प्य। अर्पितदर्भके दर्भान् विन्यस्य। तस्मिन् महितपीठे पूजितपीठे। प्राक् प्रथमम्। सादिवांवास्तुना आदिवांवास्तुयुक्तेन। आदिः प्रणवः। ङेनतिमता चतुर्थ्येकवचननमोयुक्तेन। पुरुषेण पुरुष इति पदेन, 'ओं वां वास्तुपुरुषाय नमः' इति मन्त्रेण आवाह्य। वामादिकाङ्गैः वां हृदयाय नमः इत्याद्यङ्गैः सह वास्तुं यजेत्॥ ६०॥

विवरणम्

**क्षेत्र** इति वास्तुमण्डलकथनम्। सर्वतो नवपुटं क्षेत्रमास्फाल्य तत्र मध्यतो नवपदैरेकं पदं मार्जनतस्सम्पाद्य तत्र स्वस्तिकमष्टदलकमलं वा लिखेत्। ततश्चतुर्दिक्षु द्विद्विपुटगतेन षट्केनैकैकं पदं सम्पाद्यम्। कोणेषु द्विद्विपदतो द्वे द्वे पदे स्याताम्। ततः परितो बाह्यपङ्क्तौ चतुर्दिक्षु पदानि द्वात्रिंशद् भवन्ति। पुनरष्टदिक्षु शर्वस्कन्दादीनामेकैकं पदमुपजनयितव्यमिति। प्रकल्प्येत्यनेनैव रजोभिश्चित्रीकरणमप्युक्तम्। पदानां महत्त्वे स्वस्तिकानि कार्याणि। अर्पितदर्भक इति। मुष्टिमात्रैर्दर्भैः प्रतिपदमास्तरणमुक्तम्। दर्भकशब्देन कूर्चोऽपि वा अभिप्रेयते। महितपीठ इति। दैव्येव पीठपूजा प्रासादपुरुषपीठोचितत्वात्। यद्वा महितपीठ इति महीं करोति महयति ततो निष्ठा महिते पीठे इति, तस्य पीठ एव पृथिव्यन्तं पीठं प्रपूज्य। तत्र वास्तुपुरुषं पूजयेदिति भावः। सादीति। प्राग्वास्तुं यजेदिति सम्बन्धः। यजेदित्यावाहनादिपूर्वकं पूजनमुक्तम्। सादिवांवास्तुना ङेनतिमता पुरुषेणेति वास्तुदशाक्षरोद्धारः। आदिः प्रणवः। ओं वां वास्तुपुरुषाय नमः इति मन्त्रः। वां वीं इत्यादीन्यङ्गानि। वामादिकाङ्गैरिति। सहेत्युपस्कारः॥ ६०॥

तत्सन्नमःप्रपुटितं निजनाम ङेन्तं
तारादिकं निजपदाङ्कमर्कवर्णम्।
ब्राह्मं मनुं विदुरथ प्रणवप्रणाम-
पूर्वं स्वनाम रसवर्णकमक्षराङ्गम्॥ ६१॥

---

१. 'ते' क. ख. पाठः.

विमर्शिनी

ब्राह्मं मनुमुद्धरति — **तत्सन्नम** इति । तारादिकं प्रणवादिकं तत्सन्नमः-प्रपुटितं तत्सन्नम इत्यनेन रुद्धम् । ङेन्तं चतुर्थ्येकवचनान्तम् । निजनाम ब्रह्मेति नाम 'ओं तत्सन्नमो ब्रह्मणे तत्सन्नमः' इति । अर्कवर्णं द्वादशाक्षरं ब्राह्मं मनुं विदुः । निजपदाङ्गकम् अस्य मन्त्रस्य निजपदानि अङ्गानि 'ओं हृदयाय नमः', 'तत्सत् शिरसे स्वाहा' इत्यादि । अथेति पक्षान्तरद्योतकमव्ययम् । प्रणवप्रणामपूर्वम् 'ओं नमः' इत्यादिकम् । स्वनाम ब्रह्मेति नाम । चतुर्थ्यन्त-मित्यर्थात् सिद्धं भवति । 'ओं नमो ब्रह्मणे' इति । रसवर्णकं षडक्षरम् अक्षराङ्गम् अस्याक्षरैरङ्गानीत्यर्थः ॥ ६१ ॥

विवरणम्

वास्तुद्वादशाक्षरमाह — **तत्सदिति** । तत् ङेन्तं निजनाम इति । वास्तुपुरुषायेत्येवं स्थितस्य पूर्वोक्तस्य नाम्नो ग्रहणम् । तारादिकमिति पुट-नक्रियाविशेषणम् । 'ओं नमो वास्तुपुरुषाय ओं नमः' इति मन्त्रः । निज-पदाङ्गकमिति । षड्भिः पदैरङ्गान्युक्तानि । ब्राह्मं द्वादशाक्षरमप्यनेनैवोद्धृतम् । तत् सन्नमःप्रपुटितमित्येकं पदम् । निजनाम ब्रह्मपदम् । 'ओं तत्सन्नमो ब्रह्मणे तत्सन्नम' इति । निजपदाङ्गकमिति । अत्र तत्सदित्येकमेव पदं द्रष्टव्यम् । रसवर्णं षडक्षरम् । अक्षराङ्गमिति । अत्र पञ्चमवर्णेन नेत्रद्वयमस्त्रान्ते इष्यते ॥ ६१ ॥

**तत्र वास्तुतनुक्लृप्तविष्टरेऽथार्यकादिवृतमात्मसम्भवम् ।**
**सन्निधाप्य मनुनामुनोदितेनाङ्गषट्कसहितं समर्चयेत् ॥ ६२ ॥**

विमर्शिनी

एवं मन्त्रादिकमुक्त्वा[1] ब्रह्मादीनां पूजामाह — **तत्रेति** । अथ वास्तु-पूजानन्तरम् । वास्तुतनुक्लृप्तविष्टरे वास्तुतन्वा क्लृप्ते विष्टरे । आर्यकादिवृतम् आर्यकादिभिः परिवृतम् । आत्मसम्भवं ब्रह्माणम् । उदितेन उक्तेन । अमुना मनुना । सन्निधाप्य आवाहनादि कृत्वा, अङ्गषट्कसहितं यथा भवति तथार्च-येत् ॥ ६२ ॥

विवरणम्

**तत्र वास्तुतनुक्लृप्तविष्टर** इति । वास्तुपुरुषस्य शरीरेणैव कल्पिते पीठे । तदेव ब्रह्मादिदेवतानां पीठमिति भावः । यद्वा वास्तुपुरुषशरीरेऽपि क्लृप्ते

---

१. 'न्त्रानुक्त्वा' ग. पाठः.

पीठ इति । तदुपरि ब्रह्मणः स्वकं धर्माधर्मादिरूपं पीठं पूजयेत् । अणिमादिसर्वसिद्ध्यन्ता नव शक्तयः । 'सर्वज्ञानक्रियाव्यक्तकमलासनाय योगपीठात्मने नम इति समष्टिमन्त्रः । आर्यकादीनां पद्ममात्रं पूजनीयम् । आत्मसम्भवं स्वाङ्गषट्कसहितमार्यकादिवृतमिति सम्बन्धः । आत्मसम्भवो ब्रह्मा । स च स्रुक्स्रुवदण्डकमण्डलुधरो रक्तः प्रतिपत्तव्यः । सन्निधाप्येति मूर्त्तिकल्पनावाहनादिकमुक्तं स्वस्वमन्त्रेण । आर्यकादीनामाराधनमात्रेण सन्निधापनम् । उदितो मन्त्रो द्वादशाक्षरः षडक्षरो वा ॥ ६२ ॥

**आर्यकसावित्राख्यौ सविता सविवस्वदिन्द्रजय इन्द्रः ।**
**मित्रो रुद्रजयाभिधरुद्रमहीधरयुतापवत्सापाः ॥ ६३ ॥**

विमर्शिनी

प्रस्तुतमार्यकादिकं पठति—**आर्यकसावित्राख्याविति** । आर्यकसावित्राख्यौ आर्यकः सावित्रश्च आर्यकाय नमः, सावित्राय नमः, सविता सवित्रे नम इत्यादि । सविवस्वदिन्द्रजयः विवस्वदिन्द्रजयाभ्यां सहितः । इन्द्रः मित्रः । रुद्रजयाभिधरुद्रमहीधरयुतापवत्सापाः रुद्रजयो रुद्रो महीधर आपवत्स आपश्च ॥ ६३ ॥

विवरणम्

**आर्यकसावित्राख्याविति** । सविता सावित्र इति केचित् । सविवस्वदिन्द्रजय इति । विवस्वानिन्द्रजयश्च । आपवत्स आपश्च देवताद्वयम् ॥ ६३ ॥

**प्रागादीशान्तममी क्रमशः स्युरथापपूर्वयजनविधौ ।**
**कोणगतद्वितयानां सक्षेत्राणां क्रमो विपर्ययः ॥ ६४ ॥**

विमर्शिनी

**अमी** प्रागादीशान्तं क्रमशः स्युः । अथेति पक्षान्तरद्योतको निपातः । आपपूर्वयजनविधौ बहिरारब्धपूजायाम् । कोणगतद्वितयानाम् आपवत्सापादीनां सक्षेत्राणां स्थानैः सहितानां क्रमो विपर्ययः व्यत्यसनीयः । अत्र नमोन्ताश्च मन्त्रा ग्राह्याः ॥ ६४ ॥

विवरणम्

**प्रागादीति** । हरिमहिषनिहन्त्र्योरिति वक्ष्यमाणत्वात् तद्विषयमेतत् । क्रमशः स्युरिति । अत एवाग्नेयवायव्यद्विकानां प्रागायतत्वं नैर्ऋतैशानद्विका-

नामुदगायतत्वं च लभ्यते । अथापपूर्वयजनविधाविति । शिवादिविषयमेतत् । ऐशाद्विकयोः पूर्वसिन्नापः पश्चिम आपवत्सः पूर्वपद आर्यक इत्यादि ॥ ६४ ॥

**ईशानः पर्जन्यो जयन्त इन्द्रः ससूर्यसत्यभृशः ।**
**भूयोऽन्तरिक्षवह्नी पूषा वितथो गृहक्षतोऽथ यमः ॥ ६५ ॥**

विमर्शिनी

**ईशानः** पर्जन्यः जयन्तः इन्द्रः । ससूर्यसत्यभृशः सूर्यः सत्यो भृशश्च । भूयः पुनः । अन्तरिक्षवह्नी अन्तरिक्षो वह्निश्च, अग्नये नमः इति । पूषा वितथः गृहक्षतः अथ यमः यमश्च ॥ ६५ ॥

विवरणम्

**ईशान** इति । अत्र ईशानाग्निपितृवाय्वादयोऽग्न्यादिकोणपदमारभ्य प्रतिदिशमष्टाष्ट स्यु । गृहक्षतो गृहरक्षको वा ॥ ६५ ॥

**गन्धर्वभृङ्गराजौ मृगपितृदौवारिकाः ससुग्रीवाः ।**
**अथ पुष्पदन्तवरुणासुरशोषा रोगवायुनागाश्च ॥ ६६ ॥**

विमर्शिनी

**गन्धर्वभृङ्गराजौ** गन्धर्वो भृङ्गराजश्च मृगपितृदौवारिकाः मृगः पितरो दौवारिकश्च । ससुग्रीवाः सुग्रीवश्च । अथ पुष्पदन्तवरुणासुरशोषाः पुष्पदन्तो वरुणोऽसुरः शोषश्च । रोगवायुनागाः रोगो वायुर्नागश्च ॥ ६६ ॥

विवरणम्

**पितृशब्दो** बहुवचनान्तः । रोगः पापयक्ष्मा । वा(युः)नाग(श्चे)ति ॥ ६६ ॥

**मुख्यो भल्लाटकसोमार्गलका दित्युदित्युपेताः स्युः ।**
**ईशाद्यैकैकपदे द्वात्रिंशद्देवता बहिः प्रोक्ताः ॥ ६७ ॥**

विमर्शिनी

**मुख्यः** भल्लाटकसोमार्गलकाः भल्लाटकः सोमोऽर्गलश्च । दित्युदित्युपेताः दितिरुदितिरित्याभ्यां युक्ताः । बहिरीशाद्यैकैकपदे ईशकोणमारभ्य प्रादक्षिण्यक्रमेणैकैकस्मिन् पदे । एता द्वात्रिंशद्देवताः प्रोक्ताः ॥ ६७ ॥

विवरणम्

**दित्युदित्युपेता** इत्येकं पदम् । यद्वा भल्लाटकाद्येकं पदं दित्युदिती वान्त्ये देवते । अदितिदिती वा । एवमन्यदप्यवबोद्धव्यम् ॥ ६७ ॥

---

१. 'रुद्रको' ख. पाठः.

**इति हरिमहिषनिहन्त्र्योरन्तर्बहिरर्चने क्रमोऽन्येषु ।**
**ईशानादिबहिष्ठापादिधरान्तान्तरान्तरजनिष्ठः ॥ ६८ ॥**

विमर्शिनी

**हरिमहिषनिहन्त्र्योरन्तर्बहिश्चार्चने** इति क्रमः स्यात् । अन्येषु पञ्चसु । ईशानादिबहिष्ठापादिधरान्तान्तरान्तरजनिष्ठः ईशानादिबहिष्ठ आपादिधरान्तान्तरोऽन्तरजनिष्ठश्च क्रमः स्यात् । ईशानादिद्वात्रिंशद्देवताभिर्बहिष्ठाभिर्युक्तः, आपापवत्सादिधरो महीधरः तदन्तो धरान्तस्ताभिर्द्वादशभिरन्तरे अन्तराले स्थिताभिर्देवताभिश्च युक्तः, अन्तरजनिष्ठः अन्तरस्थितब्रह्मावसितः क्रमः स्यात् [॥ ६८ ॥

विवरणम्

**हरिमहिषनिहन्त्र्योरिति** । एवमुक्तप्रकारेणेत्यर्थः । पूर्वमीशानादिबहिष्ठास्तत आपादिमहीधरान्ता आभ्यन्तराः पुनरन्तर्ब्रह्मा । अनया व्यवस्थया युक्तः क्रम इति ॥ ६८ ॥

**शर्वस्कन्दार्यमणौ जम्भकपिलिपिञ्छकौ दिशि बहिः स्युः ।**
**विदिशि चरकी विदारी पूतनिका पापराक्षसीशाद्यम् ॥ ६९ ॥**
**अथ देवासुरगन्धर्वयक्षपितरः सनागराक्षसकाः ।**
**पूर्वाद्यष्टदिशासु क्रमशः सपिशाचका ग्रहाः सकले ॥ ७० ॥**

विमर्शिनी

**अथ सकले** बहिः द्वात्रिंशद्देवतानामपि बहिर्दिशि । शर्वस्कन्दार्यमणौ शर्वस्कन्दश्चार्यमा च, जम्भकपिलिपिञ्छकौ जम्भकः पिलिपिञ्छकश्च स्युः । विदिशि ईशाद्यं यथा भवति तथा । चरकी विदारी । पूतनिका इति पूतना । पापराक्षसी च स्युः । पूर्वाद्यष्टदिशासु क्रमशो देवासुरगन्धर्वयक्षपितरः देवा असुरा गन्धर्वा यक्षाः पितरश्च । सनागराक्षसकाः नागा राक्षसाश्च । सपिशाचकाः पिशाचाश्च । ग्रहा इति देवग्रहेभ्यो नम इत्यादिमन्त्रा उक्ताः ॥ ६९,७० ॥

विवरणम्

**दिशीति** । पूर्वादिदिक्षु ईशाद्यम् । विदिशीति । ऐशान्यादिविदिक्षु । पूतनिका पूतना । ग्रहाः सकल इति। ग्रहग्रहणेन देवग्रहेभ्योऽसुरग्रहेभ्य इत्येवं प्रयोग उक्तः ॥ ६९,७० ॥

**विरिञ्चं द्विपञ्चाशता देवताभिर्वृतं चार्चयित्वा यथोक्तक्रमेण ।**
**अमुष्मै निवेद्याथ तद्देवताभ्यस्त्रिपञ्चाशते तत्र दद्याद् बलिं च ॥ ७१॥**

विमर्शिनी

द्विपञ्चाशता देवताभिर्वृतं विरिञ्चं ब्रह्माणम् । यथोक्तक्रमेणार्चयित्वा पूजयित्वा । अमुष्मै ब्रह्मणे निवेद्य । अथ त्रिपञ्चाशते तद्देवताभ्यस्तत्र बलिं च दद्यात् ॥ ७१ ॥

विवरणम्

द्विपञ्चाशतेति देवग्रहाद्युपलक्षणम् । वाद्ययोगो बलिक्लृप्तिश्च सामान्यतो लभ्यते । *विद्वानिति ब्रह्मणो निवेद्यविकल्पः सूचितः । यद्वा वास्तुशरीराद्यभिज्ञत्वमुक्तम् । तदुक्तम् ।

"ईशानेऽस्य शिरः क्षिप्तं पादौ निर्ऋतिगोचरौ ।
जानुनी कोर्परे (?) चास्य वायव्याग्नेयकोष्ठयोः ॥
करौ वक्षसि निक्षिप्य प्रोत्तानः शयितस्तथा ।"

इति । नीचीनः शयित इत्येके ।

"मूर्ध्नीशो दितिपर्जन्यौ दृशोरापश्च तन्मुखे ।
आपवत्सो गलेऽसस्थौ जयन्तश्चादितिस्तथा ।
इन्द्रार्गलादयो बाह्वोः स्तनयोरार्यभूधरौ ।
कुक्षौ मित्रविवस्वन्तौ मेढ्रेऽण्डे चेन्द्रतज्जयौ ॥
सा(वि)त्रः सविता रुद्रस्तज्जयश्च प्रकोष्ठयोः ।
पादयोः पूषपापाद्यास्तदग्रे पितरः स्थिताः ॥
शिरोंऽसाद्युपान्तेषु चरकीशर्वस्कन्दादयः ।
हृदये ब्रह्मा ... ... ... ...॥"

इति । यद्वा तद्देवतारूपाभिज्ञत्वं विद्वच्छब्देनाभिप्रेतं, यदुक्तम् —

"ब्रह्मा चतुर्मुखो रक्तो लम्बकूर्चश्चतुर्भुजः ।
अक्षमालां स्रुवं दक्षे वामे दण्डं कमण्डलुम् ॥" इति ॥

"सर्वे चतुर्भुजा ध्येया वास्तुदेहे व्यवस्थिताः ।
हृदञ्जलिपुटास्सर्वे खड्गखेटकपाणयः ॥

---

* 'अमुष्मै निवेद्याथ विद्वान् प्रदद्याद् बलिं चाखिलाभ्योऽथ तद्देवताभ्यः' इति विवरणपाठः.

खड्गं च पानपात्रं च क्षुरिकां कर्तरीं तथा ।
दधाना भीमरूपास्ता राक्षस्यः परिकीर्तिताः ॥
वज्रं शक्तिं च खड्गं च पाशं च विकृताननाः ।
दधाना भीषणाः प्रोक्ता ग्रहा स्कन्दादिकाश्च ते ॥"

इति । यद्वा विद्वच्छब्देन प्रतिदैवतं बलिद्रव्याभिज्ञत्वमुक्तम् । दध्याज्यगुलमिश्रमन्नं ब्रह्मणः, पायसकृसरमाषान्नगुळान्नघृतान्नदध्यन्नैरेकैकवर्गस्य बलिरिति । अयं संक्षेपबलिः । अथ विस्तारबलिः ।

आज्याक्षतैर्यजेदीशमुत्पलाभिः पताकया ।
रत्नैर्वितानैः कौसुम्भैर्माषैर्मांसैः स्रुचानलम् ॥
लाजैस्सुवर्णैर्भूयोऽपि लड्डुकैः पिशितैरपि ।
गन्धैश्च खगजिह्वाभिर्यवैश्च तिलवारिभिः ॥
दौवारिकं दन्तकाष्ठैर्धूपैर्दर्भैश्च पङ्कजैः ।
सुरया च घृतान्नेन यवैश्च घृतमण्डकैः ॥
नागं नागप्रसूनैश्च भक्ष्यैर्मुद्गौदनेन च ।
मधुपायसैस्तण्डुलैश्च शाल्यन्नैर्माषसंयुतैः ॥
क्षीरेणापमथैशान्यां पादार्धे वा पदद्वये ।
तत्पूर्वे सर्पिषा प्राच्यां लड्डुकैश्च कुशोदनैः ॥
अग्नौ तु दक्षिणे पुष्पगुलैररुणचन्दनैः ।
हरिद्रान्नेन नैर्ऋत्यां चित्रान्नैस्तस्य पश्चिमे ॥
घृतान्नेन गुळान्नेन वायव्यां तस्य चोत्तरे ।
पक्वामयाभ्यां मांसाभ्यां माषमुद्गौदनैरुदक् ॥
मांसैस्सहार्चयित्वा तु ब्रह्माणं मध्यतो यजेत् ।
तिलगव्याक्षताज्यान्नैर्बाह्ये शर्वादिकान् यजेत् ॥
पायसैः कृसररुधिरैर्वसारक्तप्रसूनकैः ।
भक्ष्यमांसैर्मांसपित्तैर्दध्यन्नेन तु पूतनाम् ॥
दुग्धपित्तास्थिमांसान्नैर्वायव्यां पापराक्षसीम् ।

इति । अत्र सर्वत्राज्याक्षताद्युक्तद्रव्यप्रधानेनान्नेन बलिः । मांसरुधिरादीनां मोदकरक्तजलादयः प्रतिनिधयः स्युः । तत्पूर्वे सर्पिषेत्यापवत्सस्यापपाग्भागेऽवस्था-

नमुक्तम् । कोणगतद्वितयानां विपर्यासोऽत्राभिप्रेयते । कृसररुधिरैरिति द्रव्यद्वय-मुक्तं शैवादिष्वेव । वैष्णवादिषु तु भेदः । सत्यकस्य गोधूमान्नं मृगस्य तिलयवान्नं पितृणां कृसरः सुग्रीवस्य धूपापूपान्नं पुष्पदन्तस्य कुशस्तम्बघृतान्नम् । अर्गलस्य अक्षतशाल्यन्नम्, आपवत्सस्य हविर्दध्यन्नमिति ।

"भक्ष्यान्नाज्यं चरक्यै तु विदार्यै पद्ममांसकम् ।
रक्तान्नं दधिमांसं च क्षीरपित्तारुणोदनम् ॥
पूतनापापयोर्दिक्षु दद्यान्मांसाज्यपायसम् ।
पललापूपकृसरं मांसपित्तासृगान्त्रकम् ॥
सरक्तकुसुमान्नं च ततो दिक्षु बलिं हरेत् ।
पायसं रक्तमसितं हारिद्रं कृसरं सितम् ॥
सभक्ष्यं सतुषोदं च ग्रहेभ्योऽन्नं क्रमाद् भवेत् ॥"

इति ॥ ७१ ॥

**कुशप्रसूनाक्षतवारिहव्यैस्त्रिशः किरेद् वास्तुचतुर्मुखाभ्याम् ।**
**सकृत् सकृत् तत्परितः परेभ्यो बहिर्ग्रहेभ्योऽञ्चितपञ्चकूरैः ॥ ७२ ॥**

विमर्शिनी

**कुशप्रसूनाक्षतवारिहव्यैः** कुशपुष्पाक्षतजलमिश्रैर्हविर्भिः । वास्तुचतुर्मुखाभ्यां वास्तुपुरुषाय ब्रह्मणे च । त्रिशः बलिं किरेत् । तत्परितः तस्य परितः । परेभ्य आर्यकादिभ्य ईशानादिभ्यो वा । सकृत् सकृत् एकशः । बहिः शर्वस्कन्दादीनां बहिः । ग्रहेभ्यः देवग्रहादिभ्यः । अञ्चितपञ्चकूरैः पञ्चकूरमिश्रैर्हविर्भिरित्यर्थः ॥ ७२ ॥

विवरणम्

**परेभ्य** इति । कुशप्रसूनाक्षतवारिहव्यैरित्यनुषङ्गः । एवम् अञ्चितपञ्चकूरैरित्यत्रापि । अञ्चनं पूजनं सकलनिवेद्यसंस्कारोपलक्षणमेतत् । ब्रह्मादिहविषामप्येतत् समानम् ॥ ७२ ॥

**कृत्वा बलिं सलिलमत्र सकृत् सकृच्च**
**दत्त्वा प्रसन्नयजनं प्रविधाय धातुः ।**
**तद्वास्तुदैवतकदम्बकृतावलम्बं**
**प्राकारमध्यमवबुध्य करोतु रक्षाम् ॥ ७३ ॥**

विमर्शिनी

बलिं कृत्वा अत्र देवतासु । सकृत् सकृत् सलिलं च दत्त्वा । धातुर्ब्रह्मणः प्रसन्नयजनं प्रविधाय । प्राकारमध्यं महामर्यादान्तर्भागम् । तद्वास्तुदैवतकदम्बकृतावलम्बं पूर्वोक्तवास्तुदेवतानां समूहेन प्राप्ताश्रयम् । अवबुध्य ध्यात्वा रक्षां करोतु ॥ ७३ ॥

विवरणम्

**धातुः प्रसन्नयजनं प्रविधायेति** धाता ब्रह्मा । इतरेषामप्यविशेषादेतत् सामान्येन कर्तव्यम् । तद्वास्तुदैवतकदम्बकृतावलम्बमिति । कदम्बः समूहः । प्राकारमध्यं प्राकारचतुष्टयाभ्यन्तरस्थलम् । अयमभिप्रायः— नैषामुद्वासनमस्ति, किंतु वास्तुपुरुषस्य प्राकारपर्यन्ततया प्राग्व्याख्यातवदवस्थानं तदुपरि यथोक्तपदक्लृप्त्या ब्रह्मादीनामवस्थानं च वर्गशो व्यापकपुष्पाराधनभावनाभिः कल्पनीयमिति । यद्वा, *कृतिः पूजा अलंबो विनिपाताभावः । वास्तुदेवतानामित्थं पूजायां विनिपाताभावः प्राकाराभ्यन्तरस्य विभाव्य इति । अयं भावः । वास्तुदेवतानां प्रसन्नपूजान्ते विघ्नादिभिर्विनिपाताभावादि प्रार्थनीयमिति । तदुक्तम् । 'विहितो वास्तुबलिः स्याद् रक्षोविघ्नोपशान्तिसम्पद्भ्य' इति । कृत्स्नप्रासादादिनिर्माणाङ्गमेष वास्तुयाग इति ज्ञेयम् ॥ ७३ ॥

**गर्ते तत्र विशोधिते विनिहिताधाराश्ममध्यावटे**
**धान्याद्याहितविष्टरेऽथ निधिकुम्भं ताम्रजं वाश्मजम् ।**
**मूलेन प्रणिधाय तत्र विधिवद् रत्नादिपूर्णेऽर्णजं**
**सम्पूज्याब्जमिहाभिराध्य भुवनेशीमर्थयेतामुना ॥ ७४ ॥**

विमर्शिनी

निधिकलशादिस्थापनमाह — **गर्ते** इति । अथ विशोधिते विशेषेण शोधिते तत्र गर्ते । विनिहिताधाराश्ममध्यावटे स्थापिताया आधारशिलाया मध्यस्थे गर्ते । धान्याद्याहितविष्टरे धान्यतण्डुलादिभिः क्लृप्ते पीठे । ताम्रजं ताम्रमयम् । अश्मजं वा शिलानिर्मितं वा निधिकुम्भं निधिकलशम् । मूलेन प्रणिधाय न्यस्य । तत्र पीठे । विधिवत् कलशन्यायेन । रत्नादिपूर्णे रत्नकनकादिभिः पूर्णे निधिकलशे । अर्णजमब्जं ब्रह्मकलशपूजायां वक्ष्यमाणं लिपिपङ्कजं सम्पूज्य । इह लिपिपद्मे भुवनेशीं शक्तिम् । अभिराध्यावाह्य सम्पूज्य । अमुना वक्ष्यमाणेन मन्त्रेण । अर्थयेत प्राथयेत् ॥ ७४ ॥

---

* 'तद्वास्तुदैवतकदम्बकृतेरलम्बम्' इति पाठमङ्गीकृत्येदं व्याख्यानं प्रतिभाति ।

विवरणम्

इदानीं प्रासादशरीरमूलावयवभूताधारशिलादिनिष्पादनरूपां पातालप्रतिष्ठां प्रस्तौति — गर्ते तत्रेति । विशोधित इति । मुष्ट्यादिभिः स्थलशुद्धिरुक्ता । स्नानसकलीकरणादि सर्वं दिनान्तरे चेद् अर्थसिद्धम् । विनिहिताधाराश्ममध्यावट इति । आधारशिलादिलक्षणं कर्मशेषे भविष्यति । तत्र गर्ते प्रथमं तावद् भाविनपुंसकशिलासमसूत्रलक्षणे स्थाने सुदृढीकृते प्रासादमूलावयवभूतामाधारशिलां विनिदध्यात् । शिल्पिना प्राग्विनिहितामपि विनिधानधिया स्पृशेत् । तस्यास्तथा विनिहिताया यो मध्यदेशे निधिकलशनिश्चलतार्थं प्रागेव कृतोऽवटस्तस्मिन्नित्यर्थः । यद्वा विनिहित आधारो यस्मिन्नित्यपि समसनीयम् । विनिधानं विशेषतस्सन्निधापनम् । कृत्स्नस्य निधिकलशपृथिवीनपुंसकशिलाद्यभिमानिशक्तिमण्डलस्य नानाविशेषलक्षणस्य यत् सामान्यं तद्विशेषाणां स्वसामान्याश्रयत्वाद् आधारोऽभिप्रेयते । अयमिहाशयः । यद्दिगभिमुखतया भाविनी प्रतिमाभिमता तद्दिगभिमुखतयैवाधारशिलानिधिकलशादि सर्वं प्रतिष्ठापनीयम् । तथा चोक्तम् ।

"द्वारदिग्वीक्षमाणं तु मध्ये मन्त्रघटं न्यसेद्" ।

इति । निधिकलशाभिप्रायमेतत् । ततश्च स्थलशुद्धौ कृतायामेतदुचिते पूजास्थान उपविश्य आत्मनः सकलीकरणादि सर्वं विधाय गणपतिपूजाद्यनन्तरं तामाधारशिलां गव्यादिभिरस्त्रेण संशोध्य शोषणादि कृत्वा प्रणवेन शक्त्या वा सम्पूज्य तेनैव प्रतिष्ठाप्य "ध्रुवा द्यौ"रित्यभिमृश्य येन पूजिता तेनैव भाविकृत्स्नशक्तिमण्डलसामान्यलक्षणं परं महोऽभिवाह्य संपूज्य सन्निधापयेदिति । यदुक्तम् ।

'या शिला कलशाधारसंज्ञा तां विद्धि सर्वगाम् ।
सामर्थ्यशक्तिं सामान्यां निष्कलां परमेश्वरीम् ॥' इति ।
'संस्मरन् मन्त्रचक्रं तु सानन्तं प्रणवेन वै ।
बीजभूतं तदन्तस्थमध्वषट्कं स्मरन् यजेत् ॥'

इति च । धान्याद्याहितविष्टर इति वस्त्रादिग्रहणम् । तदवटे स्वस्तिकमष्टदलकमलं वालिख्य व्रीह्यादिभिर्यथान्यायं पीठं विरचय्य तत्र पीठपूजां विदध्यात् । ताम्रजमश्मजं वेत्यन्वयः । मूलेन प्रणिधायेति । तत्र कुम्भसंस्कारपूर्वकं यथा न पुनश्चलनं स्यात् तथा मूलमुच्चरन् विन्यस्येत्यर्थः । मूलग्रहणं ध्रुवा द्यौरित्यादिजपोपलक्षणम् । विधिवदिति सकलकलशन्यायप्राप्त्यर्थमुक्तम् । रत्नादिपूर्ण

इति सुवर्णधान्यादिग्रहणम् । हिरण्मय्याधारशक्तिरपि तस्मिन् विधीयते । अर्णजमब्जं लिपिपङ्कजम् । तच्च स्नपनपटले वक्ष्यते । इह भुवनेशीमभिराध्य हरिहरादिषु सर्वेष्वपि ह्रींबीजेन मूर्तिकल्पनावाहनादिपूर्वकमाराध्येत्यर्थः । आधारशक्तिरियमिति सम्प्रदायः । त्वमेवासनधारिकेति च तत्र लिङ्गम् । अङ्गलोकपालादिभिः पूजा स्यात् । अर्थयेतामुनेति । त्वमेव परमा शक्तिरित्यमुनेत्यर्थः । प्रागवसानीयार्घ्यदानादियमर्थना ॥ ७४ ॥

**त्वमेव परमा शक्तिस्त्वमेवासनधारिका ।**
**सन्तृप्तया त्वया देवि ! स्थातव्यमिह सर्वदा ॥ ७५ ॥ इति ।**

विमर्शिनी

मन्त्रमाह — **त्वमेवेत्यादि** ॥ ७५ ॥

**तद्दक्षिणे दर्भमृदादिशोधितं**
**निधाय कूर्मं कृतधान्यविष्टरे ।**
**विशोध्य तं धारणयात्ममन्त्रतः**
**प्राच्याधिवास्येति घटोपरि न्यसेत् ॥ ७६ ॥**

विमर्शिनी

**तद्दक्षिणे** कृतधान्यविष्टरे धान्यादिभिर्विरचितपीठे, अर्थात् पूजितपीठे । दर्भमृदादिशोधितं दर्भमृत्त्वग्भिः संघृष्य क्षालितम् । कूर्मं शिलापद्मं शिलाकूर्मं रजतपद्मं रजतकूर्मं स्वर्णपद्मं स्वर्णकूर्मं च निधाय। धारणया शोषणादिभिः, तानि विशोध्य । आत्ममन्त्रतः कूर्मस्यं मन्त्रेण प्राच्य सम्पूज्य । वस्त्रेणाच्छाद्याधिवास्य । इति वक्ष्यमाणप्रकारेण । घटोपरि निधिकलशस्योपरि न्यसेत् ॥ ७६ ॥

विवरणम्

दर्भमृदादिशोधितमिति । पूर्वं दर्भमृत्त्वग्भिर्घृष्ट्वा क्षालितं पुनर्घृतेनाङ्क्त्वा मसूरमुद्गादिपिष्टेनोद्वर्तनपूर्वकमपि क्षालितमित्यर्थः । कूर्ममित्येकवचनमेककूर्माभिप्रायम् । स चाश्मजो राजतो हैमो वा । यद्वा द्वयोस्त्रयाणां वा सामान्यतो निर्देशः । पद्ममपि तद्वद् द्रष्टव्यम् । कृतधान्यविष्टर इति । स्वस्तिके पीठं विरचय्य तत्रेत्यर्थः । धारणयेति । भूतसंहारशोषणादि, भूतसर्गाद्यभिधानं जीवाहरणादि सर्वं न्यायसिद्धम् । आत्ममन्त्रतः प्राच्येति । प्रणवो वक्ष्यमाणनिजमन्त्रो वा आत्ममन्त्रोऽभिप्रेतः । तेन मन्त्रोदयादिसर्वपूर्वकमावाहनादि

1. 'स्य मणेर्मन्त्रे' क. पाठः.

कृत्वाङ्गलोकपालादिभिः सह पूजां कुर्यात् । अधिवास्येति । वस्त्रेणाच्छादनादिकं तथा भावनाविशेषश्चोक्तः । इतिशब्दो वक्ष्यमाणप्रकारार्थः । शिलादिपद्मानामपि यथास्वं दर्भमृदादिशोधनं शोषणादिकं प्रणवेन शक्त्या वा पूजनमपि कार्यम् ॥ ७६ ॥

**शिलापद्मं कुम्भोपरि सुविनिधायार्णकमलं**
**समर्च्यास्मिन् भाव्यालयवदुपधायाश्मकमठम् ।**
**अकूबारायेति प्रणवनमसोरन्तरभुवा-**
**णुनावाह्यानेन प्रणवविहिताङ्गं यजतु च ॥ ७७ ॥**

विमर्शिनी

केन प्रकारेणेत्यत्राह — शिलापद्ममिति । कुम्भोपरि निधिकलशोपरि । शिलापद्मं शिलामयं (पद्मं) सुविनिधाय सुस्थितं यथा भवति तथा विनिधाय । अर्णकमलं लिपिपङ्कजं समर्च्य । अस्मिन् पद्मे । अश्मकमठं शिलाकूर्मम् । भाव्यालयवद्, भविष्यत्प्रासादं यन्मुखं तद्वदित्यर्थः । प्रणवनमसोः अन्तरभुवा मध्यस्थेन अकूबारायेत्यणुना । उपधाय सुस्थितं स्थापयित्वा । अनेन मन्त्रेणावाह्य । प्रणवविहिताङ्गं प्रणवेन कृताङ्गं तं यजतु च ॥ ७७ ॥

विवरणम्

**शिलापद्मं कुम्भोपरि सुविनिधायेति** । निधिकलशमुखे पल्लवालङ्कृते यथा पुनश्चलनं न स्यात् तथा निधायेत्यर्थः । अर्णकमलं समर्च्येति तस्मिन् पद्मे लिपिपङ्कजपूजोक्ता । यद्वा, अर्णेषु कमला श्रीर्यत्रेत्यपि समसनीयम् । लिपिपङ्कजाकारेऽक्षरजाते मूलप्रकृतिलक्षणा श्रीरप्यावाह्य पूजनीयेति तदाशयः । कमलागृहं वैष्णवप्रस्थानापेक्षमेव । शैवप्रस्थाने तु हृल्लेखोपलक्षणमेतत् । 'त्वमेव परमा शक्तिस्त्वमेव प्रकृतिः परा । सन्तृप्तया त्वया देवि स्थातव्यमिह सर्वदे' त्येवमर्थनापि स्यादिति । भाव्यालयवद् भावी प्रासादो यद्दिङ्मुखः तद्दिङ्मुखमित्यर्थः । अश्मकमठः शिलाकूर्मः । प्रणवनमसोरन्तरभुवा अकूबारायेत्यणुनेत्यन्वयः । वर्णै-रष्टाङ्गदेहं कल्पनीयम् ॥ ७७ ॥

**तदूर्ध्वस्थे पद्मे रजतरचिते सार्णकमले**
**न्यसेद् रौप्यं कूर्मं प्रयजतु च तेनैव मनुना ।**
**तथा स्वर्णाम्भोजेऽर्चितलिपिसरोजे कनकजं**
**निधायेष्ट्वा कूर्मं विधिवदमुना प्रार्थयतु च ॥ ७८ ॥**

**नमस्ते कूर्मरूपाय विष्णवे विश्वधारिणे ।**
**करिष्यमाणं प्रासादमिह त्वं धर्तुमर्हसि ॥ ७९ ॥**

**तदूर्ध्वस्थे** शिलाकूर्मोपरिस्थिते रजतरचिते पद्मे । सार्णकमले पूजितलिपिपङ्कजे । रौप्यं रूप्यमयं कूर्मं तेनैव मनुना न्यसेत् प्रयजतु च । तथा तद्वदेव स्वर्णाम्भोजे सौवर्णं पद्मं निधाय । तत्र अर्चितलिपिसरोजे पूजितलिपिपङ्कजे । कनकजं कनकमयं कूर्मम् । विधिवत् पूर्वविधिना निधाय । इष्ट्वा सम्पूज्य । अमुना वक्ष्यमाणमन्त्रेण । प्रार्थयतु प्रार्थनं कुर्यात् ॥ ७८ ॥

प्रार्थनामन्त्रमाह — **नमस्त** इत्यादिना ॥ ७९ ॥

विवरणम्

**तदूर्ध्वस्थ** इति कूर्मोपरिजराजतपद्मनिधानमुक्तम् । सार्णकमल इति तस्मिन् लिपिपङ्कजपूजोक्ता । तथा स्वर्णाम्भोज इति । राजतकूर्मोपरि निहित इति भावः । विधिवदिति सर्वत्र स्वमन्त्रेण प्रतिष्ठापनं ध्रुवादिजपश्चोक्तः । पद्मानामपि मूलप्रकृतिपक्षे समानमेतत् । पद्मानामेव त्रित्वे तु हेमपद्मे मूलप्रकृतियागानन्तरमेव कूर्मवदुपस्थानमिति ज्ञेयम् । निवेद्यं प्रसन्नपूजां च कृत्वा अवसानीयार्घ्यदानात् पूर्वमुपस्थानं भवति । कर्मावसानेऽस्त्रेण तालत्रयादिकरणं सर्वत्र समानम् ॥ ७८,७९ ॥

**विघ्नेशापचितिं विधाय यमदिग्द्वार्यग्रतः स्वस्तिके**
**देवं च[1] प्रसमर्च्य शेषहविषा हुत्वा प्रसाद्याथ तम् ।**
**कूर्मस्योपरि योगनालमुपधायाजन्मभूम्युद्गतं**
**गर्तं मृत्तिकयाभिपूर्य दृषदा चाकोट्य दार्ढ्यं नयेत् ॥ ८० ॥**

विमर्शिनी

**अथ** यमदिग्द्वारि भविष्यद्दक्षिणद्वारे स्थाने । विघ्नेशापचितिं गणपतिदक्षिणामूर्तिपूजां विधाय । अग्रतः कूर्मस्याग्रतः स्वस्तिके देवं च प्रसमर्च्य निवेद्य । शेषहविषा हुत्वा पूजाङ्गहोमं कृत्वा । तं देवं प्रसाद्य कूर्मस्योपरि । आजन्मभूम्युद्गतम् अजन्मा ब्रह्मा तस्य भूमिः स्थानं, नपुंसकशिलेत्यर्थः, तत्पर्यन्तमुद्गतमूर्ध्वगतं योगनालम् । उपधाय स्थापयित्वा । आजन्मभूम्युद्गतं जन्मभू-

---

१. 'देवेशं च स' क. पाठः २. 'पूजां गणहो' ख. पाठः.

मिरुपानद्पर्यन्ता भूमिः, तदन्तमिति केचित् । गर्तं मृत्तिकया दृषदा च शिलयाभिपूर्य । आकोट्याय:कूटेन संताड्य । दार्ढ्यं स्थिरताम् । नयेत् प्रापयेत् ॥ ८० ॥

विवरणम्

**यमदिग्द्वारि विघ्नेशापचितिं विधायेति** । अपचितिः पूजा । भाविप्रासाददक्षिणद्वारोद्देशे स्वस्तिकमष्टदलं वालिख्य तत्र पूजापटलभाविरीत्या गणपतिपूजां विदध्यात् । कृत्स्नस्य प्रासादादिविधेस्साक्षितया सकलविघ्नपरिहारार्थमसौ गणपतिस्तत्र स्वायतने सन्निधाप्यत इत्यवबोद्धव्यम् । अग्रतः स्वस्तिके देवं प्रसमर्च्येति भाविप्रासादाग्रियद्वारोद्देशे स्वस्तिकेऽष्टदले वा तत्तद्देवस्य पूजापटलभाविरीत्यैवाराधनमुक्तम् । कृत्स्नस्य स्वकीयप्रासादादिविधेः साक्षितया सकलप्रवृत्त्यनुग्रहार्थमस्य सन्निधापनमेतदित्यवबोद्धव्यम् । शेषहविषेति निवेद्यावशेषहविषः पूजाङ्गतया होमोऽयमुक्तः । कूर्मस्योपरीति योगनाळलक्षणमपि कर्मशेषे वक्ष्यते । उपधानं विनिधानम् । आजन्मभूम्युद्गतमिति तदीयायामपरिमाणमुक्तम् । यद्वाजन्मभूमिः प्रासादाधिष्ठानं सैव च पृथिवी तद्धारितयास्यावस्थापनमनेनोक्तम् । तेनास्यानन्तरूपत्वमपि सूचितं भवति । तथा चास्त्रप्रोक्षणशोषणादिपूर्वकमनन्तमन्त्रेणार्चनाद्यपि कार्यम् । 'नमस्तेऽनन्तरूपाय विष्णवे विश्वधारिणे' इत्येवमादिना प्रार्थनेति । गर्तं मृत्तिकया दृषदा च अभिपूर्येति सारमृत्साभिर्वृत्तपाषाणैश्च यथोचितमभिपूरणमुक्तम् । निधिकलशे प्रतिष्ठापिते तदवधिपूरणम् । पद्मकूर्मे तु तदवधिपूरणं योगनाळे निहिते च । कृत्स्नाभिपूरणमस्त्रप्रोक्षितमृद्दृषद्भिरौचित्यात कार्यमिति च ज्ञेयम् । आकोटनमुपरिदेशे सम्यगृजूकरणम् । दार्ढ्यं नयेदिति । यथा चिरकालात्ययेऽपि पादुकादेरवनतिर्न स्यात् तथा याज्ञिकैर्हस्तिपादैस्तत्स्थलस्य दृढतापादनम् । जलादिपूरणमप्यर्थात् सूचितम् । यदाह — 'पूरयेद्वालुकाभिश्च जलैश्चोपरि पूजयेदि'ति ॥ ८० ॥

**पूर्णप्रासाददेशे त्रिणयनपदसंप्रीणिताभीष्टवास्तौ**
**भाव्येतद्द्वारशाखापदमपि परिकल्प्योत्तरेणाथ चैतत् ।**
**उल्लेखादिक्रमेण ज्वलनमुपसमाधाय गव्यादिसिक्ता-**
**स्तद्याम्येऽष्टेष्टकास्तद्यमदिशि कलशं च न्यसेत् क्लृप्तपीठे ॥**

विमर्शिनी

अथ पूर्णप्रासाददेशे पूर्णप्रासादस्थाने सत्यपरस्मिन् मुहूर्ते रात्रौ । त्रिनयनपदसंप्रीणिताभीष्टवास्तौ ईशभागकृतस्वस्ववास्तुबलौ च सति । भाव्येतद्द्वार-

शाखापदं भविष्यत्प्रासादद्वारस्य दक्षिणशाखायाः स्थानमपि परिकल्प्य । एतदुत्तरेण तस्योत्तरभागे । उल्लेखादिक्रमेण उल्लेखनमारभ्य क्रमेण । ज्वलनमग्निम् । उपसमाधाय स्थापयित्वा । परिधिस्थापनात् प्राक् तद्याम्ये तद्दक्षिणभागे । क्लृप्तपीठे विरचिते पीठे । गव्यादिसिक्ताः पञ्चगव्याष्टगन्धजलैः सिक्ता अष्टेष्टकाः । तद्यमदिशि तासां दक्षिणे कलशं च न्यसेत् ॥ ८१ ॥

विवरणम्

तावता स्थलस्य दृढताभाव उपपीठबन्धनमपि कर्तव्यमिति पातालप्रतिष्ठामुक्त्वा प्रासादमध्यमावयवप्रक्रमरूपं प्रथमेष्टकोपधानं प्रस्तौति — **पूर्णप्रासाददेश** इति । गर्तं मृत्तिकया प्रपूर्य दृषदेत्येवं पूर्णे सति प्रासादोचितोद्देशे यदोपपीठयोगस्तदा पूर्णे तदुपरितने प्रासादोचितोद्देश इत्यर्थः । त्रिनयनपदसम्प्रीणिताभीष्टवास्ताविति । त्रिनयनपदं तत्र ईशानप्रदेशः । अभीष्टशब्देन स्वस्वोचितग्रहणम् । तत्र रात्रौ वास्तुपूजां प्रागुक्तवत् कृत्वेत्यर्थः । स्नानादि सर्वमर्थसिद्धम् । भाव्येतद्द्वारशाखामपि परिकल्प्येति । एतच्छब्देन प्रक्रान्तप्रासादग्रहणम् । द्वारशाखाकवाटयोगः भाविन्याः प्रासादप्रधानद्वारशाखायाः स्थानमपीष्टकाधानोपयोगितया शिल्पिभिः सहावधार्येत्यर्थः । प्रासादपरिग्रहाच्च गर्भगृहद्वारशाखाया मुखमण्डपोपपत्तौ तदीयद्वारशाखायाश्च न ग्रहणोपपत्तिः । प्रासादद्वारस्य वामेतरसिन्नित्यादि वक्ष्यति । ततश्च दक्षिणेयं द्वारशाखावसीयते । अथैतदुत्तरेणेति । एतत्पदसन्निधावुदग्भागे इत्यर्थः । 'एनपा द्वितीये'ति एतच्छब्दस्य द्वितीया । तत्र मण्डपं परिवृत्तं स्थलं वा प्रागेव कृत्वा तत्रेष्टकागर्भहोमौ स्याताम् । ज्वलनमुपसमाधायेति । परिधानादर्वाचीनं सर्वमपि निर्वर्त्येति भावः । तद्याम्ये क्लृप्तपीठे गव्यादिसिक्ता अष्टेष्टकाः, तद्यमदिशि क्लृप्तपीठे कलशं च न्यसेदिति योज्यम् । स्वस्तिकेऽष्टदलपद्मे वा व्रीहिवस्त्रादिभिः पीठं कल्पनीयम् । पञ्चगव्येन मृज्जलगोमूत्रपञ्चगव्यैर्हेमरत्नोदकयुतैस्तैर्वेष्टकाः स्नानेन शोधनीयाः । स्वे पीठे यथादिशं प्रागग्रतया च न्यासः । गन्धविलेपनं सन्धूपनमपि कार्यम् । न्यग्बिलतया च कलशन्यासः ॥ ८१ ॥

**धारणाक्रमविशोधितास्ततः स्वाणुतः समभिपूज्य चेष्टकाः ।**
**प्रार्च्य रत्नजलपूरितं घटं प्रारभेत हवनं विधानतः ॥ ८२ ॥**

---

१. 'नं च मन्त्रवित् ॥'' क. पाठः. २. 'नवित् ॥' ख. पाठः.

विमर्शिनी

ततो धारणाक्रमविशोधिताः शोषणादिभिः शोधिताः इष्टकाः । स्वाणुतः स्वस्थापनमन्त्रतः समभिपूज्य । रत्नजलपूरितं रत्नैर्जलैश्च पूरितम् । घटं कलशं प्राच्यं । हवनं होमम् । विधानतः परिधिस्थापनादिक्रमेण प्रारभेत ॥ ८२ ॥

विवरणम्

ततो धारणाक्रमविशोधिता इति । पीठपूजानन्तरं शोषणदहनप्लावनकाठिन्यकरणैः क्रमतो विशोधिता इत्यर्थः । स्वाणुतः समभिपूज्य च इति स्वमूलमन्त्रेणावाह्य साङ्गाराधनमुक्तम् । यद्वा 'ईशेऽष्टाभिरि'ति वक्ष्यमाणमन्त्रैः पूजनं प्रतीष्टकं मूलमध्याग्रेषु भागेषु त्रितत्त्वपूजापि परतत्त्वादिक्रमेण मन्त्रविदा कार्या । प्राच्येति मूलेनावाहनादिपूर्वकं पूजनमुक्तम् । प्रारभेत हवनमिति ततः परिधिनिधानादिकमुक्तम् । विधानविदिति होमविधानम् । वक्ष्यति च —'प्रारब्धाग्निमुखा स्वगृह्यविहितेने'त्यादि । यद्वा, द्वास्थानोदग्भागे मण्डपस्य संस्करणम् । तद्वेद्यामिष्टकाद्यधिवासस्तदुदगलिन्द एव वा । नागपदे स्वकुण्डे हवनमित्येतदपि सर्वं विधानविदित्युक्तम् ॥ ८२ ॥

**पक्कात् प्राग् भर्गदुर्गास्मरमुरभिदि मूलाक्षरैर्विघ्नराजे**
**पक्कान्ते द्वादशाख्याभिरिह हरिहरे पञ्चतत्त्वैस्त्रिधाम्नि ।**
**मूलार्णैस्त्र्यम्बके ब्रह्मभिरपि घृतमाहुत्य भूरादिमन्त्रै-**
**राज्यं द्रव्याहुतेः प्राङ् मुरभिदि जुहुयादूर्ध्वतश्चेतरेषु ॥ ८३ ॥**

विमर्शिनी

भर्गदुर्गास्मरमुरभिदि शिवदुर्गाशङ्करनारायणेषु । पक्कात् पक्कहोमात् । प्राक् पूर्वम् । मूलाक्षरैः मूलमन्त्रस्याक्षरैः 'ओं स्वाहा' 'नं स्वाहा' इत्यादिभिः । विघ्नराजे गणपतौ । पक्कान्ते द्वादशाख्याभिः 'ओं वज्रदन्ताय स्वाहा' इत्याद्यैर्द्वादशनामभिः । हरिहरे शङ्करनारायणे । इह पक्कान्ते पञ्चतत्त्वैः । त्रिधाम्नि विष्णौ । इह मूलार्णैः मूलमन्त्रस्याक्षरैः । त्र्यम्बके शिवे । इह ब्रह्मभिः पञ्चब्रह्ममन्त्रैः घृतहोमः स्यात् । अथ मुरभिदि विष्णौ । द्रव्याहुतेः प्राक् पुरः । भूरादिमन्त्रैः वक्ष्यमाणैराज्यं जुहुयात् । इतरेषु तदन्येषु । ऊर्ध्वतः द्रव्यहोमादूर्ध्वतश्च जुहुयात् ॥ ८३ ॥

विवरणम्

तत्र होमे विशेषं दर्शयति—**पक्वात् प्रागिति**। इह भर्गदुर्गास्मरसुरभिदि पक्वात् प्राङ् मूलाक्षरैर्घृतहोम इति सम्बन्धनीयम्। कर्तव्य इति शेषः। मूलाक्षराणि च सबिन्दुकानि प्रणवपुटितानि स्युः। 'प्रारभेत हवनं च मन्त्रविदित्ये'वंनिर्देशेन वैतल्लभ्यते। शिवे पीठमन्त्रैर्मूलाक्षरैश्चाज्यं हुत्वा तत्पुरुषेण पक्वं हुत्वा पुनः सद्यादिब्रह्मभिः प्रणवस्थाणुमन्त्रादिभिः पूजामन्त्रैश्च आज्यं हुत्वा व्योमव्यापिदशार्णेन पूर्णां जुहुयादिति क्रमः। एवं दुर्गादिष्वपि प्रयोगो विवेचनीयः। द्रव्याहुतेः प्रागिति। 'गायत्र्या सकलेष्वि'ति वक्ष्यमाणस्य द्रव्यहोमस्य ग्रहणम्। ऊर्ध्वतश्चेतरेष्विति। शिवादिषु चतुर्द्रव्यहोमं कृत्वा भूरादिमन्त्रैराज्यहोम इत्यर्थः॥ ८३॥

**भूराद्याः पृथगेव लोकपतयश्चाग्निश्च सोमो ग्रहा**
**नक्षत्राणि ससंप्रदान*ठयुगा भूतानि नागा हरौ।**
**सर्वाश्चाप्यथ देवतास्तदनु विश्वे चापि देवाः पुन-**
**र्विष्णुर्व्याहृतयश्च विष्णुपदमूलास्तेऽणवोऽन्येष्वतः॥ ८४॥**

**गायत्र्या सकलेषु प्रजुहोतु समिद्घृतान्नसर्पींषि।**
**पूर्णान्तं साष्टशतं दुर्गायां तानि मूलमन्त्रेण॥ ८५॥**

विमर्शिनी

भूरादिमन्त्रानाह—**भूराद्या** इति। हरौ भूराद्याश्चत्वारोऽणवः। अथ लोकपतयः इन्द्राद्याः। पृथगेव 'इन्द्राय स्वाहा' 'अग्नये स्वाहा' इत्याद्याः। अग्निः सोमः ग्रहा नक्षत्राणि भूतानि नागाः सर्वाश्चापि देवताः तदनु विश्वे चापि देवाः पुनर्विष्णुश्च। एते ससंप्रदानठयुगाः संप्रदानेन चतुर्थ्या ठयुगेन स्वाहाकारेण च युक्ताः पुनर्व्याहृतयश्च। अत्र 'सर्वाभ्यो देवताभ्य' इत्येक एव मन्त्रः। 'विश्वेभ्यो देवेभ्य' इति च। अतोऽन्येषु देवेषु। विष्णुपदमूलाः विष्णुस्थाने मूलमन्त्राः। तेऽणवो मन्त्राः॥ ८४॥

१. गाः प्रसिद्धवत् खं' ख. पाठः.

* 'ठद्वयं स्वाहा। द्विठमेव चेत्यस्य व्याख्याय द्विठं विसर्गस्तस्य बिन्दुद्वयात्मकत्वात्। विसर्गशब्देन च लक्षितलक्षणया स्वाहाकारो लक्ष्यते। स्वाहाशब्देनैव वह्नौ त्यागात् त्यागस्य च विसर्गपर्यायत्वाद् इत्येवं रघुनन्दनादिसम्प्रदायविदः॥' इति बृहदभिधानम्।

पुनर्होमशेषमाह — गायत्र्येति । सकलेषु समिद्घृतान्नसर्पींषि चत्वारि द्रव्याणि । गायत्र्या स्वस्वगायत्र्या । साष्टशतम् अष्टसहितशतं पूर्णान्तं प्रजुहोतु । दुर्गायां मूलमन्त्रेण तानि द्रव्याणि प्रजुहोतु ॥ ८५ ॥

विवरणम्

भूराद्या इति । चतस्रो व्याहृतयः पृथगेव । लोकपतय इति । इन्द्रादि-दशदिक्पालाः । अत एव नक्षत्राणां (न?) पृथक् परिग्रहो भवति । ससम्प्र-दानठयुगा इति सर्वत्र सम्बध्यते । सम्प्रदानं चतुर्थी, ठयुगं स्वाहाकारः । सर्वा देवता इति सम्बन्धनीयम् । एवं विश्वे देवा इति । अतोऽन्येषु तेऽणवो विष्णुपदमूला इत्यन्वयः । शर्वादिष्वपि त एव मन्त्राः, किन्तु विष्णुपदमन्त्रस्थाने स्वं स्वमूलं योज्यमिति भावः ॥ ८४,८५ ॥

**पक्वान्ते नामद्विषट्केन दिक्पैर्भूतैश्चाज्यं बाहुलेये महाद्भिः ।**
**चन्द्रार्काभ्यां कालवह्निग्रहैर्दिङ्नक्षत्रैर्द्रव्यं हुनेन्मूलतोऽन्ते ॥ ८६ ॥**

विमर्शिनी

बाहुलेये स्कन्दे पक्वान्ते । नामद्विषट्केन नाम्नां द्वादशकेन । दिक्पैरि-न्द्राद्यैः । भूतैर्महाद्भिः चन्द्रार्काभ्याम् । कालवह्निग्रहैः कालेन वह्निना ग्रहैश्च । दिङ्नक्षत्रैः दिग्भिर्नक्षत्रैश्चाज्यं हुनेत् । एतेषां नाममन्त्रैराज्यं हुनेदित्यर्थः । अन्ते मूलतो द्रव्यं हुनेत् ॥ ८६ ॥

विवरणम्

सर्वेष्वपि सप्तविंशतिरेव मन्त्रा भवन्ति, स्कन्दे तु भेदमाह — पक्वान्त इति । नामद्विषट्कं द्वादशनामानि । वक्ष्यति च—स्कन्दो बाण इत्यादि । अत्र पक्वं हुत्वा द्वादशनामभिराज्यहोमः । पूजामन्त्राज्यहोमं पूर्णाहुतिं च कृत्वा लोक-पालादिभिराज्यहोमः । सम्प्रदानठयुगयोगोऽत्रापि स्यात् । महद्भिरिति पृथक्पदम् । पूर्णां हुत्वान्ते मूलतश्चतुर्द्रव्यहोम इति ॥ ८६ ॥

**पक्वान्ते षण्मन्त्रकैराज्यमार्ये**
**हुत्वा गायत्र्या चतुर्द्रव्यकं च ।**
**गोष्ठ्याद्याख्या षड्युजेन्द्रादिन-**
**क्षत्रान्तैः स्कन्दोक्तैश्च सर्पिर्जुहोतु ॥ ८७ ॥**

१. 'त्र्या सा' क. ख. पाठः. २. 'तं पू' ग. पाठः.

विमर्शिनी

**आर्ये** पक्कान्ते षण्मन्त्रकैः रेवन्तादिभिः आज्यं हुत्वा गायत्र्या चतुर्द्रव्यकं च हुत्वा । गोप्त्राद्याख्याषड्युजा गोप्त्रादिनामद्वादशकेन । इन्द्रादिनक्षत्रान्तैः स्कन्दोक्तैः स्कन्दस्योक्तैर्मन्त्रैश्च सर्पिर्जुहोतु ॥ ८७ ॥

विवरणम्

**शास्तर्यपि भेदमाह— पक्कान्त** इति । षण्मन्त्रकैरिति । वक्ष्यति च 'रेवन्तश्च तथा शास्ते'त्यादि । पूजामन्त्रतदीयपूर्णानन्तरमेव द्रव्यहोमः । गोप्त्राद्याख्याषड्युजेति द्वादशनामानि च । वक्ष्यति च— गोप्ता च पिङ्गलाक्षश्चेत्यादि ॥ ८७ ॥

**स्विष्टकृत्प्रभृतिहोमविरामे प्राप्यं सर्पिरपि तासु घटे च ।**
**तद्द्वयं समधिवास्य निशीति स्थापयेत् तदनु ताः सुविलग्ने ॥**

विमर्शिनी

**स्विष्टकृत्प्रभृतिहोमविरामे** स्विष्टकृदादिहोमावसाने । सर्पिः संपातमपि । तास्विष्टकासु । घटे कलशे च प्राप्यं । तद्द्वयं निशि समधिवास्य तदनु ताः इष्टकाः । सुविलग्ने शोभने मुहूर्ते । इति वक्ष्यमाणविधिना स्थापयेत्॥८८॥

विवरणम्

**सर्पिः प्राप्यैति** सम्पातस्पर्शनमुक्तम् । पुनस्तन्मन्त्राराधनजपौ न्यायसिद्धौ । तद्द्वयं समधिवास्येति वस्त्राच्छादनादिकमुक्तम् । निशीति । अधिवास्येति सम्बन्धनीयम् । रात्रावेवमधिवास्येत्यर्थः । तदनु ततः पश्चात् । परेद्यवीति यावत् । यदुक्तं 'श्वोभूते प्रासादद्वारदेशं चे'त्यादि । सुविलग्ने मुहूर्ते ॥ ८८ ॥

**प्रासादद्वारस्य वामेतरस्मिन्**
**पार्श्वोद्देशे भावितत्पादुकान्तः ।**
**भूमिं कृत्वा सुस्थिरां शोधयित्वा**
**मात्वा क्षेत्रं कल्पयेदिष्टकानाम् ॥ ८९ ॥**

विमर्शिनी

**प्रासादद्वारस्य** वामेतरस्मिन् दक्षिणे पार्श्वोद्देशे द्वारशाखाधोभागे । भावितत्पादुकान्तः भविष्यतः पादुकस्यान्तर्भागे । भूमिं सुस्थिरां कृत्वा । शोधयित्वा

मार्जनादिभिः संशोध्य । मात्वा मानं कृत्वा । इष्टकानां क्षेत्रं यथा, तथा कल्पयेत् ॥ ८९ ॥

विवरणम्

वामेतरस्मिन्नित्यसन्देहार्थमभिधानम्[1] । प्राग्द्वारे प्रासादे याम्याया द्वारशाखाया दक्षिणतः प्रत्यग्द्वारे सौम्याया द्वारशाखाया उत्तरत इति । प्रासादग्रहणान्मुखमण्डपसम्भवे तद्ग्रहो न भवति । भावितत्पादुकान्तरिति । भाविनः प्रासादीयपादुकस्य आभ्यन्तरोद्देशे । भूमिं सुस्थिरां कृत्वेति यत्नतोऽपि स्थलदृढीकरणमुक्तम् । यद्वाधारेष्टकोनिधानमुच्यते[2] । शोधयित्वेति । मुष्ट्यादिभिः तत्स्थलशुद्धिरुक्ता । मात्वा क्षेत्रं कल्पयेदिति । सर्वेष्टकाचित्युपपत्त्या चतुरश्रस्य मानमेकैकेष्टकोपधानोपपत्त्या च तदवान्तरचतुरश्राणां मानमिति ज्ञेयम् । क्षेत्रं च तथाविधं गृह्यते । कल्पनं च रेखे लिखेदित्येतल्लेखनसौकर्यसिद्धये मूलाग्राद्युचितोद्देशाङ्कनं तदुचितरेखोत्किरणं वा भवति[3] । मानकल्पने चौचित्यात् पुरैव तक्षभिः सह कार्ये ॥ ८९ ॥

क्षेत्रे चतुष्पदयुते चतुरश्ररूपे
रेखे लिखेच्छिखिमरुत्पदयोः पुरोग्रे ।
तच्छिष्टकोष्ठयुजि पिप्पलशङ्कुनोद-
गग्रे ध्रुवेण सकलेषु शिवेऽस्त्रतो वा ॥ ९० ॥

विमर्शिनी

चतुष्पदयुते चतुरश्ररूपे क्षेत्रे । शिखिमरुत्पदयोः अग्निवायुकोणगतपदयोः पुरोग्रे प्रागग्रे । तच्छिष्टकोष्ठयुजि तच्छिष्टयोर्नैर्ऋतीशकोष्ठयोः द्वये उदगग्रे । पिप्पलशङ्कुना अश्वत्थवृक्षनिर्मितशङ्कुना । सकलेषु देवेषु । ध्रुवेण प्रणवेन । शिवेऽस्त्रतो वा रेखे लिखेत् । अयं भावः — त्रिकरवर्गभवे प्रासादे चतुरङ्गुलाधिककरमानेन समचतुरश्रं क्षेत्रं कृत्वा 'यद्वार्काहियुगैर्मिता ततिविततित्युत्सेधवत्योऽङ्गुलैरि'ति कर्मशेषे वक्ष्यमाणरीत्या द्वादशाङ्गुलदीर्घा अष्टाङ्गुलविस्तृताश्चतुरङ्गुलोत्सेधाश्चाष्टेष्टका ईशवाय्वोः पूर्वापरायता इतरयोरन्यथारूपाश्च स्थाप्याः । तथा सति मध्ये चतुरङ्गुलसमविस्तारस्य गर्भपात्रस्य गर्तं भवतीति ॥ ९० ॥

---

1. 'र्थमित्थ' क. ख., 2. 'काधा' ख., 3. 'ति । न सा' ग. पाठः

विवरणम्

**क्षेत्रे** इति। प्रागादिचतुष्पर्यन्तेषु प्रागुदगग्रतया प्रदक्षिणक्रमेण रेखा लिखंश्चतुरश्रं विदध्यात्। पुनस्तस्मिन्नायतचतुरश्ररूपपदचतुष्टययुततया प्रागेव कल्पिते सत्याग्नेयपदे प्रागग्रे द्वे रेखे नैर्ऋतपदे सौम्याग्रे वायव्यपदेऽपि प्रागग्रे पुनरैशानपदे च उदगग्रे प्रदक्षिणक्रमतो लिखेदिति प्रयोगक्रमोऽभिप्रेतः। तथाच तत्क्षेत्रोदरे परमल्पचतुरश्रं निष्पन्नं भवेदिति। ध्रुवः प्रणवः ॥ ९० ॥

**पीठं वर्मसमुक्षितेऽत्र परिपूज्यान्तःस्थितः संस्मरन्**
**देवं साञ्जलिरीश्वरे गिरिशवारं मूलमष्टावरम्।**
**अन्येष्वप्यभिजप्य वह्निचितिमासूद्वास्य चाष्टेष्टका-**
**श्चिन्वीतोन्नतिनिम्नते परिहरंस्तुल्या यथोपानहा ॥ ९१ ॥**

विमर्शिनी

**अथ** वर्मसमुक्षिते अत्र स्थले पीठं परिपूज्य। अन्तःस्थितः अन्तर्भागे तिष्ठन्। साञ्जलिरञ्जलियुक्तो देवं संस्मरन्। ईश्वरे शिवे। गिरिशवारम् एकादशवारम्, अन्येष्वष्टावरमपि मूलमभिजप्य। वह्निचितिं वह्निचैतन्यम्। आसु इष्टकासूद्वास्याष्टेष्टकाश्च यथा उपानहा तुल्या भवन्ति तथोन्नतिनिम्नते परिहरन् उन्नतिं निम्नतां च परिहरंश्चिन्वीत ॥ ९१ ॥

विवरणम्

**अत्र** वर्मसमुक्षिते पीठं परिपूज्येत्यन्वयः। अन्तः स्थितः साञ्जलिर्देवं संस्मरन्निति। प्रासादान्तर्ब्रह्मभागे स्थितस्य देवस्य तत्सन्निधाववस्थितेनाभिध्यानमेतत् प्रासादनिर्माणप्रारम्भाभ्यनुज्ञापनार्थमिति। यद्वान्तर्देवं संस्मरन्निति स्वहृद्येव पश्चात् ब्रह्मस्थानभाजि बिम्बे समावाह्यस्य देवस्यानुसन्धानमुक्तम्। चिन्वीतेति। चयनमुपधानम्। उन्नतिनिम्नते परिहरन्निति परस्परापेक्षं, मिथस्समा यथा स्युः तथा चिन्वीतेति स्वसीमापेक्षं वा। तदेतदाह—तुल्या यथोपानहेति। तथा चिन्वीतेति सोपस्कारमन्वयः। यदुक्तम्—"उपान(ध्व?द्व)त् प्रयुञ्जीत वर्जयेन्निम्नमुन्नतम्" इति ॥ ९१ ॥

**ईशेऽष्टाभिः सद्यजाभिः कलाभि-**
**र्वह्न्यंशादीशांशनिष्ठं क्रमेण।**
**लक्ष्मीशोमाश्रीशयोर्मूलवर्णै-**
**श्चिन्वीतान्येषु स्वमूलेन चैनाः ॥ ९२ ॥**

विमर्शिनी

**एना** इष्टकाः । वह्न्यंशादीशांशनिष्ठं वह्न्यंशमारभ्येशांशेऽवसानं यथा भवति तथा क्रमेण । ईशे सद्यजाभिः कलाभिः अष्टाभिः सद्योजातकलाभिः । लक्ष्मीशोमाश्रीशयोः विष्णुशङ्करनारायणयोः । मूलवर्णैर्मूलमन्त्रस्याक्षरैः । अन्येषु स्वस्वमूलेन च चिन्वीत ॥ ९२ ॥

विवरणम्

**क्रमेणेति** । वह्निभागे द्वे इष्टके उत्तरदक्षिणपदयोरुपधेये । नैर्ऋतभागे प्राक्पश्चिमपदयोरित्यादिरूपः क्रम उक्तः । प्रणवरुद्धा नमोन्ता इह मन्त्राः स्युः ॥ ९२ ॥

**आवाह्यात्र निजेन मूलमनुना देवं सहाङ्गं यजेदा-**
**लिप्यामलया मृदा कलशवारापूर्य गर्भावटम् ।**
**वीक्षेताक्षतसूनमोमिति जपन् क्षिप्त्वा जलावर्तकं**
**वामावर्तसमुद्भवेऽस्त्रहुतसंपातं च संपातयेत् ॥ ९३ ॥**

विमर्शिनी

**अत्र निजेन** मूलमनुना देवमावाह्य । सहाङ्गम् अङ्गैः सहितं यजेत् । अमलया मृदा तद्विवरमालिप्य । कलशवारा कलशजलेन । गर्भावटं गर्भस्थानगर्तमापूर्य ओमिति जपन् अक्षतसूनं तत्र जले क्षिप्त्वा जलावर्तं वीक्षेत । वामावर्तसमुद्भवे वामगत्यावर्ते जाते सति तत्प्रायश्चित्तार्थम् अस्त्रहुतसंपातं चास्त्रेणाज्यं हुत्वा तत्संपातं च संपातयेत् ॥ ९३ ॥

विवरणम्

**यजेदिति** मूलजपोपलक्षणम् । ओमिति जपन् अक्षतसूनं क्षिप्त्वा जलावर्तकं वीक्षेतेत्यन्वयः । सूनं पुष्पं, तच्च शुक्लमिति सम्प्रदायः ॥ ९३ ॥

**मनुवरमहितं महास्त्रगुप्तं विभुमभिकल्प्य तथेष्टकाश्चतस्रः ।**
**तदुपरि विनिधाय धान्यमृद्भिर्दृढमवटं परिपूर्य साधु रक्षेत् ॥ ९४ ॥**

विमर्शिनी

**मनुवरमहितं** महास्त्रगुप्तं मूलमन्त्रपूजितं स्वस्वमहास्त्रेण रक्षितम् । विभुं देवमभिकल्प्य । तथा तदुपरि तासामिष्टकानामुपरि चतस्र इष्टकाश्च विनिधाय । धान्यमृद्भिर्धान्यैर्मृद्भिश्च । अवटं गर्तं दृढं परिपूर्य । साधु यथावद् रक्षेत् ॥ ९४ ॥

विवरणम्

**मनुवरमहितमिति** । पुनरपि मूलेन किञ्चिद्यजनमुक्तम् । महास्त्रगुप्तमिति स्वास्त्रेण तालत्रयादिकमुक्तम् । महद्विशेषणं त्वादरार्थम् । साधु रक्षेदिति । पुनरपि तालत्रयादिकं लौकिकपुरुषै रक्षाकरणं चोक्तम्। यदुक्तम्— 'त्रिरात्रं रक्षाविधानं कृत्वा ततः कर्म समारभेत' इति । 'त्रिरात्रं विष्णुभूतास्तत्र क्रीडन्तीति' च। विष्णुग्रहणं शिवाद्युपलक्षणार्थमिति ॥ ९४ ॥

**ततः समभ्यर्चितवास्तुरत्र शुभेऽह्नि गर्भोचितसाधनानि ।**
**संभृत्य मन्त्री विनिधाय वह्निं समारभेतोत्तरतोऽग्निकार्यम् ॥ ९५ ॥**

विमर्शिनी

**ततः** शुभेऽह्नि शुभदिवसे रात्रावत्रापि । समभ्यर्चितवास्तुः सम्यग् वास्तुबलिकृत्। मन्त्री आचार्यः । स्वयं गर्भोचितसाधनानि गर्भाधानयोग्यानि साधनानि संभृत्य तस्य गर्भन्यासस्थानस्योत्तरतो वह्निं विनिधाय। अग्निकार्यं होमकर्म समारभेत॥ ९५ ॥

विवरणम्

गर्भाधानं प्रस्तौति । **तत** इति । समभ्यर्चितवास्तुरिति । पूर्वस्यां रात्राविय वास्तुपूजा भवति । गर्भोचितसाधनानि सम्भृत्येति । दुस्सम्पादसम्भारसम्भवात् सम्भारभूयस्त्वाद् वा एतदभिधानम् । यद्वा नात्र प्रतिनिधानमुचितमिति । मन्त्रीति स्नानादिपूर्वकमात्मनः सकलीकरणादिकमुक्तम् । समारभेतेति परिधिनिधानादर्वाक्तनमुक्तम् ॥ ९५ ॥

**न्यस्य न्यग्बिलमग्निदक्षिणदिशि व्रीह्यादिमन्मण्डले**
**पात्रं ताम्रमयं पिधानसहितं गव्यादिसंशोधितम् ।**
**पीठाराधनपूर्वमत्र कृतसंस्कारे समुत्तानिते**
**कुर्यात् सागरमुद्रितं धृतहिरण्येनाग्रदोष्णा सुधीः ॥ ९६ ॥**

विमर्शिनी

**अग्निदक्षिणदिशि** अग्नेर्दक्षिणभागे । व्रीह्यादिमन्मण्डले व्रीह्यादिभिर्विरचितपीठे मण्डले । ताम्रकृतं ताम्रेण कृतम् । पिधानसहितमुत्तरच्छदेन सहितम् । गव्यादिसंशोधितं गव्याष्टगन्धजलैः क्षालितम् । पात्रं गर्भपात्रम् । न्यग्बिलम् अधोमुखं न्यस्य । पीठाराधनपूर्वं पीठाराधनं पूर्वं यथा भवति तथा । कृतसंस्कारे

प्राणायामादिभिः संस्कृते। समुत्तानिते सम्यगुत्तानीकृतेऽत्र। घृतहिरण्येन हिरण्मयपवित्रसहितेन । अग्रदोष्णा कराग्रेण। सागरमृद्वृतिं समुद्रमृत्तिकया वृतिं सीमानं कुर्यात्। सुधीरिति सागरमृदा वृतिकल्पनायां तस्य पात्रस्य भूमण्डलरूपेण ध्यानमुक्तम् ॥ ९६ ॥

विवरणम्

व्रीह्यादिमन्मण्डल इति। स्वस्तिकमष्टदलकमलं वा मण्डलमालिख्य तत्र वस्त्रान्तरितैर्व्रीहितण्डुलादिभिः पीठं विधाय तस्मिन्नित्यर्थः। गर्भपात्रलक्षणमपि कर्मशेषे भविष्यति। गव्यादिसंशोधितमिति केवलोदकगोमूत्रगव्यगन्धजलादय उक्ताः। कृतसंस्कार इति, गन्धालेपनसन्धूपनशोषणादयः। अग्रदोष्णेति । हस्ताग्रेण। सुधीरिति । "भूमण्डलमनन्तस्थं सशैलाम्भोधिदिग्गजम्" इत्येवमभिध्यानकुशल इति भावः। अनेन तत्र प्रथममनन्तसन्निधानमपि समुचितमिति सूचितम् ॥ ९६ ॥

**कुड्यश्लेषमिह प्रकल्प्य वृतिमादावन्तरालस्थितं**
**प्रत्यक्प्राक्स्थमवागुदक्स्थमपि रेखाद्वन्द्वमापादयेत्।**
**पात्रेऽस्मिन् नवखण्डमण्डितमहीसंस्थानरूपे स्फुर-**
**द्वर्णाम्भोजचितीति तत्तदुदितद्रव्याणि विन्यस्यतु ॥ ९७ ॥**

विमर्शिनी

इह गर्भपात्रे आदौ वृतिम्। कुड्यश्लेषं कुड्ये श्लिष्टं[1] यथा तथा प्रकल्प्य। प्रत्यक्प्राक्स्थं प्राक्प्रत्यग्गतम्। अवागुदक्स्थं दक्षिणोत्तरगतमप्यन्तरालस्थितं रेखाद्वन्द्वम्। आपादयेत् कुर्यात्। नवखण्डमण्डितमहीसंस्थानरूपे नवभिः खण्डैर्मण्डितायाः पृथिव्याः संस्थानस्वरूपे। स्फुरद्वर्णाम्भोजचिति लिपिपङ्कजपूजया स्फुरल्लिपिपङ्कजचैतन्ययुक्तेऽस्मिन् पात्रे। तत्तदुदितद्रव्याणि तस्य तस्य देवस्योक्तानि द्रव्याणि। इति वक्ष्यमाणविधिना विन्यस्यतु ॥ ९७ ॥

विवरणम्

सागरमृद्वृतिप्रकारं दर्शयति—कुड्यश्लेषमिति। क्रियाविशेषणमेतत्। इहेति तस्मिन् पात्रे। गर्भपात्रस्य चतुर्दिशमुन्नतो भित्तिस्थानीयोऽवयवः कुड्यमभिप्रेयते। तत्र श्लेषो यथा भवति तथा प्रथमतः प्रागादिप्रदक्षिणतया वृतिं विधाय पुनस्तदन्तर्भागे पश्चादारभ्य प्राक्संस्थं दक्षिणत आरभ्य उदगन्तं च रेखाद्वयं सागरमृदैव रचयेत्। प्रत्यक्प्रागित्येवमाकारेण तिष्ठतीति प्रत्यक्प्राक्स्थम्,

1. 'श्लेषं य' ख. पाठः.

एवमवागुदक्स्थम् इत्येतदपि। अवाग् दक्षिणम्। नवखण्डमण्डितमहीसंस्थानरूप इति। भारतादिनवखण्डैर्मण्डिता मही इयं भूमिः तस्या एवेयं गर्भपात्रतलाकारेण नवखण्डयोगितया स्थितिश्चिन्तनीयेति भावः। पूर्वमिह सन्निधापितानन्तशिरोवर्तितया भूमेस्तन्मन्त्रेणास्मिन् पात्रे सन्निधापनमपि सूचितम्। स्फुरद्वर्णाम्भोजचितीति, लिपिपङ्कजपूजनमुक्तम्। इतिशब्दो वक्ष्यमाणपूजनप्रकारार्थः ॥ ९७ ॥

**मृन्मूलधातुमणिबीजकलोहक्लृप्त्या**
**द्रव्यार्पणं भवति सर्वसुपर्वगर्भे।**
**स्कन्देऽथ वाहमणिलोहकधातुबीज-**
**मृत्कन्दकक्रमतयेत्यपि वा प्रभेशे ॥ ९८ ॥**

विमर्शिनी

सर्वसुपर्वगर्भे सर्वेषां सुपर्वणां देवानां गर्भे। मृन्मूलधातुमणिबीजकलोहक्लृप्त्या मृदः मूलानि धातवः मणयो रत्नानि बीजानि लोहानि इति क्लृप्त्या द्रव्यार्पणं द्रव्याणामर्पणं भवति। अथ स्कन्दे वाहमणिलोहकधातुबीजमृत्कन्दकक्रमतया (स्व?) वाहाः स्ववाहनादीनि मणयः लोहानि धा(तूनि?तवः) बीजानि मृदः कन्दाः इति क्रमतया भवति। प्रभेशेऽपीति द्रव्यार्पणम् ॥ ९८ ॥

विवरणम्

अथ तत्तद्द्रव्याणि समुच्चयतो विवक्षन् प्रथमं तेषां हरिहरादिविषयं क्रमं दर्शयति—मृन्मूलेति। मणयो रत्नानि लाहशब्देन सुवर्णादीनां तद्विकृतवाहनादीनामपि ग्रहणम्। सुपर्वाणो देवा हरिहरादयः, कन्दकानि मूलानि इति। अपि वा प्रभेश इति। एवं स्कन्दोक्तक्रमेण वेत्यर्थः ॥ ९८ ॥

**भूभृत्तीर्थतरङ्गिणीह्रदकुलीरावासवल्मीकभू-**
**धान्यागारगजोक्षशृङ्गजमृदो दिक्कोणमध्ये न्यसेत्।**
**सेनानीतरदेवतास्वाधिदिशं पाथोजनीलोत्पलो-**
**त्पन्ने कैरवलोहितोत्पलसमुत्पन्ने च मूलान्यपि ॥ ९९ ॥**

विमर्शिनी

सेनानीतरदेवतासु स्कन्देतरेषु। भूभृत्तीर्थतरङ्गिणीह्रदकुलीरावासवल्मीकभूधान्यागारगजोक्षशृङ्गजमृदः भूभृत् पर्वतः तीर्थं प्रसिद्धं तरङ्गिणी नदी कुलीरावासः कर्कटकगुहा वल्मीकभूः वल्मीकभूमिः धान्यागारं खलः गजोक्षशृङ्गे गजशृङ्गमुक्षशृङ्गं च तेभ्यो जाता मृदः। दिक्कोणमध्ये पूर्वादिदिक्षु अग्न्या-

दिक्कोणेषु मध्ये च न्यसेत्। अधिदिशमिति सप्तम्यर्थेऽव्ययीभावः, दिक्ष्वित्यर्थः। तत्पूर्वादीत्यर्थात्। पाथोजनीलोत्पलोत्पन्ने पाथोजं पद्मं नीलोत्पलं कुवलयं ताभ्यामुत्पन्ने द्वे, कैरवलोहितोत्पलसमुत्पन्ने च कैरवं कुमुदं (ലോഹിതോല്പലം=ചെങ്ങഴിനീർ) ताभ्याम् उत्पन्ने च द्वे इति चत्वारि मूलान्यपि न्यसेत्॥ ९९॥

विवरणम्

भूभृत् पर्वतः तरङ्गिणी नदी धान्यागारं खलं वल्मीकादिभ्यो भवन्ति धान्यागारादिभ्यो जायन्त इति च कृत्समासः। सेनानीतरदेवतासु स्कन्दव्यतिरिक्तेषु देवेषु पूर्वत्रापि सम्बन्धनीयमेतत्। अधिदिशमिति। पूर्वादिचतुर्दिक्षु॥ ९९॥

**न्यस्येन्मनोह्वां हरितालमञ्जनं**
**श्यामं च पूर्वादिशिवान्तिमं क्रमात्।**
**ससीससौराष्ट्र्यभिधानरोचनं**
**सगैरिकं पारतमत्र मध्यतः॥ १००॥**

विमर्शिनी

अत्र सेनानीतरदेवतासु। पूर्वादिशिवान्तिमं क्रमाद् मनोह्वां मनश्शिलाम्। (മനശ്ശില=മനയോല) हरितालं तदेव। अञ्जनं श्यामं च ते एव। ससीससौराष्ट्र्यभिधानरोचनं सीसेन युक्ते सौराष्ट्र्यभिधानरोचने। (സീസം=ഈയം. സൌരാഷ്ട്രീ=തിരുവട്ടക്കായൽ. രോചന=ഗോരോചന) तत्रैकवद्भावः। सगैरिकं पारतं गैरिकसहितं पारतम्। गैरिकं पारतं चेत्यर्थः। (ഗൈരികം=ചെങ്കൽധാതു. പാരതം=രസം) तत्र मध्यतश्च॥१००॥

विवरणम्

पारतं रसम्। सेनानीतरदेवतास्वित्येतदिहाप्यनुवर्तते॥ १००॥

**वज्रं मौक्तिकवैडूर्यकशङ्खस्फटिकपुष्यकं षट्सु।**
**चन्द्रोपलं महानीलं तद्वन्न्यसतु चाब्जरागमपि॥ १०१॥**

विमर्शिनी

षट्सु स्कन्दरहितेषु षट्सु देवेषु। (വജ്രം=വൈരം.) मौक्तिकवैडूर्य(क)शङ्खस्फटिकपुष्यकम् (മൌക്തികം=മുത്തു). वैडूर्यं तदेव। शङ्खस्फटिकपुष्यकाणि च तान्येव। (ചന്ദ്രോപലം=ചന്ദ്രകാന്തം). । महानीलं तदेव। अब्जरागमपि पद्मरागं च। तद्वत् पूर्वादिमध्यान्तेषु न्यसतु ॥ १०१ ॥

विवरणम्

षट्स्वित्यनुवादमात्रम्। तद्वदिति पूर्वादिशिवान्तिमं क्रमादित्यर्थः ॥ १०१ ॥

तथा शालिनीवारकौ कङ्कुमाषौ
कुलस्थं सनिष्पावसंज्ञं तिलं च।
समुद्गं ससिद्धार्थकं सन्निदध्या-
द्धरौ साजितेशार्यसुम्भाभिमातौ ॥ १०२ ॥

विमर्शिनी

साजितेशार्यसुम्भाभिमातौ शङ्करनारायणशास्तृदुर्गासहिते हरौ। तथा क्रमेण। शालिनीवारकौ। (ശാലി=നെല്ല്. നീവാരം=വരിനെല്ല്). कङ्कुमाषौ=(കംഗു=കണ. മാഷം=ഉഴുന്ന്.) कुलस्थं (കുലത്ഥം=മുതിര). सनिष्पावसंज्ञम्। (നിഷ്പാവം=തുവര). तिलं च। (തിലം=എള്ള). समुद्गम्। (മുദ്ഗം=ചെറുപയറ്.) ससिद्धार्थकम्। (സിദ്ധാർത്ഥം=കടുക.) एतानि सन्निदध्यात् स्थापयेत्॥ १०२ ॥

विवरणम्

तथेति। एतदपि तद्वत्। सुम्भाभिमातिर्दुर्गा ॥ १०२ ॥

सुवर्णरजतायसत्रपु निधाय दिक्ष्वन्यतः
सुवर्णमयमर्पयेद् गरुडकूर्मशङ्खारि च।
शरासनगदाम्बुजं न्यसतु हैममन्तर्हरौ
सुपर्णपदसिंहकान्यपि तु तानि सुम्भद्विषि ॥ १०३ ॥

विमर्शिनी

हरौ दिक्षु सुवर्णरजतायसत्रपु। (സ്വർണ്ണം=പൊന്ന്. രജതം=വെള്ളി. അയസം=ഇരുമ്പ്. ത്രപു=ചെമ്പ്രാക്കൊട്ടി). एतानि निधायान्यतः कोणेषु। सुवर्णमयं सुवर्णकृतम्। गरुडकूर्मशङ्खारि च गरुडं कूर्मं शङ्खं

चक्रं च। अन्तः अन्तर्भागे। हैमं हेमकृतम्। शरासनगदाम्बुजं शरासनं धनुः गदामम्बुजं पद्मं च न्यसतु। सुम्भद्विषि दुर्गायामपि। सुपर्णपदसिंहकानि गरुडस्थाने सिंहयुक्तानि तानि न्यसतु॥ १०३॥

विवरणम्

अन्यत इति। कोणेषु। अरि चक्रम्। शरासनं धनुः। सुपर्णपदसिंहकानीति। गरुडस्थाने स्ववाहनं सिंहम्। इतराणि तु तान्येवेत्यर्थः। अत्र हरिहरस्य शास्तुश्च व्यावृत्तिः॥ १०३॥

त्र्यन्तं हरिवद् विधाय विदिशास्वार्येशनारायणे
न्यस्येच्छूलपरश्वधं दररथाङ्गं चाथ शार्ङ्गीश्वरे।
खट्वाङ्गार्धविधूक्षतार्क्ष्यकमठाक्षस्रग्गदाब्जं धनु-
र्हैमं शास्तरि हैमतोमरशराम्भोजं च मध्ये न्यसेत्॥ १०४॥

विमर्शिनी

आर्येशनारायणे शास्तृशङ्करनारायणे। हरिवत् हराविव। त्र्यन्तं सुवर्णरजतायसत्रपुपर्यन्तम्। दिक्षु विधाय कृत्वा। विदिशासु कोणेषु। शूलपरश्वधं शूलं कुठारं च। दररथाङ्गं च शङ्खं चक्रं च न्यस्येत्। अथ शार्ङ्गीश्वरे शङ्करनारायणे। हैमं हेमकृतम्। खट्वाङ्गार्धविधूक्षतार्क्ष्यकमठाक्षस्रग्गदाब्जं धनुश्च खट्वाङ्गं तदेव अर्धविधुः अर्धचन्द्रः उक्षा ऋषभः तार्क्ष्यो गरुडः कमठः कूर्मः अक्षस्रग् अक्षमाला गदा सैव अब्जं पद्मं धनुः तदेव एतानि मध्ये न्यसेत्। शास्तरि मध्ये। हैमतोमरशराम्भोजं च हैमानि तोमरशराम्भोजानि। (തോമരം= പീലിക്കത്തി)· शरं तदेव। अम्भोजं पद्मं विन्यसेत्॥ १०४॥

विवरणम्

अनयोस्त्वाह — त्र्यन्तम् इति। सुवर्णरजतायसत्रप्वित्येतावत् समानमित्यर्थः। दरः शङ्खः। अथेति मध्ये न्यसेदित्यनेन सम्बन्धः। हैममिति सर्वविशेषणम्॥ १०४॥

अथ शिवे सर्वमाह—

बीजे तानि न्यसतु नव नीवारकङ्क्न्तरोद्य-
च्छ्यामानीशे च्युतचरमराजीनि लोहेऽनुरूप्यम्।
ताम्रं सायस्त्रपु कमठपाथोजशूलं च हैमं
खट्वाङ्गार्धेन्दुवृषभधनुरन्तः कुठारं च पश्च॥ १०५॥

विमर्शिनी

ईशे बीजात् पूर्वं सर्वं तथा न्यस्य बीजे बीजन्यासे । नीवारकङ्कन्त-रोद्यच्छ्यामानि नीवारकङ्कोरन्तरा मध्ये उद्यदुद्गच्छत् श्यामं येषां तानि तथा । (ശ്യാമം=ചാമ) च्युतचरमराजीनि च च्युतं चरममवसानीभूतं राजि येषां बीजानां तानि च्युतचरमराजीनि । तानि नवबीजानि तथा न्यसतु । लोहे लोह-न्यासे । अनुरूप्यं रूप्यानन्तरम् । ताम्रं सायस्त्रपु अयसा युक्तं त्रपु । (അയസ്സ്=ഇരിമ്പ്) त्रपु उक्तम् । हैमं कमठपाथोजशूलं कमठं कूर्मं पाथोजं पद्मं शूलं तदेव । इति दिक्षु न्यस्यान्तः हैमं खट्वाङ्गार्धेन्दुवृषभधनुः कुठारम् । (കഠാരം=വെൺമഴു.) इति पञ्च न्यसतु ॥ १०५ ॥

विवरणम्

अथ शिवे सर्वमाह—बीज इति । बीजे प्रासे तान्येव शालिनीवारका-दीन्येव नव न्यस्येत् । किन्त्विह नीवारं कङ्कुं चान्तरा श्यामं न्यसेत् । चरम-स्सन् राजिश्चेह च्युतः स्यादित्यर्थः । लोहेऽनुरूप्यमिति । रूप्यस्य पश्चात् सुवर्ण-रजतयोरनन्तरमित्यर्थः । अनेन दिगावारणमेव शूलपर्यन्तमिति गम्यते । हैममिति सर्वविशेषणम् । अन्तः पञ्चेति । खट्वाङ्गादिपञ्चकस्य स्थानमुक्तम् । अयमपरो गण इति चार्थादवसीयते ॥ १०५ ॥

**बीजानि लोहानि च विघ्नराजे**
**महेशवन्न्यस्य ततो निदध्यात् ।**
**चापस्वदन्ताम्बुरुहाङ्कुशानि**
**दिशासु मध्येऽत्र गजं च हैमम् ॥ १०६ ॥**

विमर्शिनी

**विघ्नराजे** बीजानि लोहानि च । महेशवत् शिववद् न्यस्य । हैमानि चाषस्वदन्ताम्बुरुहाङ्कुशानि (ചാഷം=എലി.) स्वदन्तं स्वस्य दन्तम् अम्बु-रुहं पद्मम् (അംകുശം=തോട്ടി.) एतानि दिशासु निदध्यात् । अत्र मध्ये हैमं गजं च निदध्यात् ॥ १०६ ॥

विवरणम्

चाषो मूषिकः । दिशास्विति चतसृषु । हैममिति सर्वविशेषणम् ॥ १०६ ॥

अथ गुहे सर्वमाह —

**शिखिशक्तिताम्रचूडस्वरुकरिणः स्वर्णजान् गुहे न्यस्येत् ।**
**पूर्वादिमध्यनिष्ठं मध्यादीशान्तमथ नवैतानि ॥ १०७ ॥**

**वारिजरागं वज्रं मौक्तिकवैडूर्यसंज्ञिते स्फटिकम् ।**
**शङ्खं नीलं पुष्यं प्रवालसंज्ञं च विन्यसेत् क्रमशः ॥ १०८ ॥**

विमर्शिनी

गुहे पूर्वादिमध्यनिष्ठं पूर्वादिचतुर्दिक्षु मध्ये च स्वर्णजान् सुवर्णकृतान् । शिखिशक्तिताम्रचूडस्वरुकरिणः । (ശിഖി=മയിൽ.) (ശക്തി=വേൽ.) (താമ്രചൂഡം=കോഴി.) (സ്വരു=വജ്രം) (കരി=ആന.) अथ मध्यादीशान्तं वारिजरागं पद्मरागम् । (വജ്രം=വൈരം) मौक्तिकवैडूर्यसंज्ञिते (മൌക്തികം=മുത്ത്) वैडूर्यं तदेव । स्फटिकं शङ्खं नीलम् । पुष्यं पुष्यरागम् । (പ്രവാളം=പവിഴം) एतानि नव क्रमशो विन्यसेत् ॥ १०७,१०८ ॥

विवरणम्

अथ गुहे सर्वमाह—**शिखिशक्तीति** । शिखी मयूरः । ताम्रचूडः कुक्कुटः । स्वरुर्वज्रः । करी गजः ॥ १०७ ॥

वारिजरागं पद्मरागम् ॥ १०८ ॥

**तद्बाह्ये तपनीयं रजतं ताम्रायसी त्रपु सनागम् ।**
**पित्तलकांस्ये न्यस्येद् दिक्ष्वष्टास्वन्तरष्ट लोहानि ॥ १०९ ॥**

विमर्शिनी

तद्बाह्ये पूर्वाद्यष्टासु दिक्षु (തപനീയം=പൊന്നു. രജതം=വെള്ളി) ताम्रायसी उक्ते । त्रपु उक्तम् । सनागम् । पित्तलकांस्ये । (പിത്തളം=പിത്തള. കാംസ്യം=വെള്ളോട്) अन्तरुक्तान्यष्ट लोहानि ॥ १०९ ॥

विवरणम्

तपनीयं सुवर्णम् । अन्तरष्ट लोहानीति । एतान्येवेति बोद्धव्यम् ॥ १०९ ॥

**न्यसतु रसं समनोह्वं हरितालाञ्जनकमाक्षिकश्यामम् ।**
**सौराष्ट्रीं राजावर्तं च तथा गैरिकं च मध्यादि ॥ ११० ॥**

---

१. 'गं गगनं पि' ख. ग. घ. पाठः.

सिद्धार्थशालियवगोधूमांस्तिलमाषकौ प्रियङ्गुं च ।
मुद्गं नीवारकमपि तद्वदिह न्यसतु पञ्चमावरणे ॥ १११ ॥

सागरशैलसरित्तीर्थह्रदकेदारदन्तिखलजाताः ।
मृत्स्ना न्यस्येत् परितो दिक्ष्वष्टास्त्वष्ट मृत्तिकाश्चान्तः ॥ ११२ ॥

विमर्शिनी

**तथा** मध्यादीशान्तं, रसं तदेव । समनोह्वं हरितालाञ्जनकमाक्षिकश्यामं മനോഹ്വാ=മനയോല. ഹരിതാലം= അരിതാരം. അഞ്ജനം= അഞ്ജനക്കല്ലു്. മാക്ഷികം= മാക്കിരം.) श्यामं तदेव (സൌരാഷ്ട്രീ= തിരുവട്ടപ്പയൻ) राजावर्तं तदेव । (ഗൈരികം=ചെങ്കൽധാതു) एतानि न्यसतु ॥ ११० ॥

इह गुहे पञ्चमावरणे सिद्धार्थशालियवगोधूमान् । (ഗോധൂമം=കോതമ്പു) तिलमाषकौ उक्तौ । प्रियङ्गुम् । (പ്രിയംഗു=തിന.) मुद्गं नीवारकमपि उक्ते । तद्वद् धातुवद् न्यसतु ॥ १११ ॥

परितः पूर्वाद्यष्टासु दिक्षु । सागरशैलसरित्तीर्थह्रदकेदारदन्तिखलजाताः । (സാഗരം=സമുദ്രം. ശൈലം=പർവ്വതം. സരിത്=നദി) तीर्थं तदेव । (ഹ്രദം=കയം. കേദാരം=കണ്ടം. ദന്തി=ആന. ഖലം=കളം.) एतेभ्यो जाताः । मृत्स्नाः मृत्तिकाः न्यस्येत् । अन्तरुक्ता अष्ट मृत्तिकाश्च न्यस्येत् ॥ ११२ ॥

विवरणम्

**मध्यादीति** । ईशान्तमिति शेषः । तद्वदिति । मध्यादीशान्तमित्यर्थः । अष्ट मृत्तिका इति । एता एव ॥ ११०–११२ ॥

नीलारुणोत्पलपयोरुहकैरवाणां
मूलानि दिक्षु सकलं च निधाय मध्ये ।
प्रोक्ष्यास्त्रतः समवगुण्ठ्य तनुत्रतोऽत्र
तद् द्रव्यजातममृतीकृतमातनोतु ॥ ११३ ॥

विमर्शिनी

**नीलारुणोत्पलपयोरुहकैरवाणाम्** । (നീലോല്പലം=കരിങ്കുവളം. അരുണോല്പലം=ചെങ്ങഴിനീർ. പയോരുഹം=താമര. കൈരവം=ആമ്പൽ) एतेषां मूलानि दिक्षु, सकलं मूलचतुष्कमपि मध्ये च निधाय । अत्र गुहे । अस्त्रतः प्रोक्ष्य । तनुत्रतः कवचमन्त्रेणावगुण्ठ्याच्छाद्य । तद् द्रव्यजातं द्रव्यसमूहम् । अमृतीकृतं सुरभिमुद्रयामृतीकृतमातनोतु ॥ ११३ ॥

विवरणम्

**सकलं** चेति । एतदेव मूलचतुष्टयम् । समवकुण्ठ्य तनुत्र इति कवचेन करद्वयेनाच्छादनमुक्तम् । द्रव्यजातं द्रव्यनिचयं, अमृतीकृतमातनोत्विति । सुरभिमुद्रया तद्बीजेनामृतीकृतं भावयेदित्यर्थः । हरिहरादिसर्वेष्वपि कार्यमेतत् सर्वमिति सम्प्रदायः ॥ ११३ ॥

**गायत्र्या स्मरशासने मुररिपौ सस्वार्णमूलाणुना**
**शेषेषु द्रविणानि विघ्नगुहयोर्मूलेन च न्यस्यतु ।**
**ईशे व्योमदशार्णवक्त्रबहुरूपाजान्धुवामेशसू-**
**क्तोत्पन्नैश्च कलाणुभिर्द्रविणजातानि न्यसेद्वा क्रमात् ॥ ११४ ॥**

विमर्शिनी

उक्तस्य द्रव्यन्यासस्य मन्त्रमाह— **गायत्र्येति** । स्मरशासने शिवे । मुररिपौ विष्णौ च । गायत्र्या स्वस्वगायत्र्या द्रविणानि विन्यसतु । शेषेषु सस्वार्णमूलाणुना स्वाक्षरसहितेन मूलेन । मूलाक्षरैर्मूलेन चेत्यर्थः । विघ्नगुहयोर्मूलेन च । चशब्द एवार्थे । ईशे शिवे । व्योमदशार्णवक्त्रबहुरूपाजान्धुवामेशसूक्तोत्पन्नैश्च कलाणुभिर्द्रविणजातानि न्यसेद्वा । व्योमदशार्णं व्योमव्यापि दशाक्षरम् । वक्त्रं तत्पुरुषः । बहुरूपोऽघोरः । अजः सद्योजातः । अन्धुरन्धुस्थानस्थो वामदेवः । वामश्च देवः । ईश ईशानः । एतेषां सूक्तोत्पन्नैः, कलाणुभिः कलामन्त्रैः । तत्र व्योमव्यापिदशार्णस्य नवभिरक्षरैः मृदः, तत्पुरुषकलाभिर्मूलानि, अघोरकलाभिः धातून्, सद्यकलाभी रत्नानि, वामकलाभिर्बीजानि, पुनरपि वामकलाभिः स्वर्णादीनि, ईशकलाभिः खट्वाङ्गादीनीति विभागः तथा पाशुपते —

"व्योमव्यापिदशार्णैस्तु मृत्पिण्डानि निधापयेत् ।

---

१. 'न' ग. पाठः.

भूयः पुरुषकलाभिर्घोरकलाभिस्तथैव सद्याभिः ।
न्यस्त्वा वामकलाभिर्वामकलाभिस्तथेशसंज्ञाभिः ॥"

इति ॥ ११४ ॥

विवरणम्

द्रव्यन्यासे मन्त्रानाह— **गायत्र्येति** । गायत्री तत्पुरुषा(येति) । मुररिपौ सस्वार्णमूलाणुनेति । स्वाक्षरैः सहितेन मूलमन्त्रेण । तत्र दिक्षु मूलाक्षराणि मध्ये मूलमिति विभागः । दुर्गार्येशहरौ चेति । सस्वार्णमूलाणुनेत्यनुषङ्गः । यद्वा विघ्नगुहयोरित्यनेन सह योजनीयम् । शिवे मतान्तरमाह— ईश इति । व्योमव्यापिदशाक्षरेण मृदः पुरुषाघोरसद्यवामकलाभिर्मूलधातुरत्नबीजानि पुनरपि वामकलाभिर्लोहानि ईशकलाभिस्तु खट्वाङ्गादिपञ्चकमिति विभागः । तुशब्दो विशेषसूचनार्थः । धातुरत्नानामन्त्यकलयैव मध्ये न्यासः, बीजलोहानामवशिष्टकलाभिरन्त्यन्यास इत्यसौ च विशेषः ॥ ११४ ॥

**तद् द्रव्यजातमजिते द्विषडक्षरेण**
**गव्येन मूलमनुनोक्षतु चेतरेषु ।**
**अभ्यर्च्य मूलमनुना सकलेऽधिवास्य**
**पक्कावसानमनले तनुयात् पुरोवत् ॥ ११५ ॥**

विमर्शिनी

ततस्तत्संस्कारादिकमाह — **तद्द्रव्यजातमिति** । **अजिते** विष्णौ । **द्विषडक्षरेण** द्वादशाक्षरेण, इतरेषु मूलमनुना च तद् द्रव्यजातं गव्येनोक्षतु । सकलेऽपि मूलमनुनाभ्यर्च्याधिवास्य । अनलेऽग्नौ । पुरोक्तवद् इष्टकाहोमवत् पक्कावसानं तनुयात् ॥ ११५ ॥

विवरणम्

**तद्द्रव्यजातमजित** इति । सुरभिमुद्रयामृतीकरणं तावदुक्तम् । ततोनन्तरमेतत् कार्यम् । मूलमनुनाभ्यर्च्येत्यावाहनादिकमुक्तम् । अथ होमं वदन् तत्र प्रागुक्तहोमे विशेषमाह— पक्कावसानमिति । पक्कात् प्राग्भर्गदुर्गास्मरमुरभिदि मूलाक्षरैरित्येतत् सर्वमिहापि समानमिति (पूर्व ? पुरो)वदित्यनेनोक्तम् ॥ ११५॥

---

१. 'त्र' क. पाठः. २. 'नि' ख. पाठः. ३. 'न्त्यस्य न्या' ख. ग. पाठः.

**अर्कार्णाणांश्चतुर्थ्या सह दिगधिपनारायणान् बीजयुक्तान्**
**सर्वान् धातूंश्च लोहा मनुविदथ हुनेत् पर्वतान् वै समुद्रान् ।**
**सर्वाण्युद्दिश्य तीर्थान्यपि तदनु नदीश्च ह्रदांश्च द्विठान्तान्**
**पातालान् नागकान् दिग्गजवृषभयुतान् व्याहृतीस्तारकं च ॥**

विमर्शिनी

होममन्त्रानाह— **अर्कार्णार्णानिति** । मन्त्रप्रयोगकुशलः अर्कार्णार्णान् द्वादशाक्षरमन्त्रस्य वर्णानुद्दिश्योक्त्वा । चतुर्थ्या सह चतुर्थीविभक्त्या सह । द्विठान्तान् स्वाहान्तान् । दिगधिपनारायणान् दिगधिपान् नारायणं च, इन्द्राय स्वाहा इत्यादीन्[2] नारायणाय स्वाहा इति च । बीजयुक्तान् सर्वबीजेभ्यः स्वाहा इति । सर्वान् धातून् सर्वधातुभ्यः स्वाहा इति । लोहानिति । चकारेण सर्वे क्षिप्यते सर्वत्र, सर्वलोहेभ्यः स्वाहा इति । अत्र लोहपदे लोकपदं केषुचिदागमेषु दृश्यते । तत्र सर्वलोकेभ्यः स्वाहा इति मन्त्रः । पर्वतान् सर्वपर्वतेभ्यः स्वाहा इति । वै समुद्रान् सर्वसमुद्रेभ्यः स्वाहा इति । सर्वाणि तीर्थान्युद्दिश्य इति सर्वतीर्थेभ्यः स्वाहा इति । तदनु नदीश्च सर्वनदीभ्यः स्वाहा । ह्रदान् सर्वह्रदेभ्यः स्वाहा । पातालान् सर्वपातालेभ्यः स्वाहा । नागकान् सर्वनागेभ्यः स्वाहा । दिग्गजवृषभयुतान् सर्वदिग्गजेभ्यः स्वाहा, सर्ववृषभेभ्यः स्वाहा इति । व्याहृतीस्तारकं चोद्दिश्य हुनेत् ॥ ११६ ॥

विवरणम्

**अर्कार्णार्णानिति** । द्वादशाक्षरवर्णान् । दिगधिपा अष्टाविन्द्रादयः । मनुविदित्यस्यायमाशयः—द्वादशाक्षरवर्णाः प्रणवपुटिताः बीजानि पृथग् देवता सर्वशब्दो धातुविशेषणं वृषभशब्दो बहुवचनभागित्यादि ज्ञेयमिति ॥ ११६ ॥

**एतैर्मन्त्रैः प्राग् घृतं शार्ङ्गपाणौ हुत्वा गायत्र्या चतुर्द्रव्यहोमम् ।**
**कृत्वा संपातैधिते गर्भपात्रे प्रोद्वास्याग्निं मूलमावर्तयेच्च ॥ ११७ ॥**

विमर्शिनी

**शार्ङ्गपाणौ** विष्णौ । एतैर्मन्त्रैः प्राक् पूर्वं घृतं हुत्वा । गायत्र्या 'नारायणाय विद्महे' इत्याद्यया । चतुर्द्रव्यहोमं समिदाज्यहविराज्यानां होमं कृत्वा । सम्पातैधिते सम्पातस्पृष्टे । गर्भपात्रेऽग्निं प्रोद्वास्य मूलमावर्तयेच्च जपेत् ॥ ११७ ॥

---

१. 'का', २. 'दि ना' ख. पाठः.

विवरणम्

**सम्पातैधित** इति । सम्पातो नाम द्रव्यकर्मापूर्वं तद् द्रव्यं येन कर्मणा देवतायामुपह्रियते तदेव तदैकात्म्यतस्तदीयफलरूपेण प्रत्यावृत्तमपूर्वं भवति । तेनैधनं स्वकार्यसमर्थतेति ॥ ११७ ॥

**दुर्गार्ये स्वेष्टकावद् द्रविणहवननिष्ठं सशार्ङ्गीशविघ्ने**
**कृत्वेन्द्राद्यैश्च नारायणपदविलसत्स्वस्वमूलैर्जुहोतु ।**
**मूलेनैकादशाज्याहुतिमिह सुविधायाथ लोकेशपूर्वै-**
**रुक्तैर्मन्त्रैश्च नारायणपदबहुसच्छङ्करैः शङ्करे तु ॥ ११८ ॥**

विमर्शिनी

**सशार्ङ्गीशविघ्ने** दुर्गार्ये शिवनारायणगणपतिदुर्गाशास्तृषु । द्रविणहवननिष्ठं चतुर्द्रव्यहोमान्तम् । स्वेष्टकावत् स्वस्वेष्टकाहोमवत् कृत्वा । इन्द्राद्यैः 'दिगधिपे'त्याद्युक्तैः । नारायणपदविलसत्स्वस्वमूलैः नारायणमन्त्रस्थाने स्वस्वमूलेन च जुहोतु । शङ्करे तु इह द्रव्यहोमान्ते । मूलेनैकादशाज्याहुतिं सुविधाय । अथ तदनन्तरं लोकेशपूर्वैरुक्तैर्मन्त्रैः नारायणपदबहुसच्छङ्करैः नारायणपदे बहुवचनेन सता शङ्करपदेन च 'ओं शङ्करेभ्यः स्वाहा' इति मन्त्रेण जुहोतु ॥ ११८ ॥

विवरणम्

**नारायणपदविलसत्स्वस्वमूलैरि**ति । नारायणपदस्थाने स्वं स्वं मूलं योज्यमिति भावः । नारायणपदबहुसच्छङ्करैरिति । तत्पदस्थाने बहुवचनान्तं सच्छङ्करपदं योज्यम् । शङ्करेभ्यः स्वाहेतीत्यर्थः ॥ ११८ ॥

**स्वेष्टकोदितवर्त्मनोडुहुतान्तकृज्जुहुयाद् घृतं**
**हेतिरत्नकलोहधातुकबीजकान्यपि मृत्तिकाः ।**
**मूलकान्यपि चोद्दिशन्निजनामतोऽथ समिद्घृता-**
**द्याहुतिं च करोतु तारकसूदने निजमूलतः ॥ ११९ ॥**

विमर्शिनी

**तारकसूदने** स्कन्दे । स्वेष्टकोदितवर्त्मना स्वेष्टकाहोमोक्तमार्गेण । उडुहुतान्तकृत् नामद्विपट्केनेत्यादिदिङ्नक्षत्रैरित्यन्तैर्होमकृद् भूत्वा । हेतिरत्नकलोहधातुकबीजकान्यपि मृत्तिकाः मूलकान्यपि च निजनामतः । उद्दिशन् उच्चरन्

'ओं हेतिभ्यः स्वाहा' 'रत्नेभ्यः स्वाहा' 'लोहेभ्यः स्वाहा' 'धातुभ्यः स्वाहा' 'बीजेभ्यः स्वाहा' 'मृत्तिकाभ्यः स्वाहा' 'मूलेभ्यः स्वाहा' इति मन्त्रानुच्चरन् घृतं जुहुयात् । अथ निजमूलतः समिद्घृताद्याहुतिं चतुर्द्रव्यहोमं च करोतु ॥ ११९ ॥

विवरणम्

स्कन्द आह—स्वेष्टकेति । पक्वान्ते नामद्विषट्केनेत्युक्तैर्द्वाशनामादिनक्षत्रान्तैर्हुत्वा हेतिरत्नादिमूलान्तैरपि हुत्वा पूर्णां जुहुयादित्यर्थः ॥ ११९ ॥

**शिखिशक्तिपविस्थलस्थिताश्व-**
**क्षुरिकासीनि गुहोदितानि वार्ये ।**
**न्यसनेऽत्र निजेष्टकोडुहोमा-**
**वसितौ हेतिमुखाहुतिस्तथा स्यात् ॥ १२० ॥**

विमर्शिनी

आर्ये न्यसने द्रव्यन्यासे । शिखिशक्तिपविस्थलस्थिताश्वक्षुरिकासीनि मयूरशक्तिवज्रस्थानेषु अश्वक्षुरिकाखड्गानि । गुहोदितानि स्कन्दोक्तानि वा स्युः । अत्रैतत्पक्षे । निजेष्टकोडुहोमावसितौ स्वस्येष्टकाहोमवन्नक्षत्रहोमान्ते । हेतिमुखाहुतिः हेत्यादीनामाहुतिः । तथा तद्वदेव स्यात् ॥ १२० ॥

विवरणम्

अथ यत् पूर्वमित्यपि वा प्रभेश इत्युद्दिष्टं तदिदानीं विवृणोति—शिखिशक्तीति । पविर्वज्रम् । असिः क्षुरिका । न्यसने स्युरिति शेषः । अत्र निजेष्टकोडुहोमावसिताविति । सम्पातैधित इत्यादि सर्वेष्वपि कार्यमिति ॥ १२० ॥

**हृत्वेष्टकागर्तगतं मृदाद्यं संशोध्य गव्यादिसमाप्लुतेऽत्र ।**
**सविष्टरेऽभ्यर्चितयोगपीठे शक्तिं समावाह्य निजां यजेत ॥ १२१ ॥**

विमर्शिनी

एवं होमानन्तरं गर्भन्यासं कुर्यादित्याह—हृत्वेति । इष्टकागर्तगतम् इष्टकानां मध्यस्थगर्तगतं मृद्धान्यादिकं हृत्वा त्यक्त्वा। संशोध्य मार्जनादिकं कृत्वा । गव्यादिसमाप्लुते गव्याष्टगन्धजलादिभिश्चाप्लुते । सविष्टरे विष्टरं निधायात्राभ्यर्चितयोगपीठे निजां शक्तिं समावाह्य यजेत ॥ १२१ ॥

---

१. 'दा' इति मूलकोशपाठः.

विवरणम्

**गव्यादिसमाप्लुतेऽत्रेति** गोमूत्रपञ्चगव्यगन्धोदकग्रहणम् । निजां शक्तिं समावाह्येति । वक्ष्यति हि — श्रीबीजेन प्रकृतिमभिवाह्याजितेऽन्येषु शक्त्येति । यद्वा, विष्णौ श्रियं शिवे गौरीं स्कन्दे देवसेनामित्याद्यभिप्रायमेतत् ॥ १२१ ॥

**प्राज्ञाज्ञातः पिधानोत्तरमखिलजगद्गर्भि तद् गर्भपात्रं**
**तिष्ठन् कृत्वाञ्जलौ तत्तदणुशतजपं मन्त्रवित् संविधाय ।**
**गर्भीयन्तीं जगन्मण्डलमखिलमनुध्याय शक्तिं स्वयं त-**
**द्गर्भाकारेऽत्र गर्ते न्यसतु निशि शनैः स्वोक्तमन्त्रप्रजापी ॥ १२२ ॥**

**सर्वभूतधरे! कान्ते! इति सर्वत्र तन्मनुः ।**
**सर्वभूतालये! भद्रे! इति स्कन्दप्रभेशयोः ॥ १२३ ॥**

**सर्वभूतधरे ! कान्ते ! पर्वतस्तनमण्डिते! ।**
**समुद्रपरिधाने! त्वं देवि! गर्भं समाश्रय ॥ १२४ ॥**
**सर्वभूतालये! भद्रे! सागराम्बरभूषिते! ।**
**उत्तुङ्गाद्रिस्तनभरे! देवि! गर्भं समाश्रय ॥ १२५ ॥**

विमर्शिनी

**प्राज्ञाज्ञातः** प्राज्ञैः विद्वद्भिराज्ञातः, विदुषां ब्राह्मणानां दानं कृत्वा तैः कृतं स्वस्तिकवचनं परिगृह्येत्यर्थः । पिधानोत्तरं पिधानेनोपर्याच्छादितम् । अखिलजगद्गर्भि अखिलजगत् तदन्तर्गतं स्मरन् । तत् प्रस्तुतं गर्भपात्रम् अञ्जलौ कृत्वा तिष्ठन् मन्त्रवित् । तत्तदणुशतजपं तत्तन्मूलमन्त्रमष्टोत्तरशतजपं संविधाय । शक्तिं स्वयं सर्वकारणभूतां स्वयं शक्तिम् । अखिलं जगन्मण्डलं गर्भीयन्तीमात्मनो गर्भत्वेन काङ्क्षमाणाम् अनुध्याय । तद्गर्भाकारे तस्या गर्भाधानस्थाने गर्तेऽत्र । शनैः स्वोक्तमन्त्रप्रजापी स्वस्वोक्तमन्त्रं जपन् निशि निशायामेव न्यसतु ॥ १२२ ॥

स्वोक्तमन्त्रप्रजापीत्यत्र को मन्त्र इत्याकाङ्क्षायामाह—**सर्वभूतेत्यादिना** । सर्वत्र सर्वदेवेषु । सर्वभूतधरे कान्ते इतीति इत्यादीत्यर्थः । तन्मनुः गर्भन्यासमन्त्रः । स्कन्दप्रभेशयोः सर्वभूतालये भद्रे इति । इतीति पूर्ववद् व्याख्येयम् ॥ १२३ ॥

तौ मन्त्रौ पठति—**सर्वभूतधर** इत्यादिना ॥ १२४, १२५ ॥

विवरणम्

**प्राज्ञाज्ञात** इति । प्राज्ञैर्हिरण्यदानादिभिरनुज्ञातः । यद्वा प्राज्ञैरप्यज्ञातः । सर्वान् दूरतो विसृज्य रहो गर्भनिधानं कार्यमिति । अथवा प्राज्ञा वाद्यविदः तेषामाज्ञा च वाद्यध्वननमेव,तत इति । पिधानोत्तरमिति । तदा स्वपिधानविहितम् । अखिलजगद्गर्भीति । सकलजगत्सारवस्तूनां तस्मिन् निहितत्वात् सकलजगदण्डसूक्ष्मदशाया गर्भरूपत्वाद् वैराजविग्रहरूपस्य प्रासादमूर्तेस्तत्समुत्पत्त्यभिधानाच्चैवमुक्तम् । मन्त्रविदिति कवचेन पिधानमुक्तम् । तथा विष्णावष्टाक्षरद्वादशाक्षरजपादिकं चोक्तम् । गर्भयन्तीमिति । गर्भमात्मन इच्छन्तीम् । अखिलजगन्मण्डलमिति । यत् प्रासादपूरुषतया परिणामिनीति वक्ष्यमाणत्वादिदमवसीयते । सकलभुवनात्मा विराडेवात्रोत्पादनीयः । स एव प्रासादमूर्तिरूपेण परिमितो भवतीति । बिम्बवच्चैतदवगन्तव्यम् । यद्वक्ष्यति —तदेतदण्डं प्रणवेन बिम्बमिति । अभिध्यायेति । पृथिवीं ब्रह्माण्डरूपिणीं तद्गर्भकामामादिशक्तिं च ध्यात्वेत्यभिप्रायः । तद्गर्भाकार इति । तस्या आदिशक्तेर्मूलप्रकृतेर्गर्भाशयाकारे । इह गर्भ समाश्रयेति । अयमपि गर्भशब्द एतदभिप्राय एवेत्यर्थलभ्यम् ॥ १२२-१२५ ॥

**प्रासादपूरुषतया परिणामिनीह**
**मूलेन देवमभिवाह्य समर्च्य गर्भे ।**
**किञ्चिन्निवेद्य परितोष्य सुरक्ष्य तक्ष्णा**
**प्रासादमारचयतां सहमन्त्रबिम्बम् ॥ १२६ ॥**

विमर्शिनी

**प्रासादपूरुषतया** प्रासादपूरुषत्वेन । परिणामिनि परिणाममाधास्यमाने । इह अस्मिन् गर्भे । मूलेन देवमभिवाह्य समर्च्य किञ्चिन्निवेद्य परितोष्य सुरक्ष्य । तक्ष्णा शिल्पिना । सहमन्त्रबिम्बं मन्त्रमूर्त्या प्रतिमया सहितं प्रासादम् । आरचयतां कारयेत् । सहमन्त्रबिम्बमित्यनेन बहुवेरे[2] प्रासादेन सह मन्त्रबिम्बरचना सूचिता ॥ १२६ ॥

विवरणम्

**प्रासादपूरुषतया परिणामिनीहेति** । तदीयजीवरूपेण तत्र देवसन्निधापनमिति सूचितम् । सुरक्ष्येति तालत्रयादिकं लौकिकपुरुषै रक्षाकरणं चोक्तमिति । प्रासादमारचयतां सहमन्त्रबिम्बमिति प्रासादबिम्बकरणप्रस्तावः । किं च समनन्तरमेव प्रासादरचनमारब्धव्यमित्यपि सूचितम् । तदुक्तम्— प्रासादप्रारम्भकाले गर्भाधानं कुर्यादिति ॥ १२६ ॥

१. 'ध्या', २. 'वरप्रा' ख. पाठः

**आलिख्य मण्डलमिहाहितसन्निधानं**
**मूलेन देवमभिपूज्य[1] चरुं निवेद्य[2] ।**
**तद्वामतोऽस्त्रमपि तत्सविधे निधाय**
**शस्त्राणि चास्त्रमनुना प्रयजेत तक्ष्णाम् ॥ १२७ ॥**

विमर्शिनी

एवं प्रासादकरणात् पूर्वगतं क्रियाकलापमुक्त्वा बिम्बरचनात् पूर्वगतं क्रियाकलापमाह—आलिख्येति । कस्मिंश्चित् प्रदेशे मण्डलमालिख्य इह आहितसन्निधानं कृतावाहनं देवं मूलेनाभिपूज्य चरुं पायसं हविर्निवेद्य । तद्वामतः तस्य मण्डलस्य वामे अस्त्रमपि स्वास्त्रमन्त्रेणापि तथा सम्पूज्य । तत्सविधे पूजितास्त्रस्य समीपे । तक्ष्णां शस्त्राणि आयुधानि निधायास्त्रमनुना च तथा प्रयजेत ॥ १२७ ॥

विवरणम्

तत्र पूर्वं तावत् तदीयद्रव्यसम्पादनमभिधत्ते—आलिख्य मण्डलमिति । यद्यप्येतत् प्रासादबिम्बकरणशेषत्वाद् उत्तरपटले वक्तुमुचितं, किन्तु पूजादिसद्भावादिह पटलान्तेऽभिधानमिति ज्ञेयम् । स्वस्तिकमष्टदलं वालिख्य मण्डलमित्युक्तम् । आहितसन्निधानमिति । आहितं कृतपीठपूजादिपूर्वकमावाहनादि कृत्वेत्यर्थः । चरुमिति । पयोन्धसेति वक्ष्यमाणत्वात् पायसं निवेद्यमिति लभ्यते । तद्वामतोऽस्त्रमपीति । अपिशब्देनालिख्य मण्डलमित्यादिसर्वमनुकृष्यते । देववामभागे स्वस्तिकमालिख्य तत्र स्वस्वमस्त्रं पीठपूजापूर्वकमावाह्य पूजयेदित्यर्थः । तत्सन्निधाविति । तस्यास्त्रमूर्तेः सन्निधौ वामभाग एव स्थण्डिल इति भावः ॥

**निवेद्यशिष्टेन पयोन्धसाग्नौ**
**हुत्वाशयित्वा मुखजान् प्रसाद्य ।**
**दध्यन्नमश्नातु गुरुः सकर्ता**
**तत्रार्चनीयः स्थपतिश्च तद्वत् ॥ १२८ ॥**

विमर्शिनी

निवेद्यशिष्टेन पयोन्धसा पायसहविषाग्नौ हुत्वा । मुखजान् ब्राह्मणान् । आशयित्वा भोजयित्वा । तान् दानेन च प्रसाद्य देवस्य प्रसन्नपूजां

१. 'वाह्य च', २. 'वि' इति मूलकोशपाठः.

कृत्वा । सकर्ता कर्त्रा सहितो गुरुः । दध्यन्नं दधिविशिष्टमन्नम् अश्नातु । तत्र कर्मणि स्थपतिः तक्षा च तद्वदर्चनीयः, तस्याप्यन्नदानादिना प्रसादं कुर्यादित्यर्थः ॥ १२८ ॥

विवरणम्

**निवेद्यशिष्टेनेति** पूजाहोमोऽयमवबोद्धव्यः । आशयित्वेति । भोजयित्वा तस्य पायसस्य एकं भागमित्यर्थाद् अवसेयम् । मुखजा ब्राह्मणाः । प्रसाद्येति । देवं अस्त्रदेवता ब्राह्मणांश्चेति ज्ञेयम् । ब्राह्मणादीनां तु गोहिरण्यदानादि प्रसादनसाधनम् । स्थपतिस्तक्षा । तद्वदर्चनीय इति । पायसभोजनं वस्त्रालङ्कारैः प्रसादनमित्येतदुक्तम् ॥ १२८ ॥

**रक्षामङ्गलपूर्वकं शुभनिमित्तर्क्षे शिलार्थं व्रजे-**
**न्मन्त्री शस्त्रिभिरन्वितः स्थपतिभिः कर्त्रापि चैन्द्र्यादिषु ।**
**आसाद्याथ शिलाकरं सुमहितात्माणुं त्रिनेत्रादिकं**
**जप्त्वान्विष्य शिलां निजेष्टमनुबिम्बादिक्षमां कल्पयेत् ॥ १२९ ॥**

विमर्शिनी

अथ मन्त्री । शस्त्रिभिः शस्त्रपाणिभिः । स्थपतिभिः शिल्पिभिः । कर्त्राप्यन्वितो युक्तः । रक्षामङ्गलपूर्वकं रक्षां कृत्वा कनिक्रदादिमङ्गलानि जपन् । शुभनिमित्तर्क्षे शुभे निमित्ते शकुनादिके च शुभे मुहूर्ते च । शिलार्थं शिलां ग्रहीतुम् ऐन्द्र्यादिषु पूर्वादिषु दिक्षु । व्रजेद् गच्छेत् । अथ शिलाकरं शिलायाः क्षेत्रमासाद्य । सुमहितात्मा आत्माराधनादिकृत् । शिवे त्रिनेत्रादिकम् अन्येष्वपि स्वस्वयोग्यमणुं जप्त्वा शिलामन्विष्य निजेष्टमनुबिम्बादिक्षमां स्वस्येप्सितानां मन्त्रबिम्बपीठादीनां शक्तां शिलां कल्पयेत् ॥ १२९ ॥

विवरणम्

**रक्षामङ्गलपूर्वकमिति** । ऐन्द्र्यादिषु शिलार्थं व्रजेदिति सम्बन्धः । रक्षेह स्वास्त्रभावना तच्छतावर्तनमग्रतोऽर्घ्यहस्ताया विद्याराज्ञ्याः स्मरणं च । मङ्गलं कनिक्रदत्स्वस्त्यादिजपः, शङ्खध्वानं प्रदीपपूर्णकुम्भादि चेति । मन्त्रीति । प्रतिष्ठापनीयदेवतानुसन्धानमस्त्रेण दिग्विरेचनमप्युक्तम् । ऐन्द्र्यादिष्विति । प्राच्युदीच्यैशानी च दिगुक्ता । तदसम्भवे याम्यादयोऽपि ग्राह्याः । सुमहितात्मेति । स्नानाद्युपलक्षणम् । जप्त्वेति । जपन्नित्येवार्थः । निजेष्टमनुबिम्बादिक्षमामिति पीठशिलादिग्रहणम् ॥ १२९ ॥

त्रिनेत्राय च रुद्राय ध्वजाधिपतये नमः ।
शिलां दर्शय देवेश! प्रसन्नो मे वृषध्वज ! ॥ १३० ॥ इति ॥

सिद्धाद्र्याकरसम्भवा वसुमतीमग्ना स्ववर्णोचिता
स्निग्धा शस्त्रसहा गभीरनिनदा दिश्याहिताग्रा शिला ।
ग्राह्या बिम्बविधौ स्फुलिङ्गबहुलं तस्याः शिरोऽधो मुखं
यत्काष्ठाभिमुखी समुत्थितवती स्थाप्या च तद्दिङ्मुखी ॥ १३१ ॥

विमर्शिनी

त्रिनेत्रमन्त्रं पठति — त्रिनेत्रायेत्यादिना ॥ १३० ॥

शिलालक्षणमाह — सिद्धेति । बिम्बविधौ शिला ग्राह्या । सिद्धाद्र्याकरसम्भवा प्रसिद्धपर्वतस्थक्षेत्रे सम्भवो यस्याः सा । वसुमतीमग्ना भूम्यां तिरोहिता । स्ववर्णोचिता ब्राह्मणादिस्वस्ववर्णस्योचिता शोभनैरकाराद्यक्षरैरुपलक्षिता च । स्निग्धा निबिडा न तु कर्कशा । शस्त्रसहा शस्त्रप्रहारक्षमा । गभीरनिनदा गाम्भीर्यवन्नादयुक्ता । दिश्याहिताग्रा दिग्गताग्रभागा च । तस्याः शिलायाः स्फुलिङ्गबहुलं स्फुलिङ्गबाहुल्यं यस्मिन् भागे तच्छिरोऽवगन्तव्यम् । अधो मुखम् अधोभागं मुखमवगन्तव्यम् । समुत्थितवती यत्काष्ठाभिमुखी तस्यामुत्थितायां यस्यां दिशि मुखं भवति तद्दिङ्मुखी स्थाप्या च ॥ १३१ ॥

विवरणम्

शिलालक्षणमपि दिङ्मात्रेणाचष्टे—सिद्धाद्र्याकरसम्भवेति । लोकसिद्धेषु अद्रिष्वाकरेषु च सम्भविनीत्यर्थः । सह्यमलयादयो लोके प्रसिद्धाः पुण्यगिरयः । शिलाकरास्तु शिलाक्षयादयः । वसुमतीमग्नेति । भूम्यन्तर्गता । सिद्धाद्याकरेषु आहितापि ग्राह्या । तदन्यत्र भूमिमात्रे तु भूम्यन्तर्हिता ग्राह्येति भावः । स्ववर्णोचितेति । तदुक्तम् —

"श्वेताब्जाभा मृगे ग्राह्या सौम्या विप्रस्य सा शिला ।
ऐन्द्री रक्ता कुलस्थाभा ज्येष्ठायां क्षत्रियस्य तु ॥
फल्गुन्यां भगदेवत्या पीता वा हरिता विशाम् ।
कृष्णा मुद्गनिभाश्विन्यां शूद्रस्यैवाश्विदेवता ॥"

इति । अत्रानुलोमा अपि ग्राह्याः । प्रतिलोमास्सङ्कीर्णाश्च न ग्राह्याः । वर्णानवधृतौ पुरोक्तपरीक्षया स्वप्नदर्शनेन विनिर्णय इति । शस्त्रसहेति । शस्त्रस्पर्शे तदनु-

कूलैव न तु तदा स्फुटति जीर्यति वेत्यर्थः । दिश्याहिताग्नेति। स्फुलिङ्गबहुल-मित्येतदग्नलक्षणम् । दिशि ऐन्द्र्यादौ न तु विदिशि । आहितमग्नं यस्याः सा तथोक्ता । बिम्बविधाविति पीठाद्युपलक्षणम् । यद्वा, स्ववर्णोचितेत्येतद् बिम्बविधावेव आवश्यकमिति भावः । स्फुलिङ्गबहुलमिति । तदुक्तम् —

"ध्वनिर्घण्टानिभा यत्र स्फुलिङ्गाश्छेदने तथा ।
दृश्यन्ते तच्छिरस्तस्याः पृष्ठमूर्ध्वमधो मुखम् ॥"

इति । शिरोविज्ञानेऽर्थात्तद्विपरीतादिशि पादप्रदेशो विज्ञायते । यत्काष्ठाभिमुखीति । यद्दिगभिमुखी । समुत्थितवतीति । बिम्बोचितायाः शिलायाः समन्ततो भित्त्वा समुत्थाप्यमानाया यद्दिक्सम्मुखं मुखं भवतीत्यर्थः ॥ १३१ ॥

**दुष्टोद्देशसमुद्भवान्यपरिशिष्टा दुर्ग्रहाद्याश्रिता**
**वाताग्न्यर्ककराहतातिविपुला बाला च वृद्धासती ।**
**दूरेखाक्षरगर्भमण्डलयुता रूक्षस्वरा जर्जरा**
**दुःस्पर्शापदिशं निवेशितशिरोदेशा च वर्ज्या शिला ॥ १३२ ॥**

विमर्शिनी

वर्ज्यां शिलामाह — दुष्टोद्देशेति । दुष्टोद्देशसमुद्भवा दुर्देशजाता । अन्यपरिशिष्टा अन्यत्र गृहीताया अवशेषिता । दुर्ग्रहाद्याश्रिता वेतालादिग्रहैराश्रिता । वाताग्न्यर्ककराहता वायुनाग्निनादित्यकरैर्वा तप्ता । अतिविपुला उद्धर्तुमश(क्ता ? क्या) । बाला दुर्बला । वृद्धासती* च जीर्णावयवा च । दूरेखाक्षरगर्भमण्डलयुता शास्त्रेषु निन्दिताभी रेखाभिरक्षरैश्च गर्भैरन्तश्छिद्रैस्तथा निन्दितैर्मण्डलैश्च युता । रूक्षस्वरा परुषस्वरा । जर्जरा शस्त्रे किञ्चिन्मात्रस्पर्शे शीर्णा । दुस्पर्शा परुषा । अपदिशं निवेशितशिरोदेशा च दिग्भ्योऽन्यत्र निवेशितशिरोभागा च शिला वर्ज्या स्यात् ॥ १३२ ॥

विवरणम्

अथ पादुकादिविषये शिलां दुष्टां वदन् शिष्टां ग्राह्यां दर्शयति—**दुष्टोद्देशसमुद्भवेति** । दुष्टोद्देशाः प्रेतवनादयः । अन्यपरिशिष्टेति । अन्यत्र विनियुक्तशेषा शिला । दुर्ग्रहाद्याश्रितेति । ब्रह्मराक्षसादयो दुर्ग्रहाः । वाताग्न्यर्ककराहतेति । सदा वातेन अग्निनातपेन वा स्पर्शतो दूषिता । बाला च **वृद्धासतीति** । तदुक्तम् —

---

*असतीशब्दस्य व्याख्यात्र न दृश्यते । चण्डालिकैवासतीति विवरणे दर्शनात् वृद्धा सतीति मुद्रितपाठो नादृतः ।

"बाला शस्त्रासहा मृद्वी पिच्छिला पल्लवास्थिरा ।
सा हि मण्डूकखण्डा च वृद्धा रूक्षातिजर्जरा ॥
बहुवर्णातिनीला च धूम्रा च स्थूलरोमिका ।
हीनस्वरा च निन्द्याङ्गी सोष्णा चण्डालिका स्मृता ॥"

इति । चण्डालिकैवासती । दूरेखाक्षरगर्भमण्डलयुतेति । दुरित्येतद् रेखाक्षरपदाभ्यां सम्बध्यते । दूरेखा वक्रादिका दुरक्षराणि रेखादीनि । तदुक्तम्—

"वक्रस्थूलकृशा रूक्षाश्छिन्नाग्राश्च[1] न शोभनाः ।
सङ्कीर्णा बहुवर्णाश्च यस्यां नेष्टा च सा शिला ॥"

इति । रोदोभिः पुष्टिशान्तयः या योगवाहेषूच्चाट(?) इत्यादि ।

सगर्भोत्पाद्यमाना या भिद्यते शिथिलध्वनिः ।
"मण्डलादियुतोष्णा वा विवर्णा वापि तां त्यजेत् ।" इति । दुस्पर्शेति । कण्टकितवदवस्थानादेतत् । अपदिशं निवेशितशिरोदेशेति । अदिक्ष्वाहिताग्रेत्यर्थः । इहैतदर्थादवसेयम् । शिष्टदेशोद्भवासु रेखाक्षरयुता ग्राह्येत्यादि ॥ १३२ ॥

**गुर्वी धीररवा स्फुलिङ्गबहुला न्यग्रोधबोधिच्छद-**
**प्रख्या बिम्बविधौ विशालबहुला ग्राह्या शिला पौरुषी ।**
**रम्भापत्रनिभा नचातिबहला स्निग्धस्वरा शीतला**
**स्त्रैणी पीठविधौ द्विलक्ष्मभिदुरा क्लैबी पदाब्जार्पणे ॥ १३३ ॥**

विमर्शिनी

तत्र बिम्बविधौ पौरुषी शिला ग्राह्या । सा तु गुर्वी गुरुत्वयुक्ता । धीररवा गम्भीरनादा । स्फुलिङ्गबहुला बहुस्फुलिङ्गयुक्ता । न्यग्रोधबोधिच्छदप्रख्या वटपत्रवद् वा अश्वत्थपत्रवद् वाकारयुक्ता । विशालबहुलातिविस्तारा च । पीठविधौ स्त्रैणी स्त्रीशिला ग्राह्या । सा तु रम्भापत्रनिभा कदलीपत्राकारा । न चातिबहला अतिघनरहिता । स्निग्धस्वरा माधुर्यस्वरयुक्ता । शीतला शैत्ययुक्ता च । पदाब्जार्पणे पीठस्याधोगतनपुंसकशिलार्थम् । क्लैबी नपुंसकलक्षणयुता शिला ग्राह्या । सा तु द्विलक्ष्मभिदुरा पुंसः स्त्रियाश्च लक्षणभेदिता च ॥ १३३ ॥

विवरणम्

पुरुषशिलादिलक्षणमाह — **गुर्वीति** । पौरुषी शिला बिम्बविधौ ग्राह्येत्यन्वयः । न्यग्रोधबोधिच्छदप्रख्या वटाश्वत्थपत्रानुकारा । विशालबहला विस्तृता

1. 'भिन्नाङ्गाश्च' क. पाठः.

घना च। स्त्रैणी पीठविधौ ग्राह्येति योज्यम् । क्लैबी पदाब्जार्पणे इति। नपुंसकरूपा शिला पच्छिलाविधौ ग्राह्येत्यर्थः ॥ १३३ ॥

**लब्धायां शुभलक्ष्मलक्षितशिलायां शोधयित्वाञ्जसा**
**सम्पाद्य ध्वजपट्टिकादिपरिवीतं मण्डपं मूलतः ।**
**मध्ये दिक्षु दिगीश्वरानपि यजेत् सर्वेष्वथो बीजमु-**
**ख्यासिभ्यामपि मृत्युजिन्मनुवरेणेशे स्वमूलान्ततः ॥ १३४ ॥**

विमर्शिनी

शिलापरिग्रहमाह — लब्धायामिति । शुभलक्ष्मलक्षितशिलायां शुभैर्लक्षणैर्युक्तायां शिलायां लब्धायां सत्यां दर्भमृदादिभिरञ्जसा शोधयित्वा । ध्वजपट्टिकादिपरिवीतं ध्वजैस्तत्पताकाभिश्च परिवृतं मण्डपं सम्पाद्य सर्वेषु देवेषु मध्ये मूलतो दिक्षु दिगीश्वरानिन्द्रादीनपि यजेत् । अथो ईशे स्वमूलान्ततः स्वमूलयजनानन्तरम् । बीजमुख्यासिभ्यां द्वादशपटले वक्ष्यमाणेन बीजमुख्यमन्त्रेण क्षुरिकया च । मृत्युजिन्मनुवरेण मृत्युञ्जयाभिधानेनापि यजेत॥१३४॥

विवरणम्

शिलापरिग्रहक्लृप्तिमाह — लब्धायामिति । शिलान्वेषणस्यैव प्रकृतत्वादिदानीं लब्धायामित्यभिधानम् । भूम्यन्तर्हितायां तु शिलायां खात्वा लब्धायामित्यपि द्रष्टव्यम्। अञ्जसा शोधयित्वेति दर्भादिभिर्घर्षणपूर्वकं बहुजलैर्युक्तितः शोधनमुक्तम्। गन्धजलेनापि क्षालनं, प्राक् पूजितेन कलशेन अभिषेचनं, पञ्चगव्येन पवमानीभिः प्रोक्षणमप्युक्तम्। मूलतो मध्ये यजेदिति। शिलायामपि यत्र प्रतिमा गृह्यते स एव प्रदेशो मध्य इत्यभिप्रेतः। तत्र देवं विधिवत् सम्पूज्य पायसं निवेदयेदिति भावः। दिक्षु दिगीश्वरानपि यजेदिति। स्थण्डिलेषु स्वस्तिकादिषु कलशेषु वेति भावः। शिवे त्वधिकमाह—अथो* बजिमुख्यासिभ्यामिति। असिः क्षुरिका। एतन्मन्त्रोद्धारस्तु कर्मशेष एव। कल्पविदिति देवसन्निधावेव बीजमुख्यादिपूजा तद्बहिरङ्गाद्यावरणपूजेत्युक्तम्॥ १३४ ॥

**तत्पश्चिमेऽस्त्रमनुनाष्टशताज्यहोमं**
**कृत्वाप्यर्य सर्पिरधिवास्य च शस्त्रजातम् ।**
**तद्देवताव्युदसनाय सभूतकूर-**
**मों देवताभ्य इति दिक्षु बलिं किरेच्च ॥ १३५ ॥**

---

*'बीजमुख्यासिभ्यामपि कल्पवित् त्रिनयने मृत्युञ्जयेनापि तद्' इति विवरणपाठः.

विमर्शिनी

**अथ सर्वेषु** तत्पश्चिमे अस्त्रमनुनाष्टशताज्यहोमं कृत्वा सम्पातसर्पिराप्य संस्पृश्य । शस्त्रजातं शस्त्रसमूहम् अधिवास्य । तद्देवताव्युदसनाय तत्रत्यानां देवतानामपासनार्थम् । सभूतकूरं भूतकूरैः सहितं बलिं दिक्षु ओं देवताभ्य इत्यादिना पूर्वोक्तेन मन्त्रेण । किरेत् विक्षिपेत् ॥ १३५ ॥

विवरणम्

**शस्त्रजातं** चाधिवास्येत्यन्वयः । देवस्याधिवासनं चकारेण सूचितम् । यदुक्तं—'इष्ट्वाहतवस्त्रेण दर्भैरप्याच्छाद्ये'ति । शस्त्राणामपि वस्त्रेणाच्छाद्याधिवासः । तद्देवताव्युदसनायेति । तद्गतानां भूतादीनां वनदेवतानां चेत्यर्थः । शिलाशोधनतोऽपि प्रागेव वेदानीं वा बलिहरणमेतत् स्यात् । बलिहरणान्तरं वोत्तरेद्युर्वास्त्रेण तद्देवतापासनमपि व्युदसनग्रहणेनोक्तम् । ओं देवताभ्य इति । भूपरिग्रह उक्त एव मन्त्रः । प्रणवेन सहोपादानं प्रदर्शनार्थम् । मया सम्पूजितैरित्यादिमन्त्रेष्वपि प्रणव आदितः स्यादिति ॥ १३५ ॥

**देवाग्रतो जपतु निश्यधिशय्य दर्भ-**
**शय्यां नमःसकललोकमनुं त्रिधाम्नि ।**
**शम्भौ नमःशमितिमन्त्रयुजार्थयित्वा**
**स्वप्नार्थमों हिलिहिलीति मनुं जपेच्च ॥ १३६ ॥**

**नमः सकललोकाय विष्णवे प्रभविष्णवे ।**
**विश्वाय विश्वरूपाय स्वप्नाधिपतये नमः ॥ १३७ ॥**

**नमः शम्भो ! त्रिनेत्राय रुद्राय वरदाय च ।**
**विश्वाय विश्वरूपाय स्वप्नाधिपतये नमः ॥ १३८ ॥**

**आचक्ष्व देव ! देवेश ! प्रपन्नोऽस्मि तवान्तिकम् ।**
**स्वप्ने सर्वाणि कार्याणि हृदयस्थानि यानि वै ॥ १३९ ॥**

**ओं हिलिहिलि शूलपाणये स्वाहा । इति ।**

विमर्शिनी

**पुनर्निशि** देवाग्रतः । दर्भशय्यां दर्भमयीं शय्याम् । अधिशय्याश्रित्य । त्रिधाम्नि विष्णौ । नमस्सकललोकमनुं नमः सकललोक इत्यादिमनुं मन्त्रं जपतु ।

शम्भौ शिवे । नमश्शमितिमन्त्रयुजा नमः शम्भो इत्यादिमन्त्रद्वयेन अर्थयित्वा प्रार्थ्य । स्वप्नार्थं स्वप्नदर्शनार्थम् । ओं हिलि हिलि इत्यादिमनुं जपेच्च । अन्येषु स्वस्वमूलमन्त्रं जपेत्, ततः स्वप्नं पश्येत् ॥ १३६ – १३९ ॥

विवरणम्

निशि देवाग्रतो दर्भशय्यामधिशय्य जपत्वित्यन्वयः । निशीत्यनेन प्रागुक्तं सर्वं दिवेत्यप्युक्तम् । दर्भशय्यायां शयित्वेत्यर्थः ॥ १३६ ॥

स्थित्वैवार्थनेष्यते । नमः सकललोकायेति, नमश्शम्भो त्रिनेत्रायेति च स्वप्नमाणवको नाम मन्त्रः । हरिहरादिषु कथमिति । तेष्वपि यथास्वं विष्णुं शिवं वापि सम्पूज्य तदग्रतो यथोक्तं[1] स्वपनं कार्यमिति ज्ञेयम् ॥

[१३७–१३९॥

दुःस्वप्नेऽस्त्रशताज्यहोमकृदथ प्रातः समभ्यर्च्य ता-
मुद्बुध्यस्वमनुं जपन् वदनपादाद्यङ्गकेष्वङ्कयेत् ।
तक्ष्णा तां सहपीठपाददृषदं प्रोद्धार्य कृत्वा रथे
नीत्वात्रोत्तरक्लृप्तशिल्पिनिलयं[3] बिम्बादिकं कारयेत् ॥ १४० ॥

विमर्शिनी

पुनः प्रातर्यदि दुःस्वप्ने दृष्टे[2] । अस्त्रशताज्यहोमकृद् अस्त्रमन्त्रेणाष्टशतमाज्यं हुत्वा । मूलमन्त्रेण समभ्यर्च्य । तां शिलाम् । वदनपादाद्यङ्गकेषु वदनपादादिसर्वाङ्गेषु । उद्बुध्यस्वाग्न इति मनुं जपन् अङ्कयेत् चिह्नं कुर्यात् । पुनस्तक्ष्णा सहपीठपाददृषदं पीठशिलापादशिलाभ्यां सहितां तां शिलां प्रोद्धार्य प्रकर्षेणोद्धरणं कारयित्वा । रथे रथस्थानीये शकटे वा । कृत्वा स्थापयित्वा । अत्र देवालयसमीपे । उत्तरक्लृप्तशिल्पिनिलयं देवालयस्योत्तरभागे कल्पितं शिल्पिनो गृहं नीत्वा । बिम्बादिकं बिम्बपीठादिकं सर्वं कारयेत् ॥ १४० ॥

विवरणम्

दुःस्वप्न इति । सुस्वप्ने तु सा ग्राह्यैव । यदुक्तम्—

"ज्वलन्तीं वा शिलां पश्येत् स्वप्ने स्वां देवतां तु वा ।
अन्यद्वा शोभनं ग्राह्या सा शिला" ॥ इति ।

---

१. 'क्तं दर्भस्व', २. 'ष्ट', ३. 'ल्प' क. पाठः.

अथ प्रातरिति। प्रातः स्नानादि कृत्वा तस्यां शिलायां प्राग्वन्मूलमन्त्रेण देवं पूजयेत्। उद्बुध्यस्वमनुं जपन्निति। सर्वाङ्कनेष्वयमेव मन्त्र इति भावः। वदनपादाद्यङ्ककेष्विति। यदुक्तम्—'स्फुलिङ्गबहुलं तस्याः शिर' इत्यादि। अङ्कयेदिति। यदुक्तम्—'हेमसूच्यष्ठालाभ्यां तु छिन्द्यात् प्रथममस्त्रतः'। इति। सकृदुद्बुध्यस्वेत्युक्त्वा ...रस्त्रमुच्चारणीयमिति ज्ञेयम्। पीठपच्छिलयोरस्त्रेणैवाङ्कनम्। नीत्वात्रेति। यत्र प्रासादादि निर्मेयं तत्र, आयतनभूमावित्यर्थः॥ १४०॥

इति तन्त्रसमुच्चयविवरणे

प्रथमः पटलः।

---

इति तन्त्रसमुच्चयेऽर्चकोर्वी-
ग्रहवास्त्विष्टिनिधीष्टकाक्रियाढ्यः।
सहगर्भशिलाहृतिप्रकारः
प्रथमोऽयं पटलः प्रगुम्भितोऽभूत्॥ १४१॥

अथ ग्रन्थकृत् प्रथमे पटले प्रकाशीकृतानर्थान् स्मारयति—इतीति। एवं तन्त्रसमुच्चये तन्त्रसमुच्चयाख्ये ग्रन्थे। अयं प्रथमः पटलः परिच्छेदविशेषः। प्रगुम्भितः विरचितोऽभूत्। कथंभूतः, अर्चकोर्वीग्रहवास्त्विष्टिनिधीष्टकाक्रियाढ्यः अर्चक आचार्यः उर्वी भूमिः तयोर्ग्र(हणं ? हः) परिग्रहणं तेन वास्त्विष्टिर्वास्तुयागः तेन च निधिः निधिकलशस्थापनं तेन च इष्टकाक्रिया इष्टकानिधानं तेन चाढ्यः परिपूर्णः। सहगर्भशिलाहृतिप्रकारः गर्भस्य गर्भाधानस्य शिलाहृतेः शिलाया आहरणस्य च यौ प्रकारौ ताभ्यां च सहित एष पटलः॥ १४१॥

इति तन्त्रसमुच्चयविमर्शिन्यां

प्रथमः पटलः।

---

अथ द्वितीयः पटलः ।

पादोनत्रिकरादिपञ्चदशहस्ताशाङ्गुलान्तोत्तरे-
ष्वष्टाष्टाङ्गुलवृद्धितोऽन्तरभवद्योनिप्रभेदेष्वथ ।
प्रत्यक्प्राग्वदनक्रमेण विहितेष्वल्पेषु वान्येषु वा
प्रासादेषु विशिष्टजातिषु निजेष्टं कारयेत् कारुभिः ॥ १ ॥

विमर्शिनी

'प्रासादमारचयतां सहमन्त्रबिम्बम्' इति पूर्वपटलेन प्रस्तुतानां प्रासादादीनां लक्षणं वदन् प्रथमं सामान्येन प्रासादानुद्दिशति—**पादोनत्रिकरेति** । अथाल्पेष्वन्येषु वा प्रासादेषु निजेष्टं कारुभिः कारयेदिति सम्बन्धः । तत्राल्पप्रासादान् विशिनष्टि पादोनेत्यादिविशेषणैः । अथ गर्भाधानान्ते कर्मणि कृते । पादोनत्रिकरादिपञ्चदशहस्ताशाङ्गुलान्तोत्तरेषु पादोनत्रिकरादीनि पञ्चदशहस्ताशाङ्गुलान्तान्युत्तराणि येषां प्रासादानां ते तथोक्ताः । आशाशब्देन दशसङ्ख्या लक्ष्यते । अष्टाष्टाङ्गुलवृद्धितः पादोनत्रिकरादष्टाष्टाङ्गुलवर्धनेन । अन्तरभवद्योनिप्रभेदेषु अन्तरे मध्ये भवन्तो योनिप्रभेदाश्च येषां ते तथोक्ताः । प्रत्यक्प्राग्वदनक्रमेण विहितेषु क्रमात् पश्चिममुखत्वेन प्राङ्मुखत्वेन च कल्पितेषु । पादोनत्रिकरः प्रासादः प्रत्यग्वदनो ध्वजयोनिश्च, सद्व्यङ्गुलस्त्रिकरः प्राग्वदनो वृषयोनिश्च, सदशाङ्गुलस्त्रिकरः प्रत्यग्वदनो ध्वजयोनिश्च, पादोनचतुष्करः प्राग्वदनो वृषयोनिश्चेत्यादिक्रमेण सदशाङ्गुलः पञ्चदशहस्तः प्रासादः प्रत्यग्वदनो ध्वजयोनिरित्यन्तं विहितेष्वित्यर्थः[2] । अन्येषु विशिष्टजातिषु वा । जातिच्छन्दविकल्पाभाससंज्ञेष्वित्यर्थः । यथा प्रयोगमञ्जर्याम्—

"आरभ्य त्रिकराच्च पञ्चदशकाद्धस्तादधस्तात् क्रमात् ।
प्रत्येकं प्रवदामि लक्षणमहं संक्षेपतो वेश्मनाम् ॥"

इति । भास्करीये च—

"त्रिचतुःपञ्चहस्तं तु षट्सप्ताष्टनवा दश ।
एकादश द्वादश च त्रयोदश चतुर्दश ।
पञ्चदशान्तविस्तारमेतेन विधिना विदुः ॥"

इति ॥ १ ॥

---

१. 'थोक्तेष्व' क. पाठः. २. 'ष्वपीत्य' ख. पाठः.

विवरणम्

एवं तावद्यागभूमेः शिलायाश्च प्रासादप्रतिमायोग्यतासम्पादनं प्रतिपादितम् । सम्प्रति तन्निष्पादनप्रकारः । तत्र प्रथमं प्रासादलक्षणप्रतिपादनायारभते—**पादोनत्रिकरेति** । अथ अल्पेषु वान्येषु विशिष्टजातिषु च प्रासादेषु निजष्टे कारुभिः कारयेदित्यन्वयः । यतश्च निर्धारणमित्यत्र सप्तमी । अत्राल्पप्रासादेषु योज्यानि विशेषणानि पादोनत्रिकरमारभ्य पञ्चदशहस्ताङ्गुलमवसानानि येषामुत्तराणां ते तथोक्ताः । आशाशब्दो दशसङ्ख्यावाची । अष्टाष्टाङ्गुलवृद्धितः अन्तरे अराले भवन्तो वक्ष्यमाणा योनिप्रभेदा येषां ते तथोक्ताः । प्रत्यक्प्राग्वदनक्रमेण विहितेष्विति । पादोनत्रिकरः प्रासादः प्रत्यग्वदनः, द्व्यङ्गुलसहितस्त्रिकरः प्राग्वदनः, तथा दशाङ्गुलसहितस्त्रिकरः प्रत्यग्वदनः, पादोनचतुष्करः प्राग्वदनः, एतत् क्रमेण पञ्चदशहस्ताशाङ्गुलान्तं योजनीयमित्यभिप्रायः । विशिष्टजातिष्विति जातिच्छन्दविकल्पाभासादयो गृह्यन्ते । निजेष्टमिति । स्वाभीष्टदेवतास्थापनयोग्यमित्यर्थः ॥ १ ॥

**ईशादिप्रेतेशपर्यन्तदिक्स्था:**
**प्रासादा ग्रामादिकेषु ध्वजोत्थाः ।**
**गोयोन्युत्थाः शेषदिक्संस्थिताः स्यु-**
**स्तत्स्थाप्यार्चा चेष्यते तत्सयोनिः ॥ २ ॥**

विमर्शिनी

उक्तानां प्रासादानां प्रत्यक्प्राग्वदनक्रमेण कल्पनीयत्वे विषयविभागमाह—**ईशादीति** । ग्रामादिकेषु ग्रामपुरनगरादिषु । ईशादिप्रेतेशपर्यन्तदिक्स्थाः ईशकोणमारभ्य यमपर्यन्तदिक्षु स्थिताः प्रासादाः । ध्वजोत्थाः ध्वजयोनिसंभूताः । शेषदिक्संस्थिताः निर्ऋत्यादिसोमान्तदिक्स्थिताः । गोयोन्युत्थाः वृषयोनिसंभूताः स्युः । तत्स्थाप्या तत्र तत्र स्थाप्या अर्चा प्रतिमा । तत्सयोनिः तत्समानयोनिरिष्यते । प्रासादो ध्वजयोनिश्चेत् प्रतिमापि ध्वजयोनिः, वृषयोनिश्चेद् वृषयोनिरित्यर्थः । तथा पाशुपते—

"ईशपूर्वाग्नियाम्यस्थ पश्चिमाभिमुखं शुभम् ।
उत्तरानिलवारीशराक्षसस्थं पुरोमुखम् ॥"

इति । तथाच मञ्जर्याम्—

---

१. 'प्रत्यग्व' क. पाठ.

"लिङ्गध्वजस्थमृषभाश्रितमेव शस्तं
तत्रापि मुख्यमनुरूपतया गृहस्य ।"

इति ॥ २ ॥

विवरणम्

तत्र तत्साधनभूतानेकविधप्रमाणप्रकृत्यात्मकपरिधिमानमूलभूतयोनिमुपदिदिक्षुर्योनीनां हेयोपादेयभेदेनावस्थानादुपादेयां योनिं प्राचि प्रतीचि च हराविति पुरोदीरितग्रामादिदिग्विशेषवशाद् दर्शयति—ईशादीति । ध्वजात्थाः गोयोन्युत्था इति । तत्कारणभूततत्तत्परिधिमानजन्यानेकविधप्रमाणसाध्यतया तत्कार्यभूता इत्यर्थः । तत्सयोनिः तेन प्रासादेन समानयोनिः । तत्तत्परिधिमानावच्छिन्नद्रव्योचितानेकविधप्रमाणसाध्येत्यर्थः । प्रासादप्रतिमयोः परस्परसमयोनित्वं चैवं प्रतिपादितमवगन्तव्यम् । तेन प्रासादस्य प्रतिमाजन्यत्वेऽपि योनिसिद्धिर्भवति ॥ २ ॥

**इष्टातानवितानमाननिचये त्रिघ्नेऽष्टभिर्भाजिते**
**शेषो योनिरिह व्ययो मुनियुजाथायोऽष्टनिघ्नेऽरुणैः ।**
**ऋक्षैर्ऋक्षमवाप्तिरत्र तु वयो ज्ञेयं तिथिस्त्रिंशता**
**वारो भूमिधरैर्निधिप्रगुणिते धर्माहते वा व्ययः ॥ ३ ॥**

विमर्शिनी

कीदृशी योनिरित्याकाङ्क्षायां योन्यादिकमाह—इष्टातानेति । इष्टातानवितानमाननिचये इष्टस्य प्रासादादेराताननवितानयोर्दैर्ध्यविस्तारयोर्माननिचये प्रमाणसमूहे । त्रिघ्ने त्रिभिर्गुणिते । अष्टभिर्भाजिते हृते सति । यः शेषः स योनिरित्युच्यते । इहेत्यनेन इष्टातानवितानमाननिचये त्रिघ्ने इत्यनुवादः क्रियते । मुनियुजा चतुर्दशभिर्भाजिते सति शेषो व्यय इत्युच्यते । अथेत्यारम्भभेदे । इष्टातानवितानमाननिचये अष्टनिघ्नेऽष्टभिर्गुणिते । अरुणैर्द्वादशभिर्भाजिते शेष आय इत्युच्यते । इहेति अत्राप्याकृष्यते । इहाष्टनिघ्ने ऋक्षैः सप्तविंशत्या भाजिते शेष ऋक्षं नक्षत्रम् । अत्र त्विति तुशब्दो विशेषद्योतकः । अत्र ऋक्षैर्भाजिते । अवाप्तिः आवृत्तिः[1] फलमिति यावत् । तद् वयो ज्ञेयम् । इहाष्टनिघ्ने त्रिंशता भाजिते शेषस्तिथिरित्युच्यते । इहैव भूमिधरैः सप्तभिर्भाजिते शेषो वारः । व्ययस्य पक्षान्तरमाह—निधीति । इष्टातानवितानमाननिचये निधिप्रगुणिते नवभिर्गुणिते धर्माहृते दशभिर्हृते शेषो वा व्ययः । तथाहुः—

---

१. 'वृ' ख. पाठः.

"विस्तारायामराशौ वसुगुणित इनैर्भाजिते शेष आयो
रामघ्ने मन्ववाप्ते व्यय इह वसुभिर्भक्तशेषस्तु योनिः ।
अष्टाभिर्वर्धितेऽस्मिंस्त्रिनवहृतफलं तद्वयः शेष ऋक्षं
पर्यन्ते त्रिंशदाप्ते तिथिऋषिभजिते वार आदित्यपूर्वः ॥"

इति । मयमते च —

"व्यासायामसमूहे वसुनिधिगुणिते दिनेशधर्महृते ।
आयव्ययमपि शिष्टं रामघ्नेऽष्टाहृते योनिः ॥"

इति ॥ ३ ॥

विवरणम्

एवमुपादेयाया योनेः कार्यभूतं तत्तत् परिधिमानमुपायविशेषेणोपदिशति—इष्टातानवितानेति । प्रासादो बिम्बमन्यद्वा निर्मित्सितं सामान्येन इष्टशब्देन गृह्यते । आतान आयामः, वितानो विस्तारः, मानं प्रमाणविशेषसाध्यं सङ्ख्यालक्षणं मानं, निचयशब्दः समूहपर्यायः । तेनातानवितानयोरभितो वर्तमानयोः परिग्रहोऽपि द्योतितः । भाव्युपचारेण वायमातानवितानव्यपदेशः । येन मानेन प्रासादस्य प्रतिमाया वातानवितानौ यथालक्षणं परिकल्पनीयौ तादृशं मानमित्यर्थः । ननु यद्येवं परिधिमानमित्येव साक्षाद् ग्रहीतव्यमिति चेत् । नैष दोषः, प्रतिमार्थत्वात् । तत्र हि परिधिमानग्रहणे विवक्षितं परिधिमानं न प्रतीयेत । वृत्तषट्कूटादिप्रासादानां तु चतुरश्रप्रासादप्रकृतित्वादेव तत्परिधिमानग्रहणं भवतीत्यर्थः । त्रिघ्नेऽष्टभिर्भाजिते शेषो योनिरिति त्रिगुणितं कृत्वा अष्टावष्टौ यथायोगमपनयेत् । तदा शेषोऽष्टभेदा योनिः स्यात् । तस्य परिधिमानस्य योनिस्तत्रावगन्तव्या । यावत् तत्रावशिष्यते तावती योनिरित्यर्थः । नक्षत्रतिथिवारेष्वपि समानमेतदिति द्रष्टव्यम् । किं पुनः प्रमाणसाधनमिति चेत् प्रासादे हस्तः प्रतिमायामङ्गुलम् । प्रमाणसाधनव्यवस्थापनाच्च परिधिमानसङ्करो न शङ्कनीयः । योनिवशादुपजायमानं परिधिमानमेवमुपदिष्टम् । तस्यैव परिधिमानस्य गुणविज्ञानार्थमायव्ययादिविज्ञानोपायमाह — इह व्यय इत्यादिना ; इहेति त्रिघ्न इष्टातानवितानमाननिचय एवेत्यर्थः । मुनियुक् चतुर्दश । अथाष्टनिघ्नेऽरुणैर्द्वादशभिरायः । अवाप्तिरत्र तु वय इति । सप्तविंशत्या ह्रियमाणे यो भागोऽवाप्यते तद् वयः स्यात् । वसुप्रगुणिते धर्माहृते वा व्यय इति । विकल्पान्तरप्रदर्शनार्थमेतत् । धर्मा दश ॥ ३ ॥

ध्वजधूमसिंहकुक्कुरवृषखरगजवायसाः क्रमेण स्युः ।
*प्रागादियोनयोऽष्टौ तेष्वयुजः सम्पदे युजो विपदे ॥ ४ ॥

विमर्शिनी

अष्टानां योनीनां नामानि कथयति — ध्वजेति । प्रागादिक्रमेण ध्वजधूमसिंहकुक्कुरवृषखरगजवायसाः ध्वजधूमेत्यादिसंज्ञाः । तेषु ध्वजादिषु अयुजः दिग्भवाः सम्पदेऽभ्युदयाय, युजः कोणभवा नाशाय । तथा पाशुपते —

"तत्रैकाद्यष्टपर्यन्ता ध्वजधूमादयः क्रमात् ।
ध्वजो धूमश्च सिंहश्च शुनको वृषभस्तथा ॥
खरश्चैव गजश्चैव वायसो वास्तुयोनयः ।
आदिप्रभृतिचत्वार एकैकान्तरिताः शुभाः ॥
द्वितीयाद्यास्तथैवान्ये चत्वारस्त्वशुभाः स्मृताः ।"

इति ॥ ४ ॥

विवरणम्

नक्षत्रादीनां प्रसिद्धत्वादप्रसिद्धा योनीर्गणयति— ध्वजेति । पूर्वादियोनयः पूर्वाद्यष्टदिक्षु वर्तमाना योनयः । परिमण्डपादीनां दिग्योनिपरिग्रहपक्षे दिग्विशेषाभिधानस्योपयोगः । तेष्वयुजः सम्पदे युजो विपद इति । ध्वजसिंहवृषगजा अभ्युदयहेतवः, शेषा विनाशहेतवश्च विज्ञेयाः । ननु किमर्थोऽयं फलोपन्यासः यावता प्रासादप्रतिमानां ध्वजवृषमात्रपरिग्रहात् परिमण्डपादीनां च पक्षे दिग्योनिनियमाच्च धूमादिपरिग्रहप्रसङ्गो न भवतीति चेत् । अथवा युज्यन्तेऽवयवैरिति युजः । अवयवभूताभिः सङ्ख्याभिः सहिता ध्वजादयः, ते न ग्राह्याः । ये त्वयुजः निरवयवाः पूर्णा एव, त एव ध्वजादयो ग्राह्याः स्युः । परिधिमानस्य सर्वसङ्ख्यास्वनियमात् कदाचिदेकैकयोनिः पूर्णो भवति । कदाचित् कतिपयावयवात्मकस्सन्नपूर्णश्च । तथा च तिथिनक्षत्रेष्विवापूर्णतायामपि ग्रहणप्रसङ्गः स्यात् । तन्निवृत्त्यर्थमेतदुक्तम्॥ ४ ॥

आयाधिक्यं व्ययतः सम्पाद्यं सर्वथान्यथापत्तिः ।
नक्षत्रादिशुभत्वं ज्योतिःशास्त्रादिभिः सुविज्ञेयम् ॥ ५ ॥

---

१. 'तः' क. पाठः

---

* 'पूर्वादियोनयो' इति विवरणटीका पाठः.

विमर्शिनी

व्ययतः व्ययात् । आयाधिक्यम् आयस्याधिकत्वम् । सर्वथा सर्वप्रकारेण सम्पाद्यं ग्राह्यम् । अन्यथा चेदापत्तिः नाशः स्यात् । नक्षत्रादिशुभत्वं नक्षत्रतिथ्यादीनां शुभत्वं ज्योतिःशास्त्रादिभिर्लोकत एव सुविज्ञेयत् । तथा मयमते—

"आयाधिकमथ वसुदं व्ययाधिकं[1] सर्वनाशः स्यात् ।"

इति ॥ ५ ॥

विवरणम्

आयव्यययोरितरेतरापेक्षं शुभाशुभत्वमाह— आयाधिक्यमिति । सर्वथेति । यद्यपि तिथिनक्षत्रादिषु किञ्चिदशुभमुपेक्ष्यते, तथापि व्ययाधिक्यमनुपेक्ष्यमित्यभिप्रायः । इत्थं प्रासादप्रतिमयोः परिधिमानमशुभं प्रतिपादितम् ॥ ५ ॥

बालत्वं कौमारं यौवनमथ वार्धकं च निधनं च ।
पञ्च वयांस्येष्वन्त्यं नेष्टं शिष्टानि वास्तुनीष्टानि ॥ ६ ॥

विमर्शिनी

वयांसि कथयति— बालत्वमिति । अथ बालत्वं कौमारं यौवनं वार्धकं निधनं मरणं चेति पञ्च वयांसि । एषु वयस्सु । अन्त्यं मरणमेव नेष्टम् । वास्तुनि शिष्टानीष्टान्येव ॥ ६ ॥

धाम्नो व्यासे शकरीद्वन्द्वभक्ते
मित्रेन्द्रेध्मांशैः समस्तांशतश्च ।
विस्तृत्या संयुक्तया पादुकादि-
स्तूप्यग्रान्तोऽभ्युच्छ्रयः स्याच्चतुर्धा ॥ ७ ॥

विमर्शिनी

प्रासादस्योन्नतेर्नियममाह —धाम्न इति । धाम्नः प्रासादस्य । व्यासे विस्तारे । शकरीद्वन्द्वभक्ते अष्टाविंशतिधा कृते सति । मित्रेन्द्रेध्मांशैः मित्रा द्वादश इन्द्राश्चतुर्दश इध्मा एकविंशतिः तत्सङ्ख्यैरंशैः समस्तांशतः समस्तेन च विस्तारेण संयुक्तया विस्तृत्या मानेन प्रासादस्य । पादुकादिस्तूप्यग्रान्तः पादुकमारभ्य स्थूप्यग्रमवधीकृत्य योऽभ्युच्छ्रय उत्सेधः स चतुर्धा स्यात् । तथा निबन्धने—

"सप्तांशत्र्यर्धिकोऽध्यर्धः[2] पादोनद्विगुणोऽपि वा ।
द्विगुणो वोच्छ्रयः प्रोक्तो विस्तारात् सर्ववेश्मनाम् ॥"

इति ॥ ७ ॥

---

१. 'यमधि' ख. पाठः. २. 'न्वितो ऽर्धः' ख. पाठः.

विवरणम्

अथ प्रासादस्य भूयस्तरकालसाध्यत्वेन प्रागेव प्रक्रमणीयत्वात् प्रथमं प्रासादप्रकारमभिदधानः समचतुरश्रं प्रासादं प्रकृतित्वेन च मन्यमानः तस्य प्रतिदिशं वितानस्य परिधिमानस्य चतुर्थांशलक्षणस्य स्पष्टतरत्वात् प्रथममुन्मानं जनयितुमाह— **धाम्नो व्यास** इति । यद्यपि समचतुरश्रे विस्तारो नाम न कश्चित् सम्भाव्यते, तथापि व्यासग्रहणमायतचतुरश्रसमवृत्तादीनामपि विस्तारादेवोन्मानं जनयितव्यमिति ज्ञापनार्थम् । शकरीद्वन्द्वमष्टाविंशतिः । विस्तारप्रमाणमष्टाविंशतिधा भङ्क्त्वा तेषु भागेषु मित्रांशाद् विस्तारप्रमाणे योजयेत् , तदेकमुन्मानम् । एवमितरत्रयं द्रष्टव्यम् । मित्रा द्वादश, इन्द्राश्चतुर्दश, इध्मा एकविंशतिः, समस्तांशा अष्टाविंशतिः । ननु उन्मानेन अवच्छेद्यः कस्मिन् प्रदेशे प्रासाद इत्याह— पादुकादिस्तूप्यग्रान्त इति । पादुकादीत्युपलक्षणम् । पादुकाभावे जगत्याद्यपि ग्राह्यम् । समस्तोन्मानमेवमुक्तम् ॥ ७ ॥

**गेहे त्रिदोर्वर्गभवे द्विदोर्मितान्**
***स्तम्भांस्ततोऽर्ध्यङ्गुलवर्धितान् क्रमात् ।**
**चतुष्कराद्युत्तरवर्गजेषु तान्**
**¶करोत्वधिष्ठानमतोऽर्धसंमितम् ॥ ८ ॥**

विमर्शिनी

एवं समस्ताया उन्नतेः प्रमाणमुक्त्वा स्तम्भाधिष्ठानयोरुन्नतेर्नियममाह— **गेह** इति । त्रिदोर्वर्गभवे पादहीनः त्रिकरः सद्व्यङ्गुलः त्रिकरः सदशाङ्गुलः त्रिकरश्च त्रिदोर्वर्गः तद्भवे गेहे । द्विदोर्मितान् द्विकरसम्मितान् स्तम्भान् करोतु । चतुष्कराद्युत्तरवर्गजेषु पादोनचतुष्करादिश्चतुष्करवर्गः पादोनपञ्चकरादिः पञ्चकरवर्गः एवं षट्करादावप्यूह्यम् । तेषु चतुष्करादिवर्गजेषु गेहेषु । क्रमेण ततः द्विकरात् । अर्ध्यङ्गुलवर्धितान् चतुश्चतुरङ्गुलवर्धितान् स्तम्भान् करोतु । अतः स्तम्भाद् अर्धसम्मितमधिष्ठानं करोतु । तथा निबन्धने—

"त्रिहस्ते द्विकराः स्तम्भा गोलकद्वयवर्धिताः ।
हस्ते हस्ते स्थिता गेहादापञ्चदशहस्तकात् ॥"

इति ॥ ८ ॥

---

*'स्तम्भान् युगाङ्ग्यङ्गुलवर्धितान्' इति, ¶ 'कुर्यात्' इति च विवरणरीत्या पाठः ।

विवरणम्

अथाधिष्ठानस्यापि जनकं स्तम्भोन्मानं विस्तारादेव जनयति — **गेह** इति । त्रिदोर्वर्गभवे गेहे द्विदोर्मितान् स्तम्भान् कुर्यादित्यन्वयः । दोश्शब्दो हस्तपर्यायः । त्रिहस्तस्य वर्गः त्रिहस्तवर्गः तत्र भवम् । त्रिवर्गशब्दोऽयं पारिभाषिकोऽभिप्रेतः । पादोनत्रिकरो द्व्यङ्गुलाधिकत्रिकरो दशाङ्गुलाधिकत्रिकरश्च । सोऽयं त्रिकरश्शिल्पिभिः परिभाषितः । एवं चतुष्करादयो विज्ञेयाः । परिधिमानस्य चतुर्थो भागस्समचतुरश्रः प्रासाद इति पूर्वमेवोक्तम् । द्विदोर्मितान् द्विहस्तोन्मितान् । अधिष्ठानमतोऽर्धसम्मितमिति । तदर्धमधिष्ठानोन्मानमित्यर्थः । चतुष्कराद्युत्तरवर्गके गेह इत्यनुषज्यते । युगाख्यङ्गुलवर्धितानिति यथासङ्ख्यं सम्बन्धः । चतुष्करवर्गप्रासादे द्व्यङ्गुलाधिकद्विहस्ताः स्तम्भाः पञ्चकरवर्गप्रासादे चतुरङ्गुलाधिकाः । एवमन्यत्रापि द्रष्टव्यम् । चतुष्करवर्गप्रासादे एकाङ्गुलाधिकहस्तमानमधिष्ठानं स्यात् । शेषमप्येवं नेयम् ॥ ८ ॥

**अङ्गाद्यैरुदयोत्तरान्तरगतोन्मानं विभज्य क्रमात्**
**सङ्ख्यानैः शिवपश्चिमैर्निगदिते स्तम्भोच्छ्रये स्वेच्छया ।**
**अंशं योजयतु क्वचित् त्यजतु वा मासूरके स्वोच्छ्रयं**
**भक्त्वाङ्गादिनवान्तिमैर्विरहयेद् वांशं यथोक्तोच्छ्रयात् ॥ ९ ॥**

विमर्शिनी

'स्तम्भार्धोच्चमधिष्ठानं पादबन्धं प्रतिक्रममि'ति च प्रोक्तयोः स्तम्भाधिष्ठानयोरौचित्यवशान्न्यूनाधिकत्वमप्याह — **अङ्गाद्यैरिति** । उदयोत्तरगतोन्मानम्, उदयो भित्तेर्मूलप्रदेशः पादुकस्य मूलप्रदेशो वा, उदयोत्तरयोरन्तरगतमुन्मानम् । अङ्गाद्यैः षडाद्यैः । शिवपश्चिमैरेकादशान्तिमैः । सङ्ख्यानैर्विभज्य पूर्वनिगदिते स्तम्भोच्छ्रये एकमंशं योजयतु क्वचित् पक्षे । क्वचित् पक्षे त्यजतु च । तथैव मासूरके अधिष्ठाने । स्वोच्छ्रयमङ्गादिनवान्तिमैः षडादिनवपर्यन्तैः । सङ्ख्यानैः क्रमाद् भक्त्वा यथोक्तोच्छ्रयादेकमंशं विरहयेत् त्यजेद्वा । तथा-मयमते —

"जन्मोत्तरान्तरगतं गृहपादमानं षट्सप्तनागनवपङ्क्तिहरांशमेकम् ।
न्यूनं करोतु गृहसंधृतिपादतोऽथ यद्वाधिकं निखिलसालगतेषु चैवम् ॥

१. 'स्योन्नेयम्' ग. पाठः.

स्तम्भार्धोच्चं वा मसूरोच्चमानं षट्सप्ताष्टांशेषु वा भागहीनः ।
वास्त्वाधारोच्चं भवेत् सर्ववास्तुष्वेवं पूर्वं शम्भुना सम्यगुक्तः ॥"

इति ॥ ९ ॥

विवरणम्

अथ स्तम्भाधिष्ठानयोरुन्मानपरिसमाप्त्याद्यपेक्षया कंचिदुन्मानप्रक्षेपशोधने दर्शयति — अङ्गाद्यैरिति । उदय उपपीठं, अङ्गाद्यैश्शिवपश्चिमैः सङ्ख्यानैरित्यन्वयः । निगदिते प्राग् द्विदोर्मितानित्यादिना अभिहिते । अंशमेकं भागम् । मासूरकशब्दोऽधिष्ठानपर्यायः ॥ ९ ॥

**भक्ते प्रत्युत्तरान्तर्गतचरणसमुन्मानकेऽष्टाङ्कदिग्भि**
**स्तेष्वेकांशात्तमूलप्रतितिदुरगांशादिहीनाग्रतानान् ।**
**दारुस्तम्भांस्तदर्हे विहिततितदलाग्न्यब्धिभागोनतानान्**
**कुड्यस्तम्भांश्च कुड्ये रचयतु चरणाग्रप्रतानोऽत्र दण्डः ॥ १० ॥**

विमर्शिनी

स्तम्भानां विस्तारमाह — भक्त इति । प्रत्युत्तरान्तर्गतचरणसमुन्मानके, प्रतिरधिष्ठानाग्रे कल्पितोऽवयवः, प्रतेरुत्तरस्य चान्तर्गतः स्तम्भोच्चो यस्तस्मिन् अष्टाङ्कदिग्भिरष्टभिर्वा नवभिर्वा दशभिर्वा भक्ते । तेष्वंशेषु एकांशात्तमूलप्रतितिदुरगांशादिहीनाग्रतानान् एकांशेनात्ता परिगृहीता मूलप्रततिर्मूलविस्तृतिः तदुरगांशो मूलविस्तृतेरष्टांशः, आदिशब्देन नवांशो दशांशो वा विवक्षितः, तद्रहिताग्रविस्तारान् दारुस्तम्भांस्तदर्हे करोतु । तथैव कुड्यस्तम्भान् विहिततितदलाग्न्यब्धिभागोनतानान् विहितस्य दारुस्तम्भस्य ततेर्विस्ताराद् दलेनार्धेनाग्निभागेन त्रिभागेनाब्धिभागेन चतुर्भागेन विहीनविस्तारान् कुड्ये रचयतु । अत्र दारुस्तम्भे । चरणाग्रप्रतानः स्तम्भाग्रविस्तारो दण्ड इत्युच्यते । तथा मयमते —

"पादोच्चपङ्क्तिनन्दाष्टभागैकं वाङ्घ्रिविस्तरम् ।
दारुस्तम्भगतं ह्येतत् कुड्यपादमथोच्यते ॥
तदर्धं वा त्रिभागोनं चतुर्भागोनमेव वा ।
कुड्यस्तम्भविशालं स्यादेतत् सर्वेषु धामसु ॥
तन्मूलतारमाख्यातं तत्तारं तु तथा भजेत् ।
एकभागविहीनं तु शेषमग्रविशालकम् ॥"

इति । मञ्जर्यां च "स्तम्भाग्रविष्कम्भमुशन्ति दण्डम्" इति ॥ १० ॥

विवरणम्

इदानीं जनितानां स्तम्भानां द्रव्यभेदापेक्षया विस्तारमाह—भक्त इति। प्रतिः पटी अन्तर्गतं मध्यगतम्। एकेनांशेन मूलविस्तारः मूलविस्तारादष्टमांशेन हीनः स एवाग्रे विस्तारः। आदिशब्देन .... ....। तदर्हे दारुमये प्रासादे मण्डपगोपुरादिषु च। अत्र प्रासादद्रव्यभेदः अधिष्ठानस्य शोधनमेव। विहिततततिदलाग्न्यब्धिभागोनतानानिति। ततिस्तानश्च विस्तार एव। दारुस्तम्भविस्तारार्धेन तृतीयांशेन चतुर्थभागेन वा यथायोगं कुड्यस्तम्भविस्तारः कार्यः। मूलविस्तार एवायम्। अग्रविस्तारस्तु पूर्वोक्तनयेन कार्यः। चरणाग्रप्रतानोऽत्र दण्ड इति संज्ञा विधीयते। अत्रेति प्रासादप्रकरण इत्यर्थः। स्तम्भपरिमाणमेवं निर्दिष्टम्॥ १०॥

*स्तम्भ एव निधिकलशादीनां प्रकृतिः। अत इदानीं निधिघटादीनां प्रमाणमाह — स्तम्भोच्चस्येति। तदङ्कांशः विस्तारादेव नवमो भागः तस्य मुखोदरादिकमुपपत्त्या योज्यम्। पद्म इति कूर्मास्पदं पद्मं गृह्यते। स्तम्भोच्चस्येत्यनुवर्तनीयम्। तस्याष्टमभागेनोच्छ्रयः उच्छ्रयात् षष्ठमंशमपनीय शेषः पद्मस्य समवृत्ताकारस्य व्यासः। तदवयवक्लृप्तिश्च प्रतिमापद्मनयेन साधनीया। अर्धोच्छ्रयः प्रथाशब्दोऽपि विस्तारवाचकः। प्रथमेष्टकामाह — अत्रेति। आरिप्सितं वक्ष्यमाणेन चिकीर्षितम्। तैत्र्यमपि-पिण्डं विस्पष्टपृष्ठाग्रका इति। तदुत्पादनसमय एव न्यासे पृष्ठाग्रयोः परिज्ञानार्थं लक्षणं कार्यमिति भावः। पुटपाकः। शैल्यः शिलामय्यः। चतुरूनिताश्चतस्र एव। चतुरुपेता द्वादश। गृहौचित्यत इति। स्वतन्त्रमिष्टकामानमाह — कापीति। कापि स्मृता इत्यन्वयः। क्वचन मित्राशागजैः क्लृप्तायामाः तदर्धविस्तृताः तदर्धोच्चाश्चेत्येवं योजनीयम्। काचिदा भूमभूमेर्द्विधा एकभूमित आरभ्य नवभूमिप्रासादपर्यन्तं द्विधा इष्टका उक्ताः। कथमित्याह — नागाङ्काङ्गुलतोऽङ्गुलद्वयविवृद्ध्येति। अत्रापि क्लृप्तायामेत्यादि सम्बध्यते। अष्टाङ्गुलायामा नवाङ्गुलायामा वा तदर्धविस्तृताः तदर्धोत्सेधा एकभूमेः स्युः। दशाङ्गुला एकादशाङ्गुला वा द्विभूमेरित्यादि द्रष्टव्यम्। इदानीमिष्टकानामपि निदानं गर्भपात्रप्रमाणमाह— भङ्क्त्वेति। इह स्तम्भस्य मूलविस्तारमानं चतुर्विंशत्या विभज्य समस्तेन एकविंशत्यंशैरष्टादशभिष्षोडशभिर्द्वादशभिर्वांशैः समचतुरश्रस्य गर्भपात्रस्य विस्तारः। विस्तारेण सम उत्सेधः।

* अस्या व्याख्याया मूलश्लोका न दृश्यन्ते।

अथवाष्टमांशेन षष्ठेन पञ्चमेनांशेन हीनः स एवं विस्तारार्धं वेत्यर्थः । स्वोत्से-धानलसागरांशरहितोत्सेधोज्ज्वलोर्ध्वच्छदमिति । ऊर्ध्वच्छदमुपरिगतं पिधानपात्रं तद्गर्भपात्रोन्मानतृतीयांशेन तुरीयांशेन वोन्मितं समचतुरश्रं स्यात् । अखिले-ष्विति । सर्वेषां साधारणमेतदित्यर्थः । गोभिरजिते षट् द्वाविति । गोभिर्विभज्य षड् बाह्येंऽशकानन्तर्द्वौ च विहायेति सर्वमनुषञ्जनीयम् । भूतैस्त्रीनपि चैककमित्य-त्रापि तद्वद् योज्यम् । परांशस्थितं गर्भं वितनुयादिति सर्वशेषः । परासि-त्रवशेषितेंऽश इत्यर्थः ॥

**मासूरोच्चे विभक्ते शिखिविशिखकरैः क्ष्मेक्षणेन्द्वंशतोऽर्धां-**
**शोर्ध्वं पादांशवृद्ध्या द्विगुणितचरमं योजयेद् वोपपीठम् ।**
**दिग्भक्तेंऽशैः शशाङ्कादिभिरिषुचरमैरेकसार्धद्विलोकै-**
**र्दण्डैर्वा निर्गतं चारचयतु विलसत्स्वाङ्गभङ्ग्याभिरामम् ॥ ११ ॥**

विमर्शिनी

अथाधिष्ठानादिप्रासादावयवान् वदन्नधिष्ठानादप्यधोदेशे पक्षान्तरेण कल्प-नीयस्योपपीठस्य क्लृप्तिमाह—मासूरोच्च इति । [मासूरोच्चे] अधिष्ठानोच्छ्रये । शिखिविशिखकरैः त्रिभिः पञ्चभिर्द्वाभ्यां वा विभक्ते । क्रमेण क्ष्मेक्षणेन्द्वंशतः एकद्व्येकांशकैः । अर्धांशोर्ध्वम् अर्धांशादुपरि । पादांशवृद्ध्या पादांशवर्धनेन । द्विगुणितचरमं द्विगुणान्तमुपपीठं योजयेद्वा । तस्य निर्गममाह—दिग्भक्त इति । अधिष्ठाने दिग्भक्ते दशधा कृते । शशाङ्कादिभिः एकादिभिः । इषुचरमैः पञ्च-पर्यन्तैरंशैर्वा । एकसार्धद्विलोकैः एकेन सार्धेकेन द्वाभ्यां त्रिभिर्वा दण्डैश्चरणाग्र-प्रतान इत्युक्तैः निर्गतमधिष्ठानाद् बहिर्गतम् । विलसत्स्वाङ्गभङ्ग्याभिरामं विल-सन्त्या स्वाङ्गभङ्ग्या मनोहरं चारचयतु । तथा मयमते—

"आत्ताधिष्ठानतुङ्गाद् द्विगुणमथ समं सार्धमर्धं त्रिपादं
पञ्चांशघ्यंशकं वानलसमभजिते ह्येकमत्रोपपीठम् ।"

इति । काश्यपीये च—

"स्वाधिष्ठानसमोच्चं वा त्रिपादं वार्धमेव वा ।
पञ्चभागेऽग्निभागं वा सपादं सार्धमेव वा ॥
पादोनद्विगुणं वाथ द्विगुणं वा विशेषतः ।
एवमष्टविधं स्यात्तदुपपीठोच्छ्रयं द्विज! ॥

१. 'धा' ध. पाठः.

दशधाभज्याधिष्ठानमेकद्वित्रिचतुष्टयम् ।
पञ्चांशं वाथ निष्काममधिष्ठानस्य पादुकात् ॥
दण्डं वा सार्धदण्डं वा द्विगुणं वा त्रिदण्डकम् ।
अधिष्ठानाज्जगत्या वा समन्तात् पादबाह्यतः ॥"

इति ॥ ११ ॥

विवरणम्

प्रासङ्गिकं समाप्य प्रकृतमनुसरन् अधिष्ठानस्याप्यधःप्रासादोन्नत्यादिसिद्धये कर्तव्यमुपपीठमाह—मासूरोच्च इति । वाशब्दो भिन्नक्रमः । द्विगुणितचरमं वेत्यन्वयः । अर्धांशेन त्रिपदांशेनेत्यारभ्य पादोनद्विगुणेन वेति यावद् इत्यर्थः । शशाङ्कादिभिरिषुचरमैरिति । एकेन द्वाभ्यां त्रिभिश्चतुर्भिः पञ्चभिर्वांशैः । दण्डैरिति । चरणाग्रप्रतानोऽत्र दण्ड इति ह्युक्तम् । स्थलशैथिल्याद्यपेक्षया विकल्पानामुपयोगो द्रष्टव्यः । विलसत्स्वांशभङ्ग्याभिराममिति ॥ ११ ॥

इष्टाधिष्ठानोच्छ्रयं संविभज्य
सङ्ख्याभिः श्रुत्यादिनन्दान्तिमाभिः ।
कुर्यादेकांशेन तूपान(ड?द)न्ते
पद्मं धामोत्सेधतोऽदोऽधिकं स्यात् ॥ १२ ॥

विमर्शिनी

अधिष्ठानात् पृथक्कल्पनीयस्य पद्मनाम्नोऽवयवस्य क्लप्तिं चाह—इष्टेति । इष्टाधिष्ठानोच्छ्रयम् इष्टस्य कल्पितस्याधिष्ठानस्योच्छ्रयम् । श्रुत्यादिनन्दान्तिमाभिः चतुरादिनवान्तिमाभिः सङ्ख्याभिः, संविभज्यांशीकृत्य । तेष्वेकांशेन उपान(ड?द)न्ते पादुकादधोभागे । पद्मं पद्मदलाकारमवयवं कुर्यात् । अदः एतत्तु । धामोत्सेधतो गृहोच्चादधिकं स्यात् । तथाहुः—

"अधिष्ठानसमुत्सेधाद् वेदांशं दर्शनाष्टकम् ।
नन्दपातालभूतांशमेकांशं पद्ममायतम् ॥
पूर्वभूमिगतं पद्मं प्रासादानां प्रशस्यते ॥

इति ॥ १२ ॥

विवरणम्

उपान(ड?द)न्ते उपानद्......धामोत्सेधतोऽदोऽधिकं स्यात् । अदः पद्मं पद्मस्योन्मानमिति यावत् । तत्कृत्स्नोन्मानांशेन न कार्यम् । किं तर्हि, बहिरेव योज्यमित्यर्थः ॥ १२ ॥

**मासूरे मिहिरद्वयांशिनि ततोऽशैः पादुकं पावकै-**
**रष्टाभिर्जगतीं स्वरैः कुमुदकं शेषे दशांशेऽशकैः ।**
**त्रिद्व्यग्न्यश्विमितैर्गलं विरचयेत् कम्पान् गलं पट्टिकां**
**प्रत्युद्यन्मकरास्यकादिरुचिरां सिंहादिभिश्चोज्ज्वलाम् ॥ १३ ॥**

विमर्शिनी

अधिष्ठानक्लृप्तिमाह—**मासूर इति** । मासूरे अधिष्ठाने । मिहिरद्वयांशिनि चतुर्विंशतिधा कृते । तस्मात् । पावकैस्त्रिभिरंशैः । पादुकं पादुकाख्यमवयवं विरचयेत् । अष्टाभिर्जगतीं च । स्वरैः सप्तभिः कुमुदकं च । शेषे दशांशे शेषैः षड्भिरंशैर्दशांशीकृते सति । त्रिद्व्यग्न्यश्विमितैः त्रिभिर्द्वाभ्यां त्रिभिर्द्वाभ्यां चांशकैः । क्रमेण गलं कम्पान् पुनर्गलं पट्टिकां च विरचयेत् । तत्र प्रत्युद्यन्मकरास्यकादिरुचिरां प्रतेरुद्यद्भिर्मकरास्यादिभिर्मनोहरां, सिंहादिभिश्चोज्ज्वलां च विरचयेत् । तथा काश्यपीये—

"अधिष्ठानोत्सेधमत्र चतुर्विंशतिभागतः ।
त्र्यंशं पादुकं विद्यादष्टांशं जगती भवेत् ॥

कुमुदं सप्तभिः कुर्यात् षड्भागं प्रति चोच्छ्रयम् ।
प्रतेरुच्छ्रयमेवं तु दशभागे कृते पुनः ॥

त्रिभागं कुमुदं पट्टं स्याद् द्व्यंशे कण्ठपट्टिका ।
त्र्यंशेऽन्तरितं तस्या वाजनं च द्व्यंशकम् ॥

सिंहव्यालगजेन्द्रैः स्यात् प्रतिभूषणसंयुतम् ।
प्रतिक्रममिदं चैव अधिष्ठानोत्तमं विदुः ॥"

इति ॥ १३ ॥

**वास्त्वाधारसमुच्छ्रये प्रकृतिभक्ते वा त्रिभिः पादुकं**
**छन्दोभिर्जगतीं रसैः कुमुदकं चैकेन तत्पट्टिकाम् ।**
**भागाभ्यां गलपादकान् विरचयेदर्धांशतः पट्टिकां**
**क्षुद्रां सार्धधरांशकेन महतीं स्वांशोल्लसद्वाजनाम् ॥**

विमर्शिनी

पक्षान्तरेणाप्यधिष्ठानविभागमाह—**वास्त्वाधारेति** । वास्त्वाधारसमुच्छ्रये अधिष्ठानोच्चे । प्रकृतिभक्ते एकविंशतिधा कृते सति । त्रिभिः पादुकं

विरचयेत् । वेति पक्षान्तरद्योतकः । छन्दोभिः सप्तभिर्जगतीम् । रसैः षड्भिः कुमुदकम् । एकेन तत्पट्टिकां कुमुदपट्टिकाम् । भागाभ्यां गलपादकान् गलकान् पादान् । अर्धांशतः क्षुद्रामल्पां पट्टिकाम् । सार्धधरांशकेन अर्धसहितैकेन । महतीं स्वांशोल्लसद्वाजनां स्वार्धांशादिना कृतवाजनां महत्पट्टिकां च । तथा मञ्जर्याम्—

"कुर्यादधिष्ठानमथैकविंशै(रंशै)र्विभक्तं तिथिहस्तगेहे ।
अंशत्रिकैः कल्पितपादुकं च सप्तांशक्लृप्तां जगतीं विदध्यात् ॥
षड्भिर्विदध्यात् कुमुदं तथैकभागेन कुर्यादथ पट्टिकां च ।
आलिङ्गरूपां गलपादमंशद्वयेन सम्यग् विदधीत भूयः ॥
सार्धांशक्लृप्तामथ पट्टिकां च क्षुद्राभिधानां च महाख्यपट्टीम् ।
अध्यर्धक्लृप्तां विदधीत सम्यक् कर्तव्यमेवं विधिवत् क्रमेण ॥

इति ॥ १४ ॥

विवरणम्

*सम्प्रत्यधिष्ठानालङ्कारान् दर्शयति—वास्त्वाधारसमुच्छ्रय इति । जगती नामोन्नतचतुरश्राकारा । कुमुदकं कुम्भवद् वृत्तं, तत्पट्टिका कुमुदकाङ्गभूता पटी । शेषेषु अंशेषु एकैकशोऽन्तरिवाजनप्रतिमुखानीत्यन्वयः । वेति । अथवा शेषेष्वंशेषु एवं कुर्यादित्यर्थः । सार्धधरांशतः खण्डान् त्रयो ह्यंशा अर्थादवशिष्टाः । तेष्वेकेन मध्यमांशदलमिश्रितेन खण्डान् विदध्यात् । तावता सार्धांशेनेत्यर्थः । अथवा तस्मिन्नुच्छ्रयणे प्रकृतिसम्भक्त इत्यन्वयः । प्रकृतिरेकविंशतिः छन्दोभिः सप्तभिः । भागाभ्यां गलपादुकानिति । अष्टादशेन गलं एकोनविंशेन अर्धांशतः क्षुद्रां पट्टिकामित्यन्वयः । सार्धधरांशकेन महतीमिति । महापट्टिकामित्यर्थः । स्वांशोल्लसद्वाजनामिति । स्वोचितेनांशेन वाजनामपि तस्या विरचयेदित्यर्थः ॥ १४ ॥

**मासूरेंऽशैर्दिनेशांशिनि सति जगतीकैरवे श्रुत्युपायै-**
**स्तच्छिष्टैः पट्टिकामन्तरिमपि रचयेद् वाजनं च प्रतिं च ।**
**प्रत्युत्पन्नक्रमाख्ये क्रम इति कथितः पट्टिकान्तं तथातः**
**खण्डान् सार्धकतो वाजनमपि सदलैकांशतः पादबन्धे ॥**

विमर्शिनी

पुनरप्यधिष्ठानान्तरयोर्विशेषमाह—मासूर इति । मासूरे दिनेशांशिनि द्वादशधा कृते सति । श्रुत्युपायैश्चतुर्भिश्चतुर्भिरंशैः । जगतीकैरवे जगतीं कुमुदकं

१. 'कां भा' ख. पाठः. २. 'रां' इति मूलकोशपाठः.

* समनन्तरश्लोकव्याख्यापि पाठभेदेनात्रैव सङ्घटिता प्रतिभाति ।

च रचयेत् । तच्छिष्टैश्चतुर्भिरंशैः । क्रमेण पट्टिकामन्तरिं वाजनं प्रतिं च प्रत्यु-त्पन्नक्रमाख्ये प्रतिक्रमाख्ये अधिष्ठाने । क्रमः अवयवक्रमः । इति उक्तविधिना कथितैः । पादबन्धे अधिष्ठाने । पट्टिकां तथा कृत्वा तत ऊर्ध्वं सार्धैकतः खण्डान्, सदलैकांशतः अर्धसहितैकांशतो वाजनं च । तथाच मञ्जर्याम्—

"उत्सेधं विभजेत् त्रिधान्तिममथो भङ्क्त्वा चतुर्धा क्रमा-
देकांशे जगतीं परे कुमुदकं भागे विदध्यात् ततः ।
भागौ द्वावथ पट्टिकान्तरिगतावन्त्यौ प्रतेः स्यान्मुखं
कर्तव्यं विधिवत्प्रतिक्रममिदं वृद्धिप्रदं वेश्मनः ॥

एकेन कुर्यादथ पट्टिकां च सार्धेन खण्डान् विदधीत सम्यक् ।
शिष्टेन कुर्यादथ वाजनं च कर्तव्यमेवं खलु पादबन्धे ॥

इति ॥ १५ ॥

**यावत् *स्वायोच्चमानं गमयतु जगतीं बाह्यतो मानसूत्रात्**
**तत्तुल्यं कैरवं चोच्छ्रयसमचरणोनार्धपादांशकं च ।**
**शिष्टं तत्पट्टिकाब्जादिकमपि ¶गमयेन्मानसूत्रात् समन्तात्**
**तत्तच्छोभानुरूपं गमयतु जगतीसूत्रतः पादुकं च ॥ १६ ॥**

विमर्शिनी

अधिष्ठानावयवानां निर्गममाह—यावदिति । मानसूत्रात् प्रमाणसूत्रा-दुत्तरबाह्यादिति यावत् । यावत् स्वायोच्चमानं यावत् स्वायमानं यावत् स्वोच्च-मानं वा । अत्रायशब्देन योनिरुच्यते । यावत्प्रमाणे स्वस्योपरिगता योनिर्भवति तत्स्वायमानं यावत् पुनर्जगत्या उच्चं त(द्याव?)त् स्वोच्चमानमित्युभयथा जगतीं बाह्यतो गमयतु । तत्तुल्यं जगतीतुल्यम् । कैरवं कुमुदं च पट्टिकाब्जादिकं तच्छिष्टमपि उच्छ्रयसमचरणोनार्धपादांशकम् उच्छ्रयसमं वा पादोनं वा अर्धा-शकं वा पादांशकं वा । तत्तच्छोभानुरूपं तस्य तस्यावयवस्य शोभाया आनु-रूप्यं यथा भवति तथा । मानसूत्रात् समन्ताच्चतुर्दिशं बहिर्गमयेत् । पादुकं च जगतीसूत्रतो यथायोगं गमयतु । तथाहुः—

---

१. 'धानक' क. पाठः.   २. 'त' ख. पाठः.   ३. 'र्धसिंहस' क. पाठः.

---

* 'स्वोत्सेधमानं' इति, ¶ 'गमयेदन्तरावेशयेद् वा' इति च विवरणरीत्या पाठः ।

"यावत्स्वयोनिरूर्ध्वस्था भवेत् तावद्धि निष्क्रमः"

इति । तथाच—

"तत्समं निष्क्रमं चैव अर्धं पादोनमेव च"

इति । मयमते च—

"यावज्जगति सूत्रान्तस्तावत् कुमुदनिर्गमः ।
अम्बुजानां तु सर्वेषामुत्सेधसमनिर्गमः ॥
वेत्राणां चैव सर्वेषां चतुर्भागैकनिर्गमः ।
एवं नीप्रक्रमं शोभावशात् प्रोक्तं स्वयंभुवा ॥
प्रवेशं निर्गमं कुर्यात् सर्वाङ्गानां मसूरके ।"

इति ॥ १६ ॥

विवरणम्

पादुकाद्यवयवान्तरावयवानामुन्मानमुक्तं, तेषां निष्क्रममाह — **यावत्[1] स्वोत्सेधमान**मिति । मानसूत्राद् बाह्यतो जगतीं गमयतु । परिधिमानजनिताया-मविस्तारप्रमाणस्थैर्याय दिक्कोणेषु शङ्कूनिमित्वा चतुर्दिशं सूत्राणि प्रसारणीयानि स्युः । तदिह मानसूत्रं गृह्यते । यावत् स्वोत्सेधमानमिति प्रमाणकथनम् । स्वस्या जगत्या उत्सेधमानं यावद्भवति तावद् गमयत्वित्यर्थः । तत्तुल्यमिति । यावज्जगती-निर्गमनं तावदित्यर्थः । कैरवं कुमुदकम् । शिष्टं गमयेदन्तरावेशयेद् वेति । पादुके विशेषमाह — गमयतु जगतीसूत्रतः पादुकं चेति ॥ १६ ॥

**चित्वेत्यधिष्ठानमिहानुरूपं**
**समं तलीकृत्य शिलाप्रतानैः ।**
**विभज्य गर्भान्तरबाह्यभित्ति-**
**तन्मध्यनाडी रचयेद् यथार्हम् ॥ १७ ॥**

विमर्शिनी

अधिष्ठानविधिमुक्त्वा गर्भभित्त्यादिकमाह—चित्वेति । इह इति उक्तप्र-काराणामन्यतमेनापि विधिना । अनुरूपं योग्यमधिष्ठानम् । चित्वा चयनं कृत्वा । शिलाप्रतानैः शिलाप्रस्तरैः समं यथा भवति तथा तलीकृत्य । गर्भान्तरबाह्य-भित्तितन्मध्यनाडीः गर्भगृहमान्तरभित्तिं बाह्यभित्तिं तन्मध्यगतां नाडीं च यथार्हं विभज्य रचयेत् ॥ १७ ॥

---

१. 'स्वायोच्चमानम्' इति ख. पाठः.

विवरणम्

गर्भे आन्तरबाह्यभित्ती तयोर्भित्त्योर्मध्यनाडी च गर्भान्तरबाह्यभित्ति-तन्मध्यनाड्यः ॥ १७ ॥

**वह्न्यादितिथ्यवधिकौजविभागभक्ते**
**व्यासे गृहस्य नयनाद्युरगान्तिमांशैः ।**
**पञ्चांशकैश्च वसुभागयुतेऽर्धतश्च**
**गर्भालयस्य विततिर्नवधोदितेति ॥ १८ ॥**

विमर्शिनी

तत्र गर्भगृहस्य विभागमाह—**वह्न्यादी**ति । गृहस्य मूलगृहस्य । व्यासे वह्न्यादितिथ्यवधिकौजविभागभक्ते त्र्यादिपञ्चदशान्तिमैस्त्रिपञ्चसप्तादि-विषमविभागैर्भक्तेऽशिते सति । नयनाद्युरगान्तिमांशैः क्रमेण द्व्याद्यष्टान्तिमैरंशैः । तथा वसुभागयुतेऽष्टधा विभक्ते । पञ्चांशकैश्च अर्धतः गृहस्यार्धतश्च । इति गर्भालयस्य विततिर्विस्तृतिर्नवधा उदिता । तथा निबन्धने—

"त्र्याद्या पञ्चदशौजांशे[1] व्यासे द्व्याद्यैर्यथाक्रमम् ।
पञ्चाष्टांशेऽखिलार्धे वा गर्भे तु नवधा स्मृतम् ॥"

इति ॥ १८ ॥

विवरणम्

विभागप्रकारं दर्शयति— **वह्न्यादी**ति । वसुभागयुते पञ्चांशकैरित्य-न्वयः । अर्धतश्चेति नवमः प्रकारः ॥ १८ ॥

* अथ गर्भगृहस्य स्तम्भप्रमाणं प्रथमस्तम्भेभ्यो जनयितुमाह — **बाह्यस्तम्भसमुच्छ्रय** इति । गर्भाधिष्ठानार्थमाह— गर्भेति ॥

**बाह्या गृहव्यासगजांशतः स्याद्**
**भित्तिः परा गर्भगजांशतश्च ।**

---

* बाह्यस्तम्भसमुच्छ्रये विदलिते भूतादिवस्वन्तिमै-
रेकांशाभ्यधिकोच्छ्रयान् विरचयेत् स्तम्भांस्ततो गर्भगान् ।
गर्भस्तम्भसमुच्छ्रये विदलिते भूतादिवस्वन्तिमै-
र्गर्भागारमसूरकं विरचयेदेकांशतः सम्मितम् ॥

इत्यधिकपाठमनुसृत्य प्रवृत्तेयं व्याख्या ।

---

१. 'शैर्व्यासे' ख. पाठः.

नाडी समन्तादुभयान्तराले
संमेल्य वा भित्तियुगं गृहेऽल्पे ॥ १९ ॥

विमर्शिनी

भित्तिलक्षणमाह—बाह्येति। गृहव्यासगजांशतः मूलगृहव्यासस्याष्टांशतो बाह्या भित्तिः स्यात्। परा अन्तर्गता भित्तिः। गर्भगजांशतः गर्भगृहस्याष्टांशेन स्यात्। उभयान्तराले भित्तिद्वयस्यान्तराले। समन्तात् परितो नाडी स्यात्। अल्पे गृहे भित्तियुगं भित्तिद्वयम्। सम्मेल्यैकीकृत्य वा स्यात्। तथा मञ्जर्याम्—

"आरूढभित्तिर्विहिताष्टमांशरेषां[1] बहिः शिष्टमलिन्दमस्य[2]।
अष्टांशमानादथ बाह्यभित्तिर्भित्तिर्घना[3] स्यादथवाल्पगेहे[4] ॥"

इति ॥ १९ ॥

विवरणम्

सम्प्रति बाह्यान्तरभित्त्योर्वितानमाह— बाह्येति। बाह्या भित्तिः स्याद् इति सम्बन्धः। आयतिरायामः। गर्भगजांशतः परा चेति। भित्तिरित्यनुषङ्गः। गर्भगृहवितानमष्टधा विभज्यैकं भागं गर्भभित्तेर्वितानं कल्पयेत्। परिशेषो नाडीगृहवितानस्सम्पद्यते। अल्पगृहे भित्तियुगं सम्मेल्य वा कार्यमिति शेषः। द्वयोर्भित्त्योरेकीकरणेन घनभित्तिर्वा स्याद् इत्यर्थः ॥ १९ ॥

विस्तारेऽल्पगृहे क्वचिद् विशिखभक्तेऽन्तःपदे पीठिकां
पङ्क्त्या गर्भगृहं करोतु परितः पङ्क्त्या च भित्तिं घनाम्।
तस्मिन् नन्दविभाजिते सति विधायैवं ततो वीथिकां
भित्तिं चोभयपङ्क्तितो विरचयेद् द्वारं च कोष्ठेऽग्रतः ॥ २० ॥

विमर्शिनी

पक्षान्तरेण तेषां विभागमाह—विस्तार इति। क्वचिदल्पगृहे विस्तारे विशिखभक्ते आयामतो विस्तारतश्च पञ्चविभक्ते। तत्रान्तःपदे पीठिकां देवस्य पीठं करोतु। पङ्क्त्या तदावरणपङ्क्त्या गर्भगृहं च। परितस्तदावरणे पङ्क्त्या घनां भित्तिं च। तत्रापि प्रकारान्तरमाह—तस्मिन्निति। तस्मिन् गृहे। नन्दविभाजिते आयामतो विस्तारतश्च नवधा कृते सति। एवमुक्तक्रमेण पीठिकां

१. 'ष्ट', २. 'ह', ३. 'श्लि', ४. 'त्तिभित्ति', ख. पाठः-

गर्भगृहमान्तराभित्तिं च विधाय । तत उभयपङ्क्तित आवरणपङ्क्तिद्वयेन । क्रमाद् वीथिकां नाडीं बाह्यभित्तिं च विरचयेत् । बाह्यभित्तावन्तर्भित्तौ च अग्रतः कोष्ठे अग्रकोष्ठप्रमाणेन द्वारं च विरचयेत् । तथाहुः—

"व्यासेऽभिकृतिकोष्ठे स्यात् पीठं कोष्ठेन मध्यतः ।
तद्बहिर्वसुकोष्ठानां पङ्क्त्या गर्भगृहं भवेत् ॥
कोष्ठपङ्क्त्या बहिर्भित्तिस्तत्र द्वारं तु कोष्ठतः ।
एकभित्त्येकतलकं दैवं धामेदमीरितम् ॥
तद्वत् प्रासादविस्तारस्यैकाशीतिपदस्य तु ।
मध्यस्थनवकोष्ठैः स्यात् सपीठं गर्भमन्दिरम् ॥
तद्बाह्ये कोष्ठपङ्क्त्या तु भित्तिं द्वारं च कल्पयेत् ।
तद्बाह्यपङ्क्त्याः परितः कल्पयेन्मध्यनाडिकाम् ॥
प्रासादभित्तिस्तद्बाह्ये पङ्क्त्या द्वारं च कल्पयेत् ।
त्रिहस्ते तु घना भित्तिः पञ्चहस्तेऽपि वा तथा ॥"

इति ॥ २० ॥

विवरणम् ।

अथापरं विभागप्रकारमाह—विस्तार इति । द्वारं च कोष्ठेऽग्रत इत्युभयपक्षसाधारणमेतत् ॥ २० ॥

इदानीं तलीकृते गर्भगृहे प्रतिष्ठास्थानजिज्ञासायामाह — *कृत्वा गर्भगृहमिति । गर्भगृहप्रस्तारे प्रागग्राण्युदगग्राणि चाष्टाष्ट सूत्राण्यास्फाल्य सप्तवर्गपदोपेतं सम्पादयेत् । तत्र मध्यमं पदं ब्राह्मं ततोऽनन्तरा परितः

---

१. 'ह्ये', २. 'काः', ३. 'पङ्क्त्या इति, ख. पाठः.

---

* कृत्वा गर्भगृहं कुलाद्रिकृतिकोष्ठाढ्यं समन्तात् पदे
ब्राह्मे पञ्चदशांशकान् विरचयेत् सौम्याग्रसूत्रैः समम् ।
तद्बाह्यस्थितदेवमानुषपिशाचावारकेषु क्रमाद्
विश्वेभिशनवांशकानपि ततः स्वं स्वं पदं कल्पयेत् ॥

ब्राह्मेऽशेऽन्तरनन्तरे महति चाल्पे चेशलिङ्गे हरौ
तार्तीये द्रुहिणांशमध्यपदतस्तुर्ये गुहेशाच्युते ।
षष्ठे सुम्भजिति प्रतिष्ठितपदं शार्ङ्गीश्वरे चाष्टमे
प्रोक्तं शास्तरि षोडशे गणपतौ विंशे तथैकोत्तरे ॥

पङ्क्तिर्दैविकपदानि ततोऽपि परितो मानुषपदानि ततः परितस्त्वासुरपदानि च विज्ञेयानि । ब्राह्मे पदे पञ्चदशांशकान् विरचयेत् । मध्यगतं पदं दक्षिणोत्तरसूत्रैः त्रयोदशभिः पञ्चदशायतभागान् विदध्यात् । सौम्याग्रसूत्रैरिति सर्वत्र सम्बध्यते । तद्बाह्यस्थितेति । प्राग्द्वारप्रासादे पश्चिमतः पश्चिमद्वारे तु पूर्वत इत्यर्थः । आवारकान्यावरणानि । पङ्क्तय इति यावत् । विश्वे त्रयोदश । उमेशा एकादश ॥

महत्यल्पे चेशलिङ्गे ब्राह्मे अन्तः अनन्तरे चांशे प्रतिष्ठितपदं प्रोक्तमित्येवं सर्वत्र सम्बन्धनीयम् । अन्तरिति । मध्ये पञ्चदशसु भागेषु अष्टमे भागे । अनन्तरे ततो बहिर्द्वितीयभागे इत्यर्थः ।

पृष्ठगमनमुक्तं तत्र उदग्गमनमाह—कृत्वेति । अत्रोदङ्मुखं सूत्रं कृत्वेत्यन्वयः । यत्र भागविशेषे प्रतिष्ठापदं मध्येऽङ्कितं तत्र तस्मिन्नङ्के उदगग्रमपरमृजुसूत्रं सूत्रयेदित्यर्थः । द्वारस्य विस्तारमानं षड्विंशत्यधिकशतांशितं कल्पयित्वा तदेकांशमात्रं तस्मादङ्कादुत्तरतो नमयित्वात्र प्रागग्रं सूत्रमापातयेत् । सर्वत्रेति पूर्वत्रान्वयः । ईशहरीशयोः पुनरिदं वार्चांशत इति । ईशे तावल्लिङ्गविष्कम्भप्रमाणं सप्तधा भङ्क्त्वा सप्तमं भागं पञ्चधा भजेत् । स यावान् भागः तावन्तमुत्तरेण नयेद्वा । हरीश्वरेऽपि बिम्बमध्यपरिधिमानं चतुर्विंशतिधा भङ्क्त्वा एकांशमुत्तरेण गमयेदित्यभिप्रायः । अथाखिले दिश्यैश्यां गमयेदिति प्रागुदग्गमनमुक्तम् । कियदित्याह—सन्धितोऽर्चोद्भवं यवं यवयुगं वेति । ननु किमिदं अर्चोद्भवत्वं नाम यवस्येति चेद् उच्यते । ... .... .... ॥

*एवं प्रतिष्ठास्थानं प्रतिपादितम् । अथ गोमुखस्थानं प्रतिपादयति—सर्वत्रेति । उदीच्यसूत्रेऽम्बुसूत्रं कल्पयित्वा विवरं सूत्रं रचयत्वित्यन्वयः । उदीच्यसूत्रं नाम समदक्षिणोत्तरसूत्रं विवक्षितम् । विवरकल्पनं भित्तिनिर्माणसमये द्रष्टव्यम् ॥

---

कृत्वोदङ्मुखमत्र सूत्रमथ मध्याद् द्वारविस्तारत-
स्तत्कृत्याढ्यशतांशकान् प्रतिगमय्योदीचि चैन्द्राग्रकम् ।
सर्वेष्वीशहरीशयोः पुनरिदं वार्चांशतोऽथाखिले
दिश्यैश्यां गमयेद् यवं यवयुगं वार्चोद्भवं सन्धितः ॥

इत्यधिकपाठमनुसृत्य प्रवृत्तेयं व्याख्या ।

---

* अस्या व्याख्याया आधारभूतं पद्यं न दृश्यते ।

*प्रत्यन्ते वा गलान्ते रचयतु तदुदङ्मध्यसूत्रेऽम्बुमार्गं
सोमेशानान्तरोद्यद्वसुनवदशभागादिकं वा व्यतीत्य ।
मासूरोत्सेधमात्रं चरणविरहितं वार्धवृद्धं प्रणालं
निर्यातं बाह्यतोऽन्तर्विनिहितमधिकुड्यं तदर्धांशमात्रम् ॥ २१ ॥

विमर्शिनी

ततः प्रणाललक्षणमाह—प्रत्यन्त इति । प्रत्यन्तेऽधिष्ठानस्य प्रतेरन्ते गलान्ते वा । तदुदङ्मध्यसूत्रे गर्भगृहस्योदग्गतमध्यसूत्रे । सोमेशानान्तरोद्यद्वसुनवदशभागादिकं सोमेशानयोरन्तरगतदैर्घ्यस्याष्टभागं वा नवभागं वा दशभागं वा, आदिशब्देन शिवादिमूर्तिवशाद् विहितं प्रमाणं वा । व्यतीत्य मध्यसूत्रात् पूर्वतोऽतिक्रमय्य । अम्बुमार्गं जलयात्रामार्गयुक्तं प्रणालं रचयतु । तत्तु प्रणालं मासूरोत्सेधमात्रम् अधिष्ठानोच्चमानम् । तस्माच्चरणविरहितं वा तथार्धवृद्धमर्धाधिकं वा । बाह्यतो निर्यातं निर्गतम् । तदर्धांशमात्रमन्तराधिकुड्यं कुड्ये विनिहितं स्थितं च रचयतु । तथा तन्त्रान्तरे—

"धाम्नः प्रतिग्रीवगसोमसूत्रात् प्राग्दन्तभागं प्रविधाय तेषु ।
ह्येकं शिवे द्वित्रिहरौ त्रिपञ्च शेषेष्वतीत्योदकमार्गसूत्रम् ॥
प्रतेः पुरोऽर्धे वसुनन्ददिग्भिर्विभज्य भागेष्वखिलामराणाम् ।
एकैकभागं समतीत्य कुर्याद् विचक्षणो गोमुखमध्यमत्र ॥
स्यात् कुट्टिमं गोमुखदीर्घमानं पादोनितं वा तदथार्धयुक्तम् ।
व्यालाननं स्यादिह शुण्डुभेदो[1] मणिश्च वल्लीपरिशोभितं च ॥"

काश्यपीये च—

"मान्वङ्गुलं समारभ्य गुणाङ्गुलविवर्धनात् ।
चतुर्विंशाङ्गुलं यावत् तावत् पञ्चविधायतम् ॥
भित्तिबाह्यगतं ह्येतत् तस्यार्धं गर्भगेहके ।
वेशयित्वाथवा भित्तेरभ्यन्तरगतं तु वा ॥"

इति ॥ २१ ॥

विवरणम्

अम्बुसूत्रं गर्भगृहभाविजलस्यन्दनसूत्रम् । प्रत्यन्ते गळान्ते वा इति सर्वशेषो योज्यः । गळान्ते पट्टिकान्ते वेत्यर्थः । शिवशशधरसूत्रान्तराळेऽष्टांशाशा-

1. 'भोक्तो क' ख. पाठः.

* विवरणरीत्यात्र पाठभेदोऽस्तीति प्रतीयते ।

भिर्विभक्तेऽशमतीत्य वा रचयत्वित्यन्वयः। उदग्दिक्सूत्रस्य सोमेशयोरन्तरमष्टधा नवधा दशधा वा भङ्क्त्वा सोमसूत्रादेकांशेन प्रागमयित्वा तत्राम्बुसूत्रं कार्यमित्यर्थः। अथवा एकं अंशमिति गिरिश एवैतत्। त्रिशरपरिमितान् त्रीन् वा पञ्च वांशानित्यर्थः। गोमुखमानं स्वतन्त्रमाह—आरभ्येति। बहिर्निर्यातं गळात् प्रतेर्वा बहिर्निर्गतम्। अतोऽर्धमिति। द्वावंशौ बहिरेकस्त्वन्तरित्यर्थः॥ २१॥

*स्वायामाग्रयंशकादिप्रविततनिजमूलानलांशादिविस्ती-
र्णाग्रं विस्तारतुल्यत्रिपददलघनं त्र्यंशक्लृप्ताम्बुमार्गम्।
व्यात्तव्यालास्यमध्यप्रसृमरनिजमूलोज्ज्वलं गोमुखं त-
न्मुक्तादामादिवल्लीवलयपरिगतं शुण्डुभिर्मण्डितं च॥ २२॥

विमर्शिनी

स्वायामाग्रयंशकादिप्रविततनिजमूलानलांशादिविस्तीर्णाग्रं स्वायामात् स्वदीर्घात् त्र्यंशकादिना विस्तीर्णस्य निजमूलस्य त्र्यंशादिना विस्तीर्णमग्रं यस्य तत्। तथा विस्तारतुल्यत्रिपददलघनं विस्तारतुल्यं[1] त्रिपदमर्धं वा घनं यस्य तत्। तथा त्र्यंशक्लृप्ताम्बुमार्गं विस्तारस्य त्र्यंशेन क्लृप्तमम्बुनो मार्गो यस्य तत्। तथा व्यात्तव्यालास्यमध्यप्रसृमरनिजमूलोज्ज्वलं व्यात्ताद् विशेषेण विवृताद् व्यालाननमध्यात् प्रसरणशीलेन निजमूलेनोज्ज्वलं यत् तत्। तथा मुक्तादामादिवल्लीवलयपरिगतं मुक्तादामादिरूपाभिर्वल्लीभिर्वलयैश्च परिगतं व्याप्तं यत् तत्। तथा शुण्डुभिरलङ्कारविशेषैश्च मण्डितं च गोमुखापराख्यं प्रणालं रचयतु। तथा काश्यपीये—

"वस्वङ्गुलं समारभ्य द्वियङ्गुलविवर्धनात्।
कलाङ्गुलावसानं तु विस्तारं पञ्चधा क्रमात्॥
तन्मूलतारपञ्चांशत्रिभागं चाग्रविस्तृतम्।
तद्विस्तारसमं वाथ त्रिभागं वार्धकं घनम्॥
विस्तारस्य त्रिभागैकच्छिद्रतारं[3] नतं यथा।
नालं[4] मध्ये तु कर्तव्यं निम्नोन्नतविवर्जितम्॥
मूलादग्रं नतं किञ्चिन्मूलं सिंहास्यसन्वितम्।"

इति॥ २२॥

---

१. 'ल्यत्रि' क. ख. पाठः. २. 'त्व', ३. 'गै कं छिद्र', ४. 'लम' क. पाठः.

---

* विवरणरीत्यात्रापि पाठभेदोऽस्तीति प्रतीयते।

विवरणम्

तत्समाङ्ग्रयूनदलघना ततिर्यंशक्लसाम्बुकुल्या चेति विग्रहः ॥ २२ ॥

**स्तम्भाः कोणचतुष्कमध्यविनिवेश्याः स्युः प्रतेरूर्ध्वतः**
**सामान्येन समान्तराः सुरविमानेषूदिता द्वादश ।**
**एते विंशतिरीशदोःप्रभृतिकेष्वेतेषु ते नैकधा**
**चोक्ताः स्वाकृतिभूषणक्रमवशादेष्वर्पयेच्चोत्तरम् ॥ २३ ॥**

विमर्शिनी

**कुड्यस्तम्भस्थापने नियममाह — स्तम्भा इति ।** सुरविमानेषु देवालयेषु । प्रतेरूर्ध्वतः प्रतेरुपरिभागे । सामान्येन त्रिकरादिषु कोणचतुष्कमध्यविनिवेश्याः कोणानां चतुष्के तन्मध्ये द्वौ द्वौ च निवेश्याः स्थाप्याः । समान्तराः समभक्तेनान्तरेण युक्ताः द्वादश स्तम्भा उदिताः स्युः । ईशदोःप्रभृतिकेषु एकादशकरादिषु । एतेषु सुरविमानेषु । एते स्तम्भा विंशतिरुदिताः । ते स्तम्भाः । स्वाकृतिभूषणक्रमवशात् स्वाकृतिवशात् स्वभूषणवशाच्च । नैकधा अनेकधा चोक्ताः । एषु स्तम्भेषूत्तरमर्पयेच्च । तथा निबन्धने—

"द्वादशैव चतुष्कोणमध्यस्थाः कुड्यपादकाः ।
एकादशकरे स्तम्भा विंशतिर्मण्डनान्विताः ॥
समाः स्तम्भान्तराः सर्वे प्रासादे सार्वदेशिके[1]।
विषमस्तम्भभागं तु वास्तु वस्तुविनाशनम् ॥"

इति ॥ २३ ॥

विवरणम्

*इदानीं स्तम्भानां स्थानानि सङ्ख्याश्च दर्शयति— **स्तम्भा इति ।** चतुर्षु कोणेष्वेकैकमन्तरा द्वौ द्वाविति द्वादश स्तम्भाः स्युः । यद्वा कोणचतुष्कमन्तरा त्रयस्त्रयः स्तम्भाः स्युः । तत्र पक्षे मध्यमस्तम्भं द्विधा कल्पयित्वा घनद्वारमभितो द्वौ द्वावर्धस्तम्भौ भवतः । ईशदोःप्रभृतिकेष्वेतेषु एते विंशतिरित्यन्वयः । एकादशकरप्रभृतिप्रासादेषु स्वाकृतिभूषणक्रमवशात् ते नैकधेत्यन्वयः ॥ २३ ॥

---

१. 'प्रसारे सा' क. पाठः.

---

* २३, २४, २५ श्लोकव्याख्याः विवरणरीत्या ३४ श्लोकानन्तरं पठिताः ।

कार्याः स्युश्चरणा युगाष्टनृपकोणाः सर्वतो वर्तुला
विस्तारत्रिगुणोपरित्रिगुणविस्तारोन्मिताष्टाश्रकाः ।
मूलोद्भावितकर्णसूत्रचतुरश्रोर्ध्वांशवृत्ताः पुनः
शुण्डोद्भेदविचित्रवृत्तरुचिरा वारब्धगेहोचिताः ॥ २४ ॥

विमर्शिनी

स्तम्भानामाकृतिभेदमाह—कार्याः स्युरिति । चरणाः स्तम्भाः । सर्वतो युगाष्टनृपकोणा वा सर्वतश्चतुष्कोणाः तथाष्टकोणाः षोडशकोणाश्च । सर्वतो वर्तुला वा वृत्ताकाराः । विस्तारत्रिगुणोपरित्रिगुणविस्तारोन्मिताष्टाश्रका वा विस्तारेण त्रिगुणितोपरिभागे त्रिगुणितेन विस्तारमानेनोन्मितेनाष्टाश्रेण युक्ताः । मूलोद्भावितकर्णसूत्रचतुरश्रोर्ध्वांशवृत्ता वा मूलगतचतुरश्रस्य कर्णसूत्रमानं चतुरश्रं कृत्वा तदूर्ध्वतो वृत्तेनाकारेण युक्ताः । पुनः शुण्डोद्भेदविचित्रवृत्तरुचिरा वा शुण्डोद्भेदैर्भिन्नवेत्राकारैरलङ्कारविशेषैर्विचित्रेण वृत्तेन सुन्दराः । आरब्धगेहोचिताः आरब्धस्य गृहस्य योग्याः स्युः । तथा निबन्धने—

पञ्चाश्रिजात्स्रयो वृत्तास्तुर्यश्रः पोतिकान्वितः ।
स्तम्भः साधारणो धाम्नां कुम्भमण्ड्यादिमण्डितः ॥
विस्तारत्रिगुणादूर्ध्वमष्टाश्रस्तावता कृतः ।
स्तम्भः सपोतिकाकुम्भस्तथा मध्याश्रकः स्मृतः ॥
आमूलतः कृतोऽष्टाश्रः सर्वाष्टाश्रः सपोतिकः ।
षोडशाश्रिकृतश्चैव वीरकाण्डसमुज्ज्वलैः ॥
कुम्भतन्मण्डनैर्युक्तः षोडशाश्रः सपोतिकः ।
मूले कर्णस्थमानेन चतुरश्रोऽथ वर्तुलः ॥
कुम्भमण्डनसंयुक्तो मूलाश्रश्च सपोतिकः ।
सर्वत्र वर्तुलो युक्तः कलशेन च मण्डनैः ॥
पोतिकासहितो मूर्ध्नि वृत्तपादस्तु कीर्तितः ॥
कुम्भमण्डनसंयुक्तो वीरकाण्डस्थपोतिकः ॥
शुण्डभेदसमो वृत्तः शुण्डपाद इति स्मृतः ।"

इति ॥ २४ ॥

१. 'त्ताका', २. 'श्रकृतं चैव', ३. 'ला:' क. पाठः. ४. 'के' ख. पाठः.
५. 'दे' क. पाठः.

विवरणम्

तदीयं दिङ्मात्रं दर्शयति—कार्याः स्युरिति । शुण्डोद्भेदविचित्रवृत्तरुचिरा वेति ॥ २४ ॥

ओमां कुर्वीत दण्डद्वयततचरणोच्चां घटं दण्डयुग्म-
व्यासं साङ्घ्रयादिदण्डोच्छ्रयमुदधिततां दण्ड तेऽङ्घ्रयूनतीव्राम् ।
मण्डिं दण्डप्रथाङ्घ्रयंशकरहितघनं वीरकाण्डं त्रिसार्ध-
भूदन्वद्दण्डदीर्घां चरणततदर्धोच्छ्रयां पोतिकां च ॥ २५ ॥

विमर्शिनी

स्तम्भावयवभूतानामोमादीनां लक्षणमाह—ओमामिति । दण्डद्वयततचरणोच्चां दण्डद्वयविस्तारां दण्डपादेनोच्चामोमां स्तम्भपीठत्वेन कुर्वीत । घटं घटाकारेण कल्पनीयमवयवम् । दण्डयुग्मव्यासं दण्डद्वयविस्तारं साङ्घ्र्यादिदण्डोच्छ्रयं सपादादिदण्डोत्सेधं च । मण्डिं घटस्योपरि स्थाप्यां फलकाम् । दण्डतः उदधिततां चतुर्दण्डसमविस्ताराम् । अङ्घ्रयूनतीव्राम् । अङ्घ्र्यूनेन दण्डेन घनां च । वीरकाण्डं मण्ड्या उपरि कल्पनीयमवयवम् । दण्डप्रथाङ्घ्रयंशकरहितघनं दण्डविस्तारं तत्पादांशहीनतीव्रं च । पोतिकां वीरकाण्डोपरि उत्तरस्याधः कल्पनीयाम् । त्रिसार्धभूदन्वद्दण्डदीर्घां त्रिदण्डेन वा सार्धपञ्चदण्डेन वा चतुर्दण्डेन वा दीर्घाम् । चरणततदर्धोच्छ्रयां स्तम्भमूलविस्तारेण विस्तीर्णां तदर्धोत्सेधयुक्तां च । तथाहुः—

"स्तम्भमूलघनाः शैला ओमा द्विगुणविस्तराः ।
तुर्यश्रा मध्यतोगर्ता दण्डपादेन चोद्गताः ॥
दण्डपादेन तीव्रा च तच्चतुर्गुणविस्तरा ।
मण्डिः पद्मविचित्रा च माल्यनागफणाकृतिः ॥
पादोनतीव्रं तुर्यश्रं वीरकाण्डं च दण्डतः ।
पोतिकास्त्वायता दण्डैः सार्धपञ्चचतुस्त्रिभिः ॥
अर्धत्रिभागपादस्था तालिः स्याद् दण्डविस्तरा ।"

तथाच काश्यपीये—

---

१. 'कु' ख. पाठः  २. 'त्मा' क. ख. घ. पाठः

विस्तारसदृशोत्सेधाः पञ्चदण्डायतान्विताः ॥
उत्तमाः पोतिकाः ख्यातास्तारद्वित्र्यंशसुन्नताः ।
चतुर्दण्डायतोपेता मध्यमा सा प्रकीर्तिता ॥
विस्तारस्यार्धतुङ्गा तु गुणदण्डायतान्विता ।
कन्यसा पोतिकाख्याता................
मूलपादसमव्यासा श्रेष्ठा मध्ये तु मध्यमा ।
अग्रपादविशालस्य समा कन्यसपोतिका ॥"

इति ॥ २५ ॥

विवरणम्

आमा स्तम्भस्य पीठं स्तम्भविस्ताराद्द्विगुणविस्तारं स्तम्भविस्तारार्धघनम् । घटस्तम्भोर्ध्वभागगतः कुम्भः । साङ्घ्र्यादिदण्डोच्छ्रयमिति । पादसहितो दण्डः स्वार्धसहितो दण्डः एवमादि यथाशोभमवगन्तव्यम् । मण्डिः स्तम्भाग्रफलका । उद्धिततामिति । फलकोपरि पोतिकाधो वीरकाण्डं नामावयवः । घनमुन्नतिरूपम् । दण्डपञ्चकचतुष्कत्रिकायामा पोतिका उत्तरसमविताना दलाद्युच्छ्रिता उत्तरदलादिमानेन घना ॥ २५ ॥

*भित्तिव्यासमितैर्विभज्य बहिरन्तः पञ्चसप्तांशकान्
कृत्वा कल्पितसूत्रसंस्थनिजमध्यद्वारयोगान्यथ ।
मध्यान्मध्यमतीत्य दिक्षु रचयेद् द्वाराणि तूर्ध्वं प्रते-
रग्र्यद्वारमृते घनानि कृतशोभान्यूर्ध्वतस्तोरणैः ॥ २६ ॥

विमर्शिनी

द्वारकल्पनमाह—भित्तीति । भित्तिव्यासं भित्तेर्विस्तारम् । इनैः द्वादशभिर्विभज्य बहिः पञ्चांशकान् अन्तः सप्तांशकांश्च कृत्वा । कल्पितसूत्रसंस्थनिजमध्यद्वारयोगानि तत्र कल्पिते सूत्रे संस्थितानि निजमध्यानि निजाया द्वारशाखाया मध्यगतसूत्राणि द्वारशाखाभिधानि द्वारयोगानि । तथाविधानि द्वाराणि चतसृषु दिक्षु तु प्रतेरूर्ध्वम् । मध्यान्मध्यमतीत्य प्रासादमध्यसूत्राद् द्वारमध्यसूत्रं किञ्चिदतीत्य नीत्वा रचयेत् । अग्र्यद्वारमृते अग्र्यद्वारं वर्जयित्वा । घनानि बन्धद्वाराणि । ऊर्ध्वतस्तोरणैः कृतशोभानि च रचयेत् ।

---

* 'बास्त्वाधारमितैः' इति विवरणरीत्या पाठः ।

"योगं तु स्थापयेद् विप्र ! शान्तिहोमपुरःसरम् ।
भित्तिव्यासे तु भान्वंशे बाह्यात् पञ्चावसानकम् ॥
अभ्यन्तरात् तु सप्तांशसमं योगस्य मध्यमम् ।"

इति । तन्त्रान्तरे च—

"मुहूर्ते स्थापयेद् विद्वान् मध्यान्मध्यं विमुच्य च'

इति । तथा च गुरुदेवः—

"सर्वत्र प्रत्युपर्येव द्वारं कुर्याद् विचक्षणः"

इति[1] । मध्यान्मध्यमतीत्येत्यस्यायमाशयः—वक्ष्यमाणमग्र्यद्वारविस्तारमेकविंशतिभागं कृत्वा एकांशं वामतस्त्यक्त्वा तत्र द्वारमध्यं यथा भवति तथा रचयेत् । अपराण्यपि त्रीणि द्वाराणि प्रदक्षिणक्रमेण षट्त्रिंशद्भागं चतुष्षष्टिभागमेकाशीतिभागं च कृत्वैकैकभागमतीत्य द्वारमध्यानि रचयेत् । अथवा घनद्वारि त्रीण्यपि षट्त्रिंशं भागं वा चतुष्षष्टिभागं वा एकाशीतिभागं वातीत्य द्वारमध्यानि रचयेदिति । तथाहुः—

"स्वव्यासमूर्छाधृतियुग्दद्द्वन्द्वेन्दुगजांशकैः ।
द्वारं प्रदक्षिणश्चाल्यां स्वेष्वेकैनैव वा घनाः (?) ॥ २६ ॥

विवरणम्

*अधिष्ठानजन्यमपि मानमाह — वास्त्विति । वास्त्वाधारोऽधिष्ठानं साधारणमलङ्कारादिकं द्रष्टव्यम् । अथ द्वारस्थानानि कथयति — अतीत्य मध्यमिति ॥ २६ ॥

**गर्भागारप्रताने शिववसुदिनकृच्छैलतिथ्यंशितेऽशै-**
**र्बिम्बद्वारोच्छ्रयः स्याद् गिरिशरतुरगाम्नायमातङ्गसङ्ख्यैः ।**
**उत्सेधेऽत्रैकविंशत्यतिधृतितिथिविश्वाङ्कभक्ते प्रक्लृप्ते**
**व्यासो दिङ्नन्दशैलोर्म्युदधिपरिमितांशैः क्रमात् कल्पनीयः ॥ २७ ॥**

विमर्शिनी

कीदृशौ द्वारोत्सेधविस्तारावित्याकाङ्क्षायामाह — गर्भागारेति । गर्भागारप्रताने गर्भगृहविस्तारे । शिववसुदिनकृच्छैलतिथ्यंशिते एकादशधाष्टधा द्वादशधा सप्तधा पञ्चदशधा भक्ते । क्रमेण गिरिशरतुरगाम्नायमातङ्गसङ्ख्यैः

---

१. 'ति । कीदृशा' क. ख. पाठः.

* इतः प्रभृति ३४ पद्यपर्यन्तव्याख्या विवरणे ३२ पद्यानन्तरं पठिता ।

सप्तभिः पञ्चभिः सप्तभिश्चतुर्भिरष्टभिश्चांशैः । विम्बद्वारोच्छ्रूयः विम्बे स्थाप्ये द्वारोच्छ्रूयः स्यात् । अत्रैवं प्रक्लृप्ते उत्सेधे एव क्रमेण । एकविंशत्यतिधृतितिथिविश्वाङ्कभक्ते एकविंशतिधैकोनविंशतिधा पञ्चदशधा त्रयोदशधा नवधा वा भक्ते । क्रमाद् दिङ्नन्दशैलोर्म्युदधिपरिमितांशैः दशभिर्नवभिः सप्तभिः षड्भिश्चतुर्भिश्चांशैर्व्यासः कल्पनीयः स्यात् । तथाह भास्करः—

"प्रतिमाद्वारमानं तु गर्भागारेण चोच्यते ।
एकादशात् सप्तोत्सेधमेकविंशाद् दशविस्तरम् ॥
अष्टांशे पञ्चभागोच्चं नवदशे नवविस्तरम् ।
द्वादशांशे सप्तोत्सेधं त्रिपञ्चे सप्तविस्तरम् ॥
सप्तभागे चतुष्कोच्चं त्रयोदशे षड्विस्तरम् ।
तिथिभक्तेऽष्टसङ्ख्योच्चं नवभक्ते चतुर्विस्तरम् ॥

इति ॥ २७ ॥

विवरणम्

प्रधानद्वारप्रमाणं गर्भगेहाज्जनयितुमाह—गर्भागारप्रतान इति ॥ २७ ॥

व्यासे गर्भनिकेतनस्य दहनेषुद्वारनेत्रांशिते
लिङ्गद्वारसमुच्छ्रूयं वितनुयाद् द्वित्रीषुचन्द्रांशकैः ।
तस्मिन् द्वारसमुच्छ्रूयेऽथ नयनात्यष्टीशशैलांशिते
तद्विस्तारमिलामहोरगशराग्न्यंशैः क्रमात् कल्पयेत् ॥ २८ ॥

विमर्शिनी

लिङ्गे स्थाप्ये द्वारोत्सेधविस्तारयोर्विशेषमाह—व्यास इति । गर्भनिकेतनस्य गर्भगृहस्य व्यासे । दहनेषुद्वारनेत्रांशिते त्रिभिः पञ्चभिर्नवभिर्द्वाभ्यां वा भक्ते । क्रमाद् द्वित्रीषुचन्द्रांशकैः द्वित्रिपञ्चैकांशकैर्लिङ्गद्वारसमुच्छ्रूयं वितनुयात् । तस्मिन्नेव द्वारसमुच्छ्रूये । क्रमेण नयनात्यष्टीशशैलांशिते द्विधा सप्तदशधा एकादशधा सप्तधा च भक्ते । क्रमाद् इलामहोरगशराग्न्यंशैः एकेनाष्टभिः पञ्चभिस्त्रिभिर्भागैस्तद्विस्तारं कल्पयेत् । तथाच भास्करः—

"अथ तद् द्वारमानं तु गर्भागारेण चोच्यते ।
त्रिभागद्वयमुत्सेधमुत्सेधार्धं तु विस्तरम् ॥

पञ्चभागत्रिभागोच्चं सप्तदशाष्टविस्तरम् ।
नवांशात् पञ्चोत्सेधं दशैकांशात् पञ्चविस्तरम् ॥
विस्तारार्धे कनिष्ठोच्चं सप्तभागं त्रिविस्तरम् ।
गर्भागारप्रमाणेन लिङ्गद्वारस्य मानकम् ॥

इति ॥ २८ ॥

कुर्यात् सर्वसुरेषु शैलवसुनन्दांशांशिते ऽङ्घ्रयुच्छ्रये
द्वारोत्सेधमिहैकभागरहितं विस्तीर्णमात्मार्धतः ।
योगौ स्तम्भसमाधिपाददलविस्तीर्णौ स्फुरद्वाजनौ
विस्तारार्धघनौ भुवङ्गमपतङ्गाढ्यौ च मूलाग्रयोः ॥ २९ ॥

विमर्शिनी

स्तम्भवशादपि द्वारभेदमाह — कुर्यात् सर्वसुरेष्विति । सर्वदेवेषु अङ्घ्रयुच्छ्रये स्तम्भोच्चे । शैलवसुनन्दाशांशिते सप्तधाष्टधा नवधा दशधा वा विभक्ते । इह एकभागरहितम् एकांशहीनं द्वारोत्सेधं कुर्यात् । आत्मार्धतः आयामार्धतो विस्तीर्णं च । द्वारशाखालक्षणमाह — योगाविति । योगौ द्वारशाखौ । स्तम्भसमाधिपाददलविस्तीर्णौ । स्तम्भविस्तारसमेन वा सपादस्तम्भविस्तारेण वा सार्धस्तम्भविस्तारेण वा विस्तीर्णौ । स्फुरद्वाजनौ वाजनेन स्फुरन्तौ । विस्तारार्धघनौ स्वविस्तारार्धतीव्रौ । मूलाग्रयोर्मूले अग्रे च । क्रमाद् भुवङ्गमपतङ्गाढ्यौ भुवङ्गमेन पतङ्गेन च युक्तौ च कुर्यात् । तथाह गुरुदेवः —

"स्तम्भायामे तु दिङ्नन्दवसुसप्तांशके क्रमात् ।
नन्दवस्वृषिषड्भागैर्द्वारोत्सेधं प्रकल्पयेत् ॥
तदर्धविस्तृतं च स्याद् द्वारं देवालयेषु वै ।
सपादपादविस्तारस्तदर्धबहलो दृढः ॥
कवाटयोगस्तत्पार्श्वे वाजनं पूर्ववद् भवेत् ।"

इति । तथाच काश्यपः —

"पादविष्कम्भमानं वा सपादं सार्धमेव वा ।
द्वारयोगस्य विस्तारं तस्यार्धं घनमुच्यते ॥"

इति ॥ २९ ॥

---

१. 'स्तारमा' इति मूलकोशपाठः.

विवरणम्

*धरा भूमिः। द्वाराङ्गभूतानां योगादीनां प्रमाणमाह—योगा इति। योगा द्वारपार्श्वयोरध उपरि च स्थाप्याः। दण्डो हि पूर्वमुक्तः। तत्र भुवङ्गमः कार्यः। अयमधस्ताद्योगयोर्मध्ये शाययितव्यः। कराभीति। निजविस्तारं दण्डमितं करादिभक्तं कृत्वा शक्त्यादिभागं गृहीत्वा तेनोच्छ्रयं कल्पयेत्। अथ फलकेति। उत्तरादधोऽयमलङ्कारः। अष्टमङ्गलानि मण्डपसंस्कारे वर्तन्ते ॥

बहिर्द्वारप्रमाणमाह — स्तम्भोच इति। अत्रेति स्तम्भोच्चग्रहणं तच्छेषितांघ्रयुच्छ्रये दिग्दलिते षड्भिरिनभक्ते सप्तभिश्चांशकैः पतङ्गं तच्छिष्टेन भुवङ्गमं च रचयेदित्यन्वयः। स्तम्भोच्चाज्जनितं यद्द्वारोच्चं तन्मानं स्तम्भोच्चमानं जन्मात्। तत्र यावदवशिष्यते सोऽयं तच्छेषितांघ्रयुच्छ्रय उक्तः। तद्दशधा भङ्क्त्वा षड्भिः पतङ्गमं शिष्टैश्चतुर्भिः भुवङ्गमं चेत्यर्थः ॥ २९ ॥

द्वारोत्सेधनियुक्तशेषचरणोत्सेधे शरांशीकृते
त्र्यंशेनाधरपट्टिकां मितघनां सार्धेन वाङ्कांशिते।
हीनां वाजनकेन योगविततां शिष्टांशतः पट्टिका-
मूर्ध्वस्थामथ मङ्गलाढ्यफलकां युक्त्योर्ध्वपट्टयूर्ध्वतः ॥ ३० ॥

विमर्शिनी

द्वाराच्छिष्टांशविनियोगमाह — द्वारोत्सेधेति। द्वारोत्सेधनियुक्तशेषचरणोत्सेधे स्तम्भोत्सेधाद् द्वारोत्सेधं त्यक्त्वा शिष्टे। शरांशीकृते पञ्चधा कृते। त्र्यंशेन मितघनां कृततीव्राम्। अधरपट्टिकां भुवङ्गमाख्याम्। वाजनकेन हीनां योगविततां द्वारशाखासमविस्तृतां च कुर्यात्। अङ्कांशिते नवधा कृते। सार्धेनार्धसहितेन त्र्यंशेन वा कुर्यात्। शिष्टांशत ऊर्ध्वस्थां पट्टिकां पतङ्गाख्यां च। ऊर्ध्वपट्टयूर्ध्वतो युक्त्या मङ्गलाढ्यफलकां मङ्गलया लक्ष्म्या संयुक्तां फलकां च। तथाच गुरुदेवः—

"द्वारोच्चशेषे पञ्चांशो भवेदंशद्वयं त्वधः।
ऊर्ध्वे त्रयोंऽशास्तत्र स्युः फलका चात्र चित्रिता ॥"

इति ॥ ३० ॥

दण्डाऽध्यङ्गमतङ्गजांघ्रबहलं तावद्युतद्वारदल-
व्यासं मूलशिखायुतं दृढतरं कार्यं कवाटद्वयम्।

* अनयोर्व्याख्ययोर्मूलपाठोऽन्य इति प्रतिभाति।

कार्या वामकवाटरोपितपराग्भागार्धतीव्रा तत-
स्तद्द्विघ्नप्रतता च सूत्रफलका सद्यत्स्तनाद्युज्ज्वला ॥ ३१ ॥

विमर्शिनी

कवाटलक्षणमाह — दण्डेति । दण्डाष्टध्ययमतन्नजांशबहलं दण्डस्य चतुर्भागेन वा षड्भागेन वाष्टभागेन वा घनेन युक्तम् । तावद्युतद्वार्दलव्यासं यावान् बहलस्तावद्युतेन द्वारार्धेन विस्तारयुक्तम् । मूलशिखायुतं मूलगतनालेनाग्रगतया शिखया च युक्तम् । दृढतरं सारदारुनिर्मितं च कवाटद्वयं कार्यं स्यात् । वामकवाटरोपितपराग्भागा वामकवाटाश्लिष्टपृष्ठभागा । ततः कवाटात् । अर्धतीव्रा कवाटार्धबहला । तद्द्विघ्नप्रतता कवाटतीव्रद्विगुणितविस्तारा च । सद्यत्स्तनाद्युज्ज्वला सुष्ठुद्यद्भिः स्तनाकृतिभिरन्यैश्चालङ्कारविशेषैः उज्ज्वला सूत्रफलका च कार्या स्यात् । तथाच गुरुदेवः —

"दण्डाच्चतुष्षडष्टांशं कवाटफलकाघनम् ।
श्रेष्ठमध्याधमं ज्ञेयं क्रमात् सर्वेषु धामसु ॥
स्तम्भाष्टांशघनौ रम्यौ कवाटौ विस्तरेऽधिकौ ।
तदर्धबहलो दण्डो मध्ये द्विगुणविस्तरः ॥" इति ॥ ३१ ॥

विवरणम्

बहलं घनम् । तावद्युतद्वार्दलव्यासमिति । द्वारविस्तारमानस्यार्धं कवाटघनमानं चैकीकृतं कवाटविस्तारं कल्पयेदित्यर्थः । मूलशिखायुतम् । मूलं च शिखा च मूलशिखे । *तत्सन्धिगुप्तिक्षमामिति तद्विन्यासमानमपि सूचितम्॥३१॥

ऊर्ध्वाधरभ्रमरकार्गलसन्धिपाल-
प्रक्षेपणीयवलयान्यपि पत्रकाणि ।
तिर्यङ्च्युदश्चि पुलकार्तवकुड्मलानि
सश्रीमुखेन्दुशकलानि कवाटयोः स्युः ॥ ३२ ॥

विमर्शिनी

कवाटभूषणान्याह — ऊर्ध्वाधरेति । कवाटयोर्द्वयोरपि ऊर्ध्वाधरभ्रमरकार्गलसन्धिपालप्रक्षेपणीयवलयानि ऊर्ध्वे अधरे च भ्रमरकौ भ्रमणसाधकौ यन्त्रविशेषौ[1] अर्गलं कवाटस्यान्तर्भागस्थः कवाटस्य विवृतिनिरोधको यन्त्रविशेषः सन्धिपालः कवाटयोः सन्धिं पालयतीति[2] सूत्रफलका प्रक्षेपणीयः कवाटस्य

१. 'षकौ अ' ख. पाठः. २. 'ति स्तूत्र' ख, घ. पाठः.

* विवरणरीत्या पाठभेदाऽस्तीति प्रतीयते ।

"लिङ्गत्रिगुणविस्तीर्णां विष्णुभागसमोच्छ्रयाम् ।
लिङ्गायाममविस्तीर्णां कल्पयेद् वाथ पीठिकाम् ॥

इति ॥ १३२ ॥

अष्टांशे शिवपीठके क्षितिशराब्धीन्द्वंशकैः पादुकं
प्रादध्याज्जगतीं तथा कुमुदकं तत्पट्टिकां च क्रमात् ।
अंशाभ्यां गलमंशकेन गलपट्टिं जागतेऽध्यंशिनि
ग्रीवान्तेऽर्धयुतद्वयेन वलभिं शिष्टेन पट्टिं सदा ॥ १३३ ॥

विमर्शिनी

तत्र शिवलिङ्गपीठस्य क्लृप्तिमाह — अष्टांश इति । शिवपीठके अष्टांशे षोडशांशीकृते सति क्षितिशराब्धीन्द्वंशकैः एकपञ्चचतुरेकांशकैः क्रमात् पादुकं जगतीं तथा कुमुदकं तत्पट्टिकां च प्रादध्यात् । अंशाभ्यामंशद्वयेन गलं च एकेनांशेन गलपट्टिं च । जागते अध्यंशिनि चतुर्भिरंशैरेव जगतीमादध्या(यामि ? त्) । ग्रीवान्ते अर्धयुतद्वयेन वलभिं सदापि पक्षद्वयेऽपि शिष्टेन पट्टिं च । तथाचाहुः —

"उत्सेधं विभजेत् तस्याः समं षोडशधा क्रमात् ।
एकेन पादुकं कुर्यात् पञ्चभिर्जगतीमपि ॥
कुमुदं कुमुदपट्टिं च वेदैरेकांशकेन तु ।
द्वाभ्यामेकेन कर्तव्यं गलं च गलपट्टिकाम् ॥
अंशद्वयेन सुदृढं कल्पयेन्मुखपट्टिकाम् ।"

तथाच मञ्जर्याम्—

"उत्सेधं वसुयुग्मकेन विभजेत् पीठस्य चैकांशतः
कुर्यात् पादुकमंशकैश्च जगतीं वेदैश्चतुर्भिः क्रमात् ।
एकांशेन विलोचनेन कुमुदं चालिङ्गपट्टिं गलं
सार्धांशद्वितयेन रम्यवलभिं शिष्टेन पट्टिं खनेत् ॥"

इति ॥ १३३ ॥

पीठे मुक्त्वा प्रतिष्ठावटमुपरि त्रिभागं विधायावशिष्टं
द्वाभ्यामाधाय पाथोमलयमुदकधात्रीं विधायांशकेन ।
शिष्टेनाधाय तद्वेष्टनमथ तदुदक् त्र्यंशविस्तारदैर्घ्यं
कुर्यादष्टाश्रमार्गांकक्कृतजलकुल्यं कुशाग्रं प्रनालम् ॥

१. 'येनापि' ख. पाठः.

विमर्शिनी

पीठस्योपरिगतविभागमाह—**पीठ** इति। पीठे प्रतिष्ठावटं मुक्त्वा अवशिष्टमुदधिविभागं चतुर्धा च विधाय द्वाभ्यामन्तर्गताभ्यामंशाभ्यां पाथोवलयं जलमार्गाकारं वलयमाधाय एकेनांशेनोदकधात्रीं शिष्टेन तद्वेष्टनं चाधायाथ तदुदग्भागे त्र्यंशविस्तारदैर्घ्यं पीठस्य त्रिभागेन विस्तारदैर्घ्ययुक्तमाशांशकृतजलकुल्यं दशांशेन कृतजलकुल्यमष्टाश्रं क्रमात् कुशाग्रं प्रनालं कुर्यात्। तथाचाहुः—

"लिङ्गावटं त्रियंशेन शिष्टं कृत्वाष्टधा क्रमात्।
वलयं वारिमार्गस्य वेदैः खातं तदर्धतः॥
खातस्य पार्श्वयोः कुर्याद् द्वाभ्यां द्वाभ्यां तु मेखलाम्।
प्रनालमुत्तरे कुर्याद् विस्तारायामतः समम्॥
त्रिभागेन तु पीठस्य कृत्वाष्टाश्रं समन्ततः।
तद्दशांशेन खातं स्यात् किञ्चिदग्रे तनूकृतम्॥
तरङ्गमूलपार्श्वे तु जगत्यां चोर्ध्वतोऽर्पयेत्।
षोडशांशेन गमनं पीठमध्यादथैशगम्॥"

इति॥ १३४॥

**बिम्बे नपुंसकशिलां निजनालमूल-**
**विस्तारतोऽधिचरणांशदलांशतानाम्।**
**द्विघ्नप्रथां च विदधीत निजप्रथार्ध-**
**पादोनतत्समसमुच्छ्रयसम्प्रपन्नाम्॥ १३५॥**

विमर्शिनी

बिम्बविषये नपुंसकशिलालक्षणमाह—**बिम्ब** इति। बिम्बे बिम्बविषये निजनालमूलविस्तारतः निजबिम्बनालस्य मूलभागविस्ताराद् अधिचरणांशदलांशतानां पादाधिक्येन वार्धाधिक्येन वा विस्तारेण युक्तां, द्विघ्नप्रथां नालमूलविस्ताराद् द्विगुणितविस्तारयुक्तां वा, तथा निजप्रथार्धपादोनतत्समसमुच्छ्रयसंप्रपन्नां निजविस्तारार्धेन वा पादोनेन वा तत्समेन वा समुच्छ्रयेण युक्तां नपुंसकशिलां विदधीत। तथाचाहुः—

"पादशैलप्रमाणतः।

---

१. 'त्र्यम', २. 'वर्धतो' क. पाठः.

पादाधिकमथाध्यर्धं द्विगुणं वा सविस्तरम् ॥

विस्तारार्धोच्छ्रयं कुर्यात् पादोनं वा विधीयते ।

विस्तारतः समं वापि त्रिविधं च तदुच्छ्रयम् ॥"

इति ॥ १३५ ॥

**भङ्क्त्वा त्रिधाङ्घ्रिदृषदुच्छ्रयमेकमंशं**
**पीठे द्विभागमुपवेशयतूर्वरायाम् ।**
**द्व्येकार्धिताङ्गुलिमितं खनतूत्तमादि**
**ब्रह्माश्ममूर्ध्न्युचितनालनिवेशनाय ॥ १३६ ॥**

विमर्शिनी

पुनः अङ्घ्रिदृषदुच्छ्रयं नपुंसकशिलोत्सेधं त्रिधा भङ्क्त्वा एकमंशं पीठे द्विभागमुर्वरायां भूमौ च उपवेशयतु । ब्रह्माश्ममूर्ध्नि नपुंसकशिलोपरिभागे उत्तमादिक्रमेण द्व्येकार्धिताङ्गुलिमितं द्वाभ्यामेकेन अर्धाङ्गुलेन वा मितम् उचितनालनिवेशनाय तत्र योग्यस्य नालस्य निवेशनाय खनतु च ॥ १३६ ॥

**लिङ्गायामसमो नपुंसकशिलाव्यासो वरिष्ठोऽवरः**
**पूजांशद्विगुणस्तदन्तरमितावष्टांशितायां क्रमात् ।**
**अंशद्ध्र्याधममध्यमादिकविधिर्व्यासार्धतोऽङ्घ्र्यन्तिम-**
**श्चोत्सेधश्च तथात्र लिङ्गविनिवेशार्हश्च कार्योऽवटः ॥ १३७ ॥**

विमर्शिनी

अथ लिङ्गविषये नपुंसकशिलालक्षणमाह—**लिङ्गायामेति** । लिङ्गायामसमः लिङ्गस्य दैर्घ्येण समो नपुंसकशिलाव्यासः नपुंसकशिलाया विस्तारो वरिष्ठ उत्तमः, पूजांशद्विगुणः अवरः अधमः, तदन्तरमितौ तयोरन्तरगताय मितौ अष्टांशितायां क्रमादंशद्ध्र्या अंशांशवर्धनेन अधममध्यमादिकविधिः अधमाधमादुत्तमोत्तमपर्यन्तस्य विधिः । तथाच (स ? स्व) व्यासार्धतो व्यासार्धमारभ्य अङ्घ्र्यन्तिमः पादांशपर्यन्त उत्सेधश्च । तस्मिन्नपि तथाष्टांशिते तथा उत्तमोत्तमादधमाधमपर्यन्तविधिश्च । तथात्र लिङ्गविनिवेशार्हः लिङ्गविनिवेशनायां योग्योऽवटश्च कार्यः । तथाच गुरुदेवः—

"लिङ्गायामसमव्यासा श्रेष्ठा ब्रह्मशिला स्मृता ।
पूजांशद्विगुणा नीचा तयोर्मध्येऽष्टभागिके ॥
प्राग्वत्तत्र प्रकाराः स्युः शुभा ब्रह्मशिलाः स्मृताः ।
स्वव्यासार्धेन ता मुख्या नीचा पादांशतो घना ॥
तयोर्मध्येऽष्टधा भक्ते घनाद् ब्रह्मशिला नव ॥"

इति ॥ १३७ ॥

**सकले सति मूलबिम्बके निगमांशोन्मिति कर्मबिम्बकम् ।**
**सकलाकृति निष्कलेऽपि वा स्थितमासीनमुत प्रकल्पयेत् ॥ १३८ ॥**

विमर्शिनी

बिम्बविषये कौतुकलक्षणमाह — सकल इति । मूलबिम्बे सकले सावयवे सति निगमांशोन्मिति चतुर्थांशेनोन्मितं मानं यथा भवति तथा कर्माणि बिम्बकौतुकं कल्पयेत् । निष्कले निरवयवे सकलाकृति सावयवत्वेनैव स्थितं स्थिते मूलबि(म्ब ? म्बे) स्थितम् आसीनमुत आसीनं वा प्रकल्पयेत् । आसीने चोभयथा प्रकल्पयेत् । निगमांशोन्मितीत्येतदुपलक्षणम् । अन्यथा च ग्रन्थान्तरे विधानात्, तथा दर्शनाच्च । तथाहि —

"महति प्रतिमायामे तिथिभक्ते मधुद्विषः ।
अग्न्याद्यन्तिमैरंशैर्बलिबिम्बं प्रकल्पयेत् ॥
स्वायामपञ्चषड्भागैः कर्मार्चाष्टयंशितेऽथवा ।
अब्ध्याशुगरसाद्यंशैरल्पे महति वा भवेत् ॥"

इति । तथाच —

"बिम्बदीर्घनृपभाजितैऽशकैर्वेदभूतरसपर्वतैस्तथा ।
अङ्गुलैश्च भवति स्वयोनिजैः कर्मबिम्बमितिरच्युतार्ययोः ॥"

इति । रत्नावल्याम् — "अथ कर्मार्चाप्रमाणम् । यथा मूलार्चा, कर्मार्चापि तथैव कार्या । स्थाने स्थितमासीनं वा कारयेत् । अन्यकर्मार्चाः स्थिता एव कुर्यात् । महाबेरत्रिभागैकभागमुत्तमम् । कर्मार्चाप्रतिमोच्छ्रयं नवभागं कृत्वैकभागमपोह्य शेषं त्रिभागं कृत्वा एकभागं मध्यममि"त्यादि ॥ १३८ ॥

१. 'स्मार्त' ख. पाठः.

आयामेन शिवांशकस्य रचयेन्नाहेन वा सम्मितं
व्यासेनापि च मन्त्रलिङ्गविषये तत् कर्मबिम्बं शिवे ।
भक्त्वा षोडशधा पुनस्त्रयमिदं रुद्राङ्कशैलाशुगा-
न्यंशैर्वाधिकमूनितं च कुहचित् कुर्यात् तदौचित्यतः ॥ १३९ ॥

विमर्शिनी

लिङ्गविषये कर्मबिम्बमानमाह — आयामेनेति । मन्त्रलिङ्गविषये शिवांशकस्य वृत्तांशकस्यायामेन वा तस्य नाहेन वा तस्य व्यासेन वापि सम्मितं कर्मबिम्बं रचयेत् । कुहचित् पुनरिदं त्रयं षोडशधा भक्त्वा रुद्राङ्कशैलाशुगाग्न्यंशैः एकादशनवसप्तपञ्चत्र्यंशैरधिकं कुहचिदूनितं वा तदौचित्यतः कुर्यात् ॥ १३९ ॥

शिखिविशिखसुषिरभक्ते मूलगृहे मूललिङ्गे च ।
नेत्राग्निभूतभागैर्बालगृहं बाललिङ्गं च ॥ १४० ॥

विमर्शिनी

निष्क्रमणार्थमल्पगेहाल्पबिम्बयोः प्रमाणमाह — शिखीति । मूलप्रासादे मूललिङ्गे च त्रिभिः पञ्चभिर्नवभिर्वा भक्ते क्रमेण द्वाभ्यां त्रिभिः पञ्चभिर्वा बालालयमल्पबिम्बं च कुर्यात् ॥ १४० ॥

इति तन्त्रसमुच्चये द्वितीयः
पटलो दर्शितदेवधिष्ण्यलक्ष्मा ।
परिमण्डपबिम्बलिङ्गपीठा-
दिकक्लृप्त्युक्तिसमन्वितः समाप्तः ॥ १४१ ॥

विमर्शिनी

पटलमुपसंहरति — इति द्वितीयः पटलः समाप्तः । दर्शितदेवधिष्ण्यलक्ष्मा प्रतिपादितप्रासादलक्षणेन युक्तः । परिमण्डपबिम्बलिङ्गपीठादिकक्लृप्त्युक्तिसमन्वितः अन्तहारादिबिम्बलिङ्गादिक्लृप्तिवचनेन युक्तश्च ॥ १४१ ॥

इति तन्त्रसमुच्चयविमर्शिन्यां
द्वितीयः पटलः ॥

## अथ तृतीयः पटलः ।

कुर्यात् प्रागधिवासकर्मदिवसान्मित्राङ्कसङ्ख्ये दिने
शैलेषुप्रमितेऽथवाधिगतयामायां शुभायां निशि ।
प्रत्यग्द्वारि सुरालयोदगुपक्लृप्ते संवृते मण्डपे
मन्त्री तन्तुकुशस्रगादिकृतसंस्कारेऽङ्कुरारोपणम् ॥ १ ॥

विमर्शिनी

अतीतपटलेन प्रासादप्रतिमादिसम्पादनमभिधाय सम्प्रति प्रतिष्ठाकर्मणः प्राक्कर्तव्यबीजावापादिकं ब्रूते — कुर्यादिति । अधिवासकर्मदिवसात् प्राक् । यद्यपि प्रतिष्ठाकर्मणः प्रागिति वक्तव्यम्,

"अष्टमेऽह्नि प्रतिष्ठायाः प्राक् कुर्यादङ्कुरार्पणम्"

इत्याद्यागमेषूक्तत्वात् । तथापि बीजाङ्कुराणामधिवासकर्मण्येव विनियोग इत्यभिप्रेत्य तथोक्तम् । अधिवासकर्मदिवसः प्रतिष्ठाया दिवसात् पूर्वद्युरेव । तस्मात् प्राक् । मित्राङ्कसङ्ख्ये मित्रा द्वादश अङ्का नव तत्सङ्ख्ये वा । शैलेषुप्रमिते शैलाः सप्त इषवः पञ्च तत्सङ्ख्ये वा दिने अधिगतयामायां प्राप्तैकयामायां शुभायां निर्दोषायां निशि सुरालयोदगुपक्लृप्ते देवालयस्योदग्भागकल्पिते प्रत्यग्द्वारि पश्चिमभागगतद्वारे संवृते सम्यगाच्छादिते तन्तुकुशस्रगादिकृतसंस्कारे तन्तुकुशस्रगादिभिः कृतसंस्कारे । आदिशब्देन मृष्ट्यादिभिः स्थलशुद्धिर्विवक्षिता । मण्डपे अङ्कुरारोपणं कुर्यात् । मन्त्रीति, स्थलशुद्ध्यादौ मन्त्रं कर्म च जानन्नित्यर्थः ॥ १ ॥

विवरणम्

अथाधिवासदिनपूर्वदिनेषु कर्तव्यं सर्वं वदन् प्रथममधिवासशेषतया मङ्गलाङ्कुरारोपणमाह — कुर्यात् प्रागिति । अधिवासकर्मदिवसात् प्राङ्मित्राङ्कसङ्ख्ये दिने निशि सुरालयोदगुपक्लृप्ते मण्डपेऽङ्कुरारोपणं कुर्यादित्यन्वयः । उत्तममध्यमाद्यभिप्रायेण मित्राङ्कादिदिवससङ्ख्याविकल्पः । कर्तुरनुरूपपरिग्रहार्थो वा । *अतिगतयामायां निशीति । तद्रात्रावपि प्रथमयामेऽतीते इत्यर्थः ।

१. 'षि', २. 'कृ' ख. पाठः. ३. 'ख्या' क. पाठः.

* 'अथवातिगतयामायाम्' इति विवरणटीका पाठः.

शुभायामिति विष्ट्यादिराहित्यमुक्तम् । प्रत्यग्द्वारीत्यनेनैव देवालयोदग्भागेऽपि प्राग्भाग एवेति लभ्यते । तदुक्तम् 'मध्यसूत्रात् पुरो भवेदि'ति, 'ईशानसोमयोर्मध्य' इति च । संवृत इति । समन्तादाच्छादिते । मन्त्रीति स्नानतन्मन्त्रसकलीकरणादिकमुक्तम् । तन्तुकुशस्रगादिकृतसंस्कार इति । परिमण्डप एव संवृते स्थले सति मुष्ट्यादिभिः स्थलशुद्धिमात्रं स्यात् । पृथङ्मण्डपे तु यथोक्तरूपे सति भाविमण्डपसंस्काररीत्या त्रिगुणितसूत्रदर्भमालापरिकलनं द्वारदेश एवैकतोरणध्वजस्थापनं मुष्ट्यादिभिः स्थलशोधनं च कार्यम् ॥ १ ॥

**क्षेत्रे वारिधिवर्गकोष्ठसुविचित्रे शालिदर्भाग्रकैः**
**पीठानि प्रविधाय तेषु विनिदध्यात् पालिकाः षोडश ।**
**अस्त्राप्क्षालितवर्मसूत्रकलिता दूर्वादिदीप्ता लस-**
**त्कूर्चा मृत्सिकताकरीषरजसा पूर्णा हुताशादितः ॥ २ ॥**

विमर्शिनी

तद्विधानमाह— क्षेत्र इत्यादिभिः । वारिधिवर्गकोष्ठसुविचित्रे वारिधयश्चत्वारः तेषां वर्गाः षोडश तत्सङ्ख्यैः पदैर्विचित्रिते क्षेत्रे शालिदर्भाग्रकैः शालिभिः दर्भाग्रैश्च पीठानि प्रविधाय तेषु पीठेषु अस्त्राप्क्षालितवर्मसूत्रकलिता अस्त्रमन्त्रेण अद्भिः क्षालिताः कवचमन्त्रेण त्रिगुणसूत्रेण बद्धाः दूर्वादिदीप्ताः दूर्वादर्भपल्लवैः शोभिताः मृत्सिकताकरीषरजसा मृद्भिर्वालुकाभिः करीषरजोभिश्चोत्तरोत्तरं पूर्णाः लसत्कूर्चाः शोभनकूर्चैश्च युक्ताः षोडश पालिकाः हुताशादितः अग्निकोणमारभ्य निदध्यात् । अयं भावः— दक्षिणपङ्क्तौ पूर्वादिपश्चिमान्तं तदुत्तरपङ्क्तौ पश्चिमादिपूर्वान्तं तस्यां अप्युत्तरपङ्क्तौ पूर्वादिपश्चिमान्तं सर्वोत्तरपङ्क्तौ पश्चिमादिपूर्वान्तमिति ॥ २ ॥

विवरणम्

**क्षेत्रे वारिधिवर्गकोष्ठसुविचित्रे** इति । वर्गो नाम समद्विघातः वारिधीनां चतुर्णां वर्ग एकचतुरश्रतया षोडशकोष्ठानि यत्र तद्वारिधिवर्गकोष्ठं क्षेत्रं यद्वा वारिधिभिर्वर्गा यत्र कोष्ठेष्विति समासः । प्रागग्रैरुदगग्रैश्च पट्पदसूत्रैः पञ्चवर्गात्मकं क्षेत्रं विधाय तत्र मध्यमपुटेन प्रागग्रामुदगग्रां च वीथीं विसृज्यादिति भावः । प्रतिकोष्ठं शुक्लरक्तरजोविकिरणेन स्वस्तिकादिकरणेन वा सुविचित्रितं भवति । पीठानीति प्रतिकोष्ठं पीठविरचनमुक्तम् । हुताशादितो विनि-

१. 'रचिता' क. पाठः

दद्यादिति सम्बन्धः । सर्वदक्षिणपङ्क्तौ प्रागादिपश्चिमान्तं तदनन्तरपङ्क्तौ पश्चिमादिप्रागन्तम्, एवमुत्तरपङ्क्त्योरपीति भावः । वीथीपक्षे प्रतिखण्डं वाग्न्यादीशान्तत्वं स्यात् । दूर्वादिदीप्ता इति शिरीषाङ्कुराश्वत्थस्तबकादिग्रहणम् । तैरलङ्करणमेतदुक्तम् । प्रणव एवेह कूर्चन्यासे मृदादिपूरणे निधाने च मन्त्रः मन्व्यङ्कुरारोपणं कुर्यादित्येवैतदर्थमपि भवति । लसत्कूर्चा इति प्रत्येकं तद्वदनेषु ह्रस्वोत्कूर्चन्यास उक्तः । पूर्णा इति क्रमेणोत्तरोत्तरं पूरिता इति भावः । पालिकानां दर्भाद्यलङ्करणानन्तरं गन्धालेपनं सन्धूपनमपि प्रणवेन कार्यम् । यद्यप्येतत् सर्वं पीठपूजानन्तरमुचितं किंतु सौकर्यार्थमिदानीं क्रियते । यद्वा परिकर्मिणो व्यापारोऽयमभिप्रेतः । पीठपूजानन्तरं तु तथाकल्पनया भाव्यम् । यतो वक्ष्यति —

"पीठं प्रपूज्य परिकल्पितसंस्क्रियासु"

इति ॥ २ ॥

अस्त्रस्वमन्त्रजलदुग्धसमाप्लुतानि
बीजानि तत्र पुरतो विनिधाय मन्त्री ।
इष्टाम्बिकेयकृतनान्द्यभिधानकर्मा
पुण्याहमाचरतु मूर्तिधरैरुपेतः ॥ ३ ॥

विमर्शिनी

एवं पालिकासादनमुक्त्वा बीजसादनादिकमाह— अस्त्रेति । मन्त्री मन्त्रविशेषज्ञो गुरुः अस्त्रस्वमन्त्रजलदुग्धसमाप्लुतानि अस्त्रेण स्वमन्त्रेण च क्रमात् जलेन दुग्धेन च क्षालितानि बीजानि तत्र पुरतो विनिधाय इष्टाम्बिकेयकृतनान्द्यभिधानकर्मा भूत्वा इष्ट आम्बिकेयो गणपतिर्येन कृतं नान्द्यभिधानं कर्म च येन सः, नान्द्यभिधानकं नान्दीमुखं, मूर्तिधरैरुपेतः मूर्तिपालैः सह मङ्गलाङ्कुरदेवताः प्रीयन्तां प्रीयन्तां मङ्गलाङ्कुरदेवताः इति विशेषयुक्तं पुण्याहमाचरतु । अत्र पुण्याहकाले बीजानां पालिकानां च प्रोक्षणमवगन्तव्यम् ॥ ३ ॥

विवरणम्

अस्त्रस्वमन्त्रजलदुग्धसमाप्लुतानीति । पूर्वं सुदर्शनादिस्वास्त्रेण ततः स्वमन्त्रेण 'मूलं प्रक्षालनेऽणुरखिलेष्वि'त्यादिवक्ष्यमाणेन (जलेन) दुग्धेन च समाप्लुतानि । इह जलेन क्षालनपूर्वकं आप्लावनं समाप्लावनं क्षीरेण त्वाशु गुणवदङ्कुरोत्पत्त्युचिततयाप्लावनं समाप्लावनम् । बीजानि तत्र पुरतो विनि-

पायेति । स्वपुरतः स्थण्डिले दर्भान् विकीर्य नानापात्रेष्वेकपात्रे वा यथायोगं निधानमुक्तम् । मन्त्रीति । नान्दीमुखपुण्याहयोर्मन्त्रविशेषविदित्यर्थः । इष्टाग्निकेयः कृतनान्द्यभिधानकर्मा चेति समासः । गणपतिमिष्ट्वा नान्दीमुखं च कृत्वेत्यर्थः । प्रायश्चित्तपूर्वकं नान्दीमुखमिष्यते । मन्त्रस्तु तत्र प्रसिद्ध एव । ओं बीजाङ्कुरदेवताः प्रीयन्तामित्येवं पुण्याहे मन्त्रः ब्रह्माद्याश्च वक्ष्यमाणास्ता देवताः ॥ ३ ॥

पीठं प्रपूज्य परिकल्पितसंस्क्रियासु
विष्णुं स्वनाममनुनार्हतु पालिकासु ।
बीजेषु तत्तदधिपांश्च पृथक्स्थितेषु
सम्मिश्रितेषु यजतामथवौषधीशम् ॥ ४ ॥

विमर्शिनी

पीठं प्रपूज्य परिकल्पितसंस्क्रियासु कृतशोषणादिक्रियासु पालिकासु विष्णुं स्वनाममनुना 'ओं विष्णवे नम' इति मन्त्रेण अर्हतु अर्चयतु । पृथक्स्थितेषु बीजेषु तत्तदधिपांश्चार्हतु । अथवा सम्मिश्रितेषु युक्तेषु बीजेषु ओषधीशं सोमं 'सों सोमाय नम' इति मन्त्रेण यजताम् ॥ ४ ॥

विवरणम्

परिकल्पितसंस्क्रियास्विति शोषणादि सर्वमुक्तम् । पालिकासु विष्णुं स्वनाममनुनार्हत्विति । मन्त्रीत्येतादिहापि योजनीयम् । स्वनाममनुर्वैष्णवः षडक्षरो निजनाममन्त्र एव वा । पालिकासु पृथग्वा समुदायतो वा पूजनम् । पृथक्स्थितेषु बीजेषु तत्तदधिपांश्चेति । तत्तदधिदेवताः स्वनाममन्त्रैरर्चयेदित्यर्थः । शोषणादि तु बीजेष्वपि समानम् । सम्मिश्रितेष्विति । यद्येकपात्र एव सम्मिश्रितानि स्युस्तदा तस्मिन् बीजौघे सोमं स्वनाममनुना पूजयेदित्यर्थः । यद्वा पूर्वं पृथग् ब्रह्मादीन् पूजयित्वा पुनर्मिश्रयित्वा सोमपूजाप्यनेनोक्ता । यदुक्तम् — 'द्रव्याण्येतानि पात्रेषु कृत्वे'त्यादि, 'एकस्मिन्नेव पात्रेऽथ सर्वाण्येतानि निक्षिपेदि'त्यादि चेति ॥ ४ ॥

ब्रह्मार्च्योऽधियवं मुरारिरधिमुद्गं सर्षपेष्वीश्वरो
निष्पावेषु मरुत् प्रियङ्गुषु गुहो माषेष्वमर्त्याधिपः ।

खल्वेष्वग्निरिनोऽधिशाल्यधितिलं प्रेताधिभू राजमा-
षाख्येष्वप्पतिराढकीषु च रमा श्यामेषु सोमः क्रमात् ॥ ५ ॥

विमर्शिनी

पृथक्स्थितेषु बीजेष्वर्चनार्थं तद्देवतामाह — ब्रह्मार्च्य इति । अधियवं यवेषु ब्रह्मार्च्यः, अधिमुद्गे मुद्गेषु मुरारिः विष्णुः, सर्षपेष्वीश्वरो रुद्रः, निष्पावेषु मरुद् वायुः, प्रियङ्गुषु गुहः स्कन्दः, माषेषु अमर्त्याधिपः इन्द्रः, खल्वेष्वग्निः, अधिशालि शालिषु इनः सूर्यः, अधितिलं तिलेषु प्रेताधिभूः यमः, राजमाषेष्वप्पतिर्वरुणः, आढकीषु रमा श्रीः, श्यामेषु सोमश्च । तेषां क्रमाच्चतुर्थीनमोन्तानि स्वस्वनामान्येव मन्त्राः । बीजानां पृथगर्चनेऽपि सम्मिश्रितेषु बीजेषु सोमार्चनं कर्तव्यम् ॥ ५ ॥

विवरणम्

बीजानां पृथगधिदेवतास्तदा च तेषां क्रममपि दर्शयति — ब्रह्मार्च्योऽधियवमिति । सप्तम्यर्थेऽव्ययीभाव इति बोद्धव्यम् । मुरारिर्विष्णुः । ईश्वरो रुद्रः । मरुद्वायुः । अमर्त्याधिप इन्द्रः । इनस्सूर्यः । प्रेताधिभूर्यमः । अप्पतिर्वरुणः । रमा श्रीः । क्रमादिति । मूलतन्त्रेषु नानाक्रमदर्शनादयं क्रम इहाश्रित इति ज्ञेयम् ॥ ५ ॥

एतानि बीजानि समाहितात्मा क्रमेण पात्रेषु पवित्रपाणिः ।
नदत्सु वाद्येषु वपेत् तदुक्तमन्त्रेण वह्न्यादिशिवावसानम् ॥ ६ ॥

विमर्शिनी

अर्चितानां बीजानां वापमाह — एतानीति । गुरुः पवित्रपाणिः समाहितात्मा च भूत्वा वाद्येषु नदत्सु सत्सु एतानि बीजानि पात्रेषु स्थापितासु पालिकासु तदुक्तमन्त्रेण[1] तत्र वापस्योक्तमन्त्रेण वह्न्यादिशिवावसानं पूर्वप्रोक्तेन क्रमेण वपेत् ॥ ६ ॥

विवरणम्

एतानि बीजानीति । पृथक्स्थितानि वा सम्मिश्रितानि वेति भावः । समाहितात्मेति । ... ... ... ... क्रमेण पात्रेषु वपेदित्यन्वयः । पृथक्स्थितपक्षे तेषामेकैकपालिकास्वपि वह्न्यादिशिवान्ततयावस्थानं यथा स्यात् तथा वपनं कार्यमिति ज्ञेयम् । यथा यवांस्तावत् तत्तत्पालिकास्वग्न्युद्देशे वपन्नग्न्या-

---

१. 'ण वा' क. पाठः.

दिशिवान्तं क्रमेण पालिकासूप्त्वा ततो मुद्गांस्तत्तत्पालिकासूप्तयवानन्तरपश्चिमोद्देशे वपन्नग्न्यादिशिवान्तं पालिकासु वपेदित्यादि । सम्मिश्रितपक्षे तु बीजौघस्यैवाग्न्यादीशान्तं पालिकासु वाप इति । पवित्रपाणिरिति । प्रादेशमात्रदर्भयुगलरूपमेतत् पवित्रम् । कराञ्जलिना च वपनं कार्यम् ॥ ६ ॥

तानि प्रोक्षतु तत्तदागमसमुक्तेनाणुना सादरं
पाथोभिः कुशकूर्चचर्चितकरो गन्धक्षपामेदुरैः ।
देवं तत्र ततोऽभिवाह्य सकलीकृत्योपहारान् क्रमाद्
दत्त्वा स्नानविधौ समुक्षतु तथापोह्यादितन्मन्त्रतः ॥ ७ ॥

विमर्शिनी

वापानन्तरं प्रोक्षणादिक्रमाह— तानीति । कुशकूर्चचर्चितकरः दर्भमयेन कूर्चेनालङ्कृतकरो गुरुः तानि बीजानि गन्धक्षपामेदुरैः अष्टगन्धरजनीचूर्णमिलितैः पाथोभिः जलैः तत्तदागमसमुक्तेन तेषु तेष्वागमेषु प्रोक्षणार्थमुक्तेन (अणुना) मन्त्रेण सादरं प्रोक्षतु । ततस्तत्र देवमभिवाह्य सकलीकृत्योपहारान् क्रमाद् दत्त्वा स्नानविधौ स्नानकाले आपोह्यादितन्मन्त्रतः आपोहिष्ठादिप्रोक्षणमन्त्रैः तथा पूर्वोक्तप्रकारेण प्रोक्षतु च ॥ ७ ॥

विवरणम्

तत्तदागमसमुक्तेनेति । शिवे गायत्र्या मूलेन वेत्यादि सूचितम् । सादरमित्युप्तबीजानामक्षोभः प्ररोहानुगुणतेत्यादि यथा स्यात् तथा प्रोक्षणार्थमुक्तम् । कुशकूर्चचर्चितकरो दर्भकूर्चान्वितकरः । गन्धक्षपामेदुरैः पाथोभिरिति । चन्दनरजनीरजोयोगतः सिद्धैर्जलैः । पात्रान्तरे जलमेवं कृत्वास्त्रप्रोक्षणशोषणादि कृत्वा प्रणवेन सम्पूज्य प्रोक्षणं कार्यम् । वपनं प्रोक्षणं च सकृत् त्रिर्वा स्यात् । सादरमित्यनेन प्रोक्षणे प्रतिपत्तिर्वा सूचिता । यदुक्तं — 'राजताद्रिशिखराभमण्डलं शीतभासमुपरि प्रविचिन्त्ये'त्यादि । स्नानविधौ समुक्षत्विति । शक्यत्वादेतद्विधानम् ॥ ७ ॥

दत्त्वा वस्त्रादिभूषावधि तदनु यजेत् तं च पञ्चोपहारै-
र्नैवेद्यान्ते प्रसाद्यामलवसनवृतान्यस्त्रतस्तानि रक्षेत् ।
प्रागाद्यास्वपलिप्तास्तृतकुशरुचिरास्वष्टदिक्ष्वर्चयित्वा
दद्यात् तद्रात्रिपेभ्यो बलिमपि परिषत्संहितेभ्यो ग्रहेभ्यः ॥ ८ ॥

१. 'सन्नार्चनमुदितमभिध्याय रक्षां च कुर्यात् ।', २. 'स्वद्रव्ययुक्तं बलिमपि शौरतो रात्रिपेभ्यो ग्र' ख. पाठः.

विमर्शिनी

तदनु वस्त्रादिभूषावधि वस्त्रादिभूषणान्तमुपहरणं दत्त्वा तदनु तं देवं पञ्चोपहारैर्यजेच्च । नैवेद्यान्ते प्रसाद्य प्रसन्नपूजां कृत्वा अमलवसनवृतानि नवीनवस्त्राच्छादितानि (तानि) बीजान्यस्त्रतो रक्षेत् । उपलिप्तास्तृतकुशरुचिरासु उपलिप्तासु क्षिप्तदर्भासु च प्रागाद्यासु अष्टदिक्षु तद्रात्रिपमन्त्रेणार्चयित्वा तद्रात्रिपेभ्यः परिषत्संयुतेभ्यो ग्रहेभ्यः 'ओं ब्रह्मग्रहेभ्यो नमः' 'तत्पारिषदेभ्यो नमः' इत्यादिमन्त्राभ्यां बलिमपि दद्यात् ॥ ८ ॥

विवरणम्

कवचेनास्त्रेण मूलेनैव वा नवीनवस्त्रेण वाच्छादनं स्यात् । तान्यस्त्रतो रक्षेदिति तालत्रयादिकमुक्तम् । यद्वास्त्रेण नीराजनमप्युक्तम् इति । प्रागाद्यास्वष्टदिक्ष्विति । प्रत्यग्द्वारेऽपि मण्डपे तद्बहिः पूर्वाद्यष्टदिक्षु । परिमण्डपादिमात्रे तु पालिकानामेव प्रागाद्यष्टदिक्ष्विति बोद्धव्यम् । उपलिप्तास्तृतकुशरुचिरास्विति गोमयोदकेनोपलेपनं तत्र दर्भास्तरणं चोक्तम् । परिषत्संयुतेभ्यो ग्रहेभ्य इति । एतदुक्तं भवति—पूर्वं ब्रह्मग्रहेभ्यो नम इति सम्पूज्य बलिं दत्त्वा तदनु तत्पारिषदेभ्यो नम इति सम्पूज्य बलिं दद्यात् । एवं भूतेन्द्रादीनामपीति । बलिप्रक्रिया तूत्सवपटले भविष्यति । एवं तावत् प्रथमे दिने निशि कर्तव्यमुक्तम् ॥ ८ ॥

उक्षेदूर्ध्वदिनेषु पीठयजनान्ते पात्रबीजाधिदै-
वेज्याकृत् सवनेषु देवमभिवाद्योक्तक्रमात् पूजयेत् ।
रात्रौ तत्र बलिं हरेदिह बलिः शुद्धेन भूतान्धसा
तत्तद्द्रव्यसमन्वितेन चरुणा वान्ते स्वयं स्नातु च ॥ ९ ॥

विमर्शिनी

एवं तद्रात्रिकर्मोक्त्वा शेषदिनेषु कर्तव्यं कर्माह — उक्षेदिति । ऊर्ध्वदिनेषु त्रिषु सवनेषु पीठपूजान्ते पात्रबीजाधिदैवेज्याकृत् पात्रबीजयोरधिदैवतं विष्णुः सोमश्च तयोः पूजाकृन्मन्त्री तत्तन्मन्त्रेणोक्षेत् । ततः उक्तक्रमाद् देवमभिवाद्य पूजयेत् । तत्र तेषु दिनेषु रात्रौ तृतीयसवनपूजानन्तरं बलिं हरेच्च । इह अत्रत्यो बलिः शुद्धेन चरुणा वा भूतान्धसा भूतकूरहविषा वा तत्तद्द्रव्यसमन्वितेन तत्तद्देवतानां विहितेन द्रव्यसमन्वितेन चरुणा वा स्यात् ।

१. 'तत्पारिषद्ग्रहस्तद्ग्रहेभ्यस्ततः स्नायादप्यधिवासकर्मदिवसे प्रातर्बलिं चाचरेत् ॥ ८॥' ख पाठः.

अन्ते बलिदानानन्तरं स्वयं गुरुः स्नातु च, बलिदानानन्तरं स्नानस्य विहितत्वात् ॥ ९ ॥

विवरणम्

उक्षेदूर्ध्वदिनेष्विति । द्वितीयादिदिनेषु । सवनेष्विति । प्रातर्मध्याह्ने सायं चेत्यर्थः । पीठयजनान्त उक्षेदित्यन्वयः । पीठं सम्पूज्य यथोक्तं सेचनं कृत्वा पात्रबीजदेवतेज्या स्यात् । पीठयजनान्ते पात्रबीजाधिदैवेज्याकृदुक्षेदिति वा योजना । पृथग्वापे तत्तधिदेवताः पूज्याः । सम्मिश्रितवापे सोमः समुच्चये तूभयपूजा स्यादिति । इह बलिः शुद्धेनेति । केवलेन हविषा वेत्यर्थः । दौग्धेनेति वा पाठः । भूतान्धसेति । वक्ष्यमाणेन भूतकूरहविषा वेत्यर्थः । अन्ते स्वयं स्नातु चेति । मण्डपबहिर्बलिदानोपपत्तावेतदित्यवबोद्धव्यम् । पुनः स्नात्वैव भोजनं देवपूजादि वा कार्यमित्यभिप्राय इति ॥ ९ ॥

शालीमाषयवप्रियङ्गुतिलमृत्साखल्वमुद्गासुरी-
शिम्बश्यामकराजमाषकमयः शार्ङ्गीशदुर्गाजिते ।
बीजौघः शिवविघ्नयोरपयवान्त्योऽन्तद्विहीनो गुहे
निर्मुद्गादिरथार्यके ससुमनो वेणूत्थनीवारवान् ॥ १० ॥

विमर्शिनी

बीजवापकर्माभिधाय बीजादीनाह—शालीति । शार्ङ्गीशदुर्गाजिते शङ्करनारायणदुर्गाविष्णुषु शालीमाषयवप्रियङ्गुतिलमृत्साखल्वमुद्गासुरीशिम्बश्यामकराजमाषकमयः शाल्यादिराजमाषान्तस्वरूपो बीजौघः बीजानां समूहः स्यात् । (ശാലി=നെല്ല്. മാഷം=ഉഴുന്ന്. യവം അതുതന്നെ. പ്രിയംഗു=തിന. തിലം=എള്ള്. മൃത്സാ=തുവര. ഖല്വം=മുതിര. മുദ്ഗം=ചെറുപയറ്. ആസുരി=കടുക്. ശിംബം=അവര. ശ്യാമകം=ചാമ. രാജമാഷം=വലിയപയറ്) शिवविघ्नयोरपयवान्त्यः अपगतो यवोऽन्त्यो राजमाषश्च यस्मिन् बीजौघे । गुहे अन्तद्विहीनः अन्ते प्रासाभ्यां श्याम(क)राजमाषाभ्यां हीनः । अथार्यके निर्मुद्गादिः निर्गतो हीनो मुद्गादिः यथा स तथा ससुमनः सुमनेन सहितः । इह सुमनशब्दोऽकारान्त एव, "गोधूमः सुमनः समौ" इत्युक्तत्वात् । वेणूत्थनीवारवांश्च वैणवेन नीवारेण च सहितः । (സുമനം=കോതമ്പ്. വേണൂത്ഥം=മുളനെല്ല്. നീവാരം=വരിനെല്ല്)॥

१. 'बकीराचिरया' ख. पाठः. २. 'न्त्य' मूलकोशपाठः.

विवरणम्

शालीमाषेति । बीजौघो वपनीयबीजनिचयः । शिवविघ्नयोरपयवान्त्यः यवेनान्त्येन राजमाषेण च विरहितः । दशैवैवमनयोर्बीजानीत्यर्थः । अथार्यके निर्मुद्गादिरित्यन्वयः । मुद्गादिपञ्चरहितो गोधूमादियुतश्च बीजौघः । एवमपि दशबीजानीति भावः ॥ १० ॥

बीजानि वह्निभुवि वा शिववत् स्वमूलं
प्रक्षालनेऽणुरखिलेषु हराविनार्णम् ।
तत्रेश्वरे भवति तत्पुरुषः प्रवापे
स्यात् त्र्यम्बकाणुरधिशूलि परेषु मूलम् ॥ ११ ॥

विमर्शिनी

वह्निभुवि स्कन्दे शिववद्वा बीजानि । अखिलेषु देवेषु बीजस्य प्रक्षालने स्वमूलं स्वस्वमूलमेव अणुर्मन्त्रः । हरौ इनार्णं द्वादशाक्षरमन्त्रः । ईश्वरे तत्र प्रक्षालने तत्पुरुषोऽणुः । अधिशूलि शिवे प्रवापे त्र्यम्बकाणुः त्र्यम्बकायेत्यादिमन्त्रः । परेषु प्रवापे मूलमन्त्रः ॥ ११ ॥

विवरणम्

बीजानि वह्निभुवि वा शिववदिति । वह्निभूः स्कन्दः । हराविनार्णमिति । द्वादशाक्षरं प्रक्षालने मन्त्रः । तत्रेति । प्रक्षालने । परेषु मूलमिति । प्रवाप इत्यनुषङ्गः ॥ ११ ॥

त्रियम्बकाय[1] शर्वाय शङ्कराय शिवाय च ।
सर्वलोकप्रधानाय शाश्वताय नमो नमः ॥ १२ ॥

इति ॥

विमर्शिनी

त्र्यम्बकाणु पठति—त्रियम्बकायेति ॥ १२ ॥

गायत्र्या निजयात्र सेचनविधिर्विघ्नार्यषाण्मातुरे
शार्ङ्गीशाजितयोस्त्रितारकनमोमूर्ध्ना जितन्ताणुना ।
कार्यः षण्मुखविघ्नयेष्ठभुवि वा शक्त्या भुवाद्यन्तयां
दुर्गायां मनुना मनोभववरिपौ वापोदितेन स्वयम् ॥ १३ ॥

---

१. 'त्र्यम्ब' क. पाठः.

विमर्शिनी

विघ्नार्यषाण्मातुरे गणपतिशास्तृस्कन्देषु अत्र निजया स्वस्वगायत्र्या सेचनविधिः कार्यः । शार्ङ्गीशाजितयोः त्रितारकनमोमूर्ध्ना प्रणवत्रयं नमश्श-ब्दश्चोर्ध्वस्थितेन जितन्ताणुना 'जितन्त' इत्यादिमन्त्रेण, इषुभुवि स्कन्दे षण्मुख-विषया 'ओं नमः षण्मुखाये'ति मन्त्रेण वा, दुर्गायां ध्रुवाद्यन्तया प्रणवपुटि-तया शक्त्या भुवनेश्वर्या, मनोभवरिपौ शिवे वापोदितेन स्वयं 'त्रियम्बकाये'-त्यनेनैव ॥ १३ ॥

विवरणम्

**त्रितारकनमोमूर्ध्नेति** सर्वेष्वपि सेचनमन्त्रेषूचितमेतत् । षण्मुखविषा तदुपचारमन्त्रः । मनुनेति सर्वत्र योज्यम् । वापोदितेन स्वयमिति । तेनैवे-त्यर्थः ॥ १३ ॥

बलेर्ब्रह्मभूतेन्द्रगन्धर्वयक्षाः
सरक्षःपिशाचाः स्मृता विष्णुविघ्नाः ।
ततः स्कन्दरुद्राः शिवाः शर्वविघ्ने
द्विषड्[1] देवता रात्रिक्लृप्त्यात्र योज्याः ॥ १४ ॥

विमर्शिनी

बलिदेवता आह—बलेरिति । शर्वविघ्ने शिवगणेशयोः बलेः बलिविधेः ब्रह्मभूतेन्द्रगन्धर्वयक्षाः इति पञ्च, सरक्षःपिशाचाः राक्षसपिशाचयुक्ता इति द्वे, विष्णुविघ्ना इति च द्वे, ततः स्कन्दरुद्रा इति च द्वे, शिवाश्च इत्येका । अत्र सर्वबहुवचनं मन्त्रे च बहुवचनप्रयोगार्थम् । इति द्विषड् द्वादश देवताः स्मृताः । अत्रासु देवतासु मध्ये रात्रीणां क्लृप्त्या योज्याः । अयं भावः—पञ्चरात्रि-क्लृप्त्यैव बीजावापः क्रियते चेत् पञ्चसु रात्रिष्वादौ भवाः पञ्चैव देवताः स्युः, सप्तरात्रिक्लृप्त्या चेत् सप्तैव, नवरात्रिक्लृप्त्या चेन्नव, द्वादशरात्रिक्लृप्त्या चेदखिला योज्या इति ॥ १४ ॥

विवरणम्

**रात्रिक्लृप्त्यात्र योज्या** इति । दिवसविकल्पास्तावदुक्ता 'मित्राङ्कसङ्ख्ये दिन' इत्यादि । तत्र द्वादशरात्रमुत्तमं, तद्विषये चैता द्वादशदेवता गणिताः ।

---

1. 'ग्रहे देवताश्चेन्द्रभूतक्रमात् ते ॥ भू' ख. पाठः.

तत्र पञ्चरात्रिसम्भवे ब्रह्मभूतेन्द्रगन्धर्वयक्षा इतीयत्यो देवता योज्या इत्यादि बोद्धव्यम् ॥ १४ ॥

भूतपितृयक्षनागब्रह्मशिवा बलिभुजः स्मृता विष्ण्वन्ताः[1] ।
हरिहरदुर्गाहरिषु स्कन्द इमे शिवसमुक्तबीजोप्तिविधौ ॥ १५ ॥

विमर्शिनी

हरिहरदुर्गाहरिषु भूतपितृयक्षनागब्रह्मशिवाः इति षट्, विष्ण्वन्ताः अन्ते विष्णुयुक्ताः इत्येकः, एवं सप्त बलिभुजः स्मृताः । स्कन्दे शिवसमुक्तबीजोप्तिविधौ शिवसमुक्तानि बीजान्युप्यन्ते चेद् इमे बलिभोक्तारः ॥ १५ ॥

विवरणम्

शिवसमुक्तबीजोप्तिविधाविति । उप्तिर्वापः । वह्निभुवि वा शिववद्विस्तरेत्यर्थः ॥ १५ ॥

भूतेशे बलिभाजो भूतपिशाचाश्च यक्षनागाश्च ।
ब्रह्मशिवविष्णुपितरः ससर्वदेवा ग्रहा नव प्रोक्ताः ॥ १६ ॥

विमर्शिनी

भूतेशे शास्तरि भूतपिशाचाः इति द्वौ, यक्षनागाश्च इति च द्वौ, ब्रह्मशिवविष्णुपितरः इति चत्वारः, ससर्वदेवाः सर्वदेवसहिता इत्येकः, एवं नव बलिभाजो ग्रहाः प्रोक्ताः ॥ १६ ॥

इतीरितानां बलिदेवतानां सङ्ख्यातिरिक्तेषु बलिं दिनेषु ।
तदन्त्यया देवतयैव दद्याद् वक्ष्ये बलिद्रव्यगणं क्रमेण ॥ १७ ॥

विमर्शिनी

इतीरितानां बलिदेवतानां सङ्ख्यातिरिक्तेषु देवताभ्योऽहस्सङ्ख्याधिक्ये तद्दिनेषु तदन्त्यया देवतयैव बलिं दद्यात् । बलिद्रव्यगणं क्रमेण वक्ष्ये ॥ १७ ॥

विवरणम्

सङ्ख्यातिरिक्तेष्विति । सप्तदेवताविषये मित्राङ्कसङ्ख्ये दिन इति रात्रिसङ्ख्यातिरेकः देवतांशाद् द्वित्ररात्रिसङ्ख्यातिरेकः[2] सर्वत्रापि सम्भवति । पञ्चरात्रिसम्भवे रात्रिक्लृप्त्यात्र योज्या इति हरिहरादिष्वपि तुल्यमिति ॥ १७ ॥

आद्यं पुष्पकुशाक्षताम्बुचरुणान्यं भूतक्रूरान्धसा
सर्पिःसक्तुपयोदधीन्द्रलतिकागौलान्धसैन्द्रं हरेत् ।

१. 'फि' क. पाठः. २. 'द्वित्रादिस' ख. पाठः. ३. 'सिद्धान्ध' ख. पाठः.

तुर्यं वैणवपायसेन जलपुष्पाज्यान्धसा पञ्चमं
दोषाकम्बुतुषैः सरक्तकुसुमान्धोगन्धकै राक्षसम् ॥ १८ ॥

माषान्नान्वितमत्स्यमांसकृसरक्षौद्रैः सतैलक्षपा-
लाजैः सप्तममष्टमं गुलभुवा वैध्नं त्रिमध्वोदनैः ।
दध्याज्यान्वितकेरदुग्धचरुणा स्कान्दं शिवेऽन्यन्निशा-
दध्युद्यत्कृसरेण सद्विपमुखेऽन्त्यं साज्यदुग्धान्धसा ॥ १९ ॥

[युग्मकम्]

विमर्शिनी

सद्विपमुखे सगणपतौ शिवे पुष्पकुशाक्षताम्बुचरुणा पुष्पकुशाक्षतजल-युक्तेन हविषा ब्राह्मं ब्रह्मदेवत्यं बलिं हरेत् । अन्यं भौतिकं भूतकूरान्धसा भूतकूरयुक्तेन हविषा । भूतकू(रो?रं) वक्ष्यति । ऐन्द्रं सर्पिःसक्तुपयोदधीन्द्र-लतिकागौलान्धसा । (സക്തു=തരിപ്പണം. ഇന്ദ്രലതികാ=ഉഴിഞ്ഞ) गौलान्धो गुलेन सह पक्वं हविः । तुर्यं गान्धर्वं वैणवपायसेन । पञ्चमं याक्षं जलपुष्पाज्यान्धसा जलपुष्पाज्यसहितेन हविषा । राक्षसं दोषाकम्बुतुषैः । (ദോഷാ=മഞ്ഞൾ. കംബു=കമ്പു. തുഷം=ഉമി) सरक्तकुसुमान्धो-गन्धकैः । रक्तकुसुमं (അന്തിമന്ദാരം=ചെമ്പരത്തി) सप्तमं पैशाचं सतैलक्षपालाजैः माषान्नान्वितमत्स्यमांसकृसरक्षौद्रैः । माषान्नं माषेण सह पक्वमन्नं, मत्स्यमांसं मोदकादिप्रतिनिधिना कल्पितं, कृसरं तिलेन सह पक्वमन्नं, क्षौद्रं मधु । अष्टमं वैष्णवं गुलभुवा गुलान्नेन । वैध्नं त्रिमध्वोदनैः त्रिमधुरहविर्भिः । स्कान्दं दध्याज्यान्वितकेरदुग्धचरुणा । केरदुग्धं नालिकेरक्षीरम् । अन्यद् रौद्रं निशादध्युद्यत्कृसरेण निशादधिभ्यां सहितेन कृसरेण (നിശാ=മഞ്ഞൾ) कृसरमुक्तम् । अन्त्यं शैवं साज्यदुग्धान्धसा आज्यक्षीरसहितह-विषा ॥ १८,१९ ॥

विवरणम्

अन्यं भूतकूरान्धसेति । भूतबलिमित्यर्थः । भूतकूरौदनं वक्ष्यति— 'हारिद्रं दधिलाजसक्तुपललाढ्यमि'ति । दोषा हरिद्रा ॥ १८ ॥

---

१. 'न्धसा गु' ख. पाठः. २. 'बलिं यामिनीद', ३. 'शैवमथ चान्त्यं' ४. 'सा॥ इति द्वादश ब्रह्मपूर्वमहतां बलिद्रव्यकाणि क्रमेणोदितानि । द्वितीयं तृतीयं च तद्देवतावद् वैपर्यस्य कार्यं गृहे द्रव्यकं च ॥ हा' ख. पाठः।

विवरणम्

अष्टमं गुलभुवेति । गौलान्धसा । त्रिमध्वोदनैरिति । त्रिमधुरान्धसा । शिवे सद्विपमुख इति । शर्वविघ्न इत्येतदनुवादः । अन्यन्निशादध्युचतृक्रस-रेणेति रुद्रबलिः । कृसरस्तिलौदनम् । अन्त्यं साज्यदुग्धान्धसेति शिवबलिः ॥ १९ ॥

गुहेऽत्र निःश्यामकराजमाषे बीजे विपर्यस्तमुपाद्ययुग्मम् ।
स्कन्दग्रहेभ्यो बलिरष्टमेऽह्नि गौलेन दौग्धेन ततः परस्तात् ॥

विमर्शिनी

गुहे अत्र बलिविधौ निःश्यामकराजमाषे श्यामैराजमाषाभ्यां रहिते बीजे उपाद्ययुग्मं द्वितीयतृतीये देवते विपर्यस्तमिन्द्रभूतक्रमेण । तथा तद्बलि-द्रव्ययुग्ममर्पयेत्यर्थः । तत्राष्टमेऽह्नि स्कन्दग्रहेभ्यो गौलेन बलिर्भवति । ततः परस्तात् स्कन्दग्रहेभ्य एव दौग्धेन च ॥ २० ॥

विवरणम्

विपर्यस्तमुपाद्ययुग्ममिति । इन्द्रभूतेत्यमुना क्रमेणेत्यर्थः । दौग्धेन ततः परस्तादिति । यदुक्तम्—'अष्टमं नवमं तथा । गुलान्नं पायसं स्कान्द-मि'ति ॥ २० ॥

हारिद्रं दधिसक्तुलाजपललाढ्यं भूतकूराह्वयं
प्राचीनं तिलतण्डुलं परमुडुम्बं लाजधानान्वितम् ।
याक्षं नागमुशन्ति केररसशालीपिष्टसक्तूत्तरं
पाथोजाक्षतमन्नपूपमपरं गौलोदनं सप्तमम् ॥ २१ ॥

दिवसेऽष्टमे पयोन्नं कृसरं नवमे पयोन्नमत ऊर्ध्वम् ।
द्रव्याणि विष्णुदुर्गाहरीशषाण्मातुरेष्वाहुः ॥ २२ ॥

विमर्शिनी

विष्णुदुर्गाहरीशषाण्मातुरेषु प्राचीनं प्राग्भवं दधिसक्तुलाजपललाढ्यम् । (ലാജം = മലർ. പലലം = എള്ളുമാവുത്തരി) हारिद्रं निशाचूर्णेन सह पक्वमन्नं भूतकूराह्वयं भूतकूरमिति सर्वत्र प्रसिद्धम् उशन्ति इच्छन्ति । परं द्वितीयं तिलतण्डुलं तिलेन तण्डुलेन च सहितं हविरित्यर्थः । अत्र सर्वत्र तत्तदुक्तद्रव्येण सह

४. 'माकरा' ख. पाठः.

हविर्योज्यम् । याक्षं तृतीयं लाजधानान्वितम् उडुम्बम् । (ധാനാ—അരിവറുത്തു് · ഉഡുംബം—ഉഴുന്ന്) नागं चतुर्थं केररसशालीपिष्टसक्तु नालिकेरक्षीरं शालीपिष्टं सक्तु च । उत्तरं पञ्चमं पाथोजाक्षतम् । पाथोजं पद्मम् । अपरं षष्ठम् अन्नपूपम् अन्नमपूपं च । सप्तमं गौलौदनम् । अष्टमे दिवसे पयोन्नम् । नवमे कृसरम् । अत ऊर्ध्वं सर्वेष्वहस्सु पयोन्नमेवेति द्रव्याण्याहुः । बुधा इति शेषः ॥ २१, २२ ॥

विवरणम्

हारिद्रमिति । विष्णुदुर्गाहरीशषाण्मातुरेष्वाहुरित्युपर्यन्वयः । प्राचीनमिति भूतबलिम् । परमिति पितृबलिम् । उत्तरं पाथोजाक्षतमित्यन्वयः । पाथोजं पद्मम् । अन्नपूपमपरमिति । पूपोऽप्यपूप एव ॥ २१,२२ ॥

भूतान्नैस्तैलमांसौदनरजनिरजःसक्तुभिर्लाजधाना-
दध्यौडुम्बैस्तथा तण्डुलविमलरजःसक्तुकेरीपयोन्नैः ।
स्यात् पद्मव्रीहिदूर्वाक्षतयवतिलसिद्धार्थगन्धैर्गुलान्नै-
र्दौग्धान्नैर्दाधिकान्नैर्बलिरिह कुसुमान्नैः क्रमाद् भूतनाथे ॥

विमर्शिनी

भूतनाथे क्रमात् पूर्वं भूतान्नैः भूतकूरैः । पुनः तैलमांसौदनरजनिरजःसक्तुभिः । तैलमभ्यङ्गम् । मांसं मोदकेन कल्पितम् । अन्यानि स्पष्टानि । पुनः लाजधानादध्यौडुम्बैः । एतान्युक्तानि । तथा पुनः तण्डुलविमलरजःसक्तुकेरीपयोन्नैः तण्डुलचूर्णं सक्तु नालिकेरक्षीरमन्नं च, एतैः । पुनः पद्मव्रीहिदूर्वाक्षतयवतिलसिद्धार्थगन्धैः, एते प्रसिद्धाः । पुनः गुलान्नैः । पुनर्दाधिकान्नैः दध्ना सह पक्वहविर्भिः कुसुमान्नैः । इह बलिविधौ एतैर्बलिः स्यात् ॥ २३ ॥

विवरणम्

भूतान्नैरिति भूतकूराभिप्रायम् । यत्रौदनो नोक्तो यथा तिलतण्डुलं परं लाजधानादध्यौडुम्बैरिति, तत्राप्योदनयोग इष्यते । मांसस्थाने मोदको भवति ॥ २३ ॥

---

१. 'मसमाने मो' ख. ग. पाठः.

पौर्वाह्णिके प्रत्तबलीन् सुरूपान्
स्वारूढपीठादिचितीनथैतान् ।
बीजाङ्कुरान् मन्त्रिवरोऽधिवास-
कर्मण्यमुष्मिन् विनियोजयेच्च ॥ २४ ॥

विमर्शिनी

अथाधिवासकर्मणि तद्विनियोगविधानमाह—**पौर्वाह्णिक** इति । अथ मन्त्रिवरः मन्त्रदेवतयोरैक्यं विद्वान् । अधिवासकर्मदिने पौर्वाह्णिके प्रातःकालपूजानन्तरं प्रत्तबलीन् प्रकर्षेण दत्तबलीन् । सुरूपान् शोभनवर्णान् । स्वारूढपीठादिचितीन् स्वस्मिन् योजितपीठादिगतचैतन्ययुक्तान् बीजाङ्कुरान् । अमुष्मिन्नधिवासकर्मणि विनियोजयेच्च । प्रतिमायाः परितः संस्थाप्य तद्विभूतित्वेन कल्पयेदित्यर्थः ॥ २४ ॥

विवरणम्

अधिवासदिने विशेषं वदन् विनियोगमप्याह—**पौर्वाह्णिक** इति । प्रातस्सवन एव प्रत्तबलीन् दत्तबलीन् । सुरूपानिति । यदुक्तम्— 'शुभं पीतेषु शुक्लेषु समेषूर्ध्वेष्वृजुष्वपी'ति । स्वारूढपीठादिचितीनिति पीठोद्वासनं, तोरणध्वजादिसम्भवे तदुद्वासनमप्युक्तम् । अमुष्मिन्निति । भाविनि अधिवासकर्मणि मन्त्रिवरो विनियोजयेदिति ॥ २४ ॥

संस्थाप्य केतुं बलिपीठबाह्ये
घण्टापताकानिजवाहनाढ्यम् ।
त्रिसन्ध्यमभ्यर्च्य किरेद् बलिं च
तत्प्रक्रियां वच्मि महोत्सवोक्तौ ॥ २५ ॥

विमर्शिनी

ध्वजस्थापनस्यापि कर्तव्यतामाह — **संस्थाप्येति** । (बलिपीठबाह्ये) बलिपीठस्थानस्य बाह्ये घण्टापताकानिजवाहनाढ्यं घण्टया पताकया निजनिजवाहनेन च युक्तं केतुं संस्थाप्य । त्रिसन्ध्यं सन्ध्यात्रयेऽप्यभ्यर्च्य बलिं किरेच्च । महोत्सवोक्तौ महानुत्सवो महोत्सवस्तदभिधाने । (तत्प्रक्रियां) तत्प्रकारं वच्मि वक्ष्यामीत्यर्थः ॥ २५ ॥

---

१. 'नारू क. पा. २. 'वं' ख. पाठः.

विवरणम्

तत्प्रक्रियां वच्मीति वदन् प्रतिष्ठायामनियतोऽयं ध्वज इत्यपि सूचितवानिति ॥ २५ ॥

अधिवासविधानवासरात् प्रा-
गथ तुर्येऽहनि साधकः सुक्लृप्ताम् ।
प्रतिमां परिगृह्य कारुवर्या-
दपराह्णेऽप्स्वधिवासयेत शैलीम्[2] ॥ २६ ॥

विमर्शिनी

अथ प्रतिमापरिग्रहादिकं विधत्ते — अधिवासेति । अथ साधकः अधिवासविधानवासरात् । प्रतिष्ठाकर्मणः पूर्वदिवसोऽधिवासकर्मवासर इति पूर्वमेवोक्तम् । तस्मात् प्राक् तुर्ये चतुर्थेऽहनि । अपराह्णे मध्यकालातीते । शैलीं शिलासम्बन्धिनीम् । सुक्लृप्तां लक्षणकौशलेन च शुभावयवसंस्थानकल्पितां प्रतिमाम् । कारुवर्यात् शिल्पिप्रवरात् परिगृह्य अप्सु अधिवासयेत ॥ २६ ॥

विवरणम्

अथ प्रतिमापरिग्रहं प्रस्तौति — अधिवासविधानवासरादिति । शैलीं शिलामयीं प्रतिमाम् ॥ २६ ॥

स्नात्वा समाचम्य समञ्चितात्मा
मन्त्री समभ्यर्च्य गणाधिनाथम् ।
सन्तर्प्य विप्राञ्छिवदिक्प्रक्लृप्ते
तन्मण्डपे नेत्रविधिं विदध्यात् ॥ २७ ॥

विमर्शिनी

तत्क्रियाक्रममाह — स्नात्वेत्यादिभिः । मन्त्री स्नात्वा तदर्थं मन्त्रस्नानं कृत्वा । समाचम्य तथा मन्त्राचमनमपि विधाय । समञ्चितात्मा क्वचिच्छुद्धे प्रदेशे उपविश्य सकलीकरणशङ्खपूरणात्माराधनकृद् भूत्वा गणाधिनाथं समभ्यर्च्य अग्रतः स्वस्तिके शालिदर्भादिभिः क्लृप्ते पीठे यथाविधि शोधितं सुवर्णमयं चषकं संस्थाप्य कूर्चविन्यासानन्तरं मधु च सममासिच्य[3] मूलेनार्च-

१. 'स्व' क. पाठः. २. 'लीम् ॥ स्विष्टात्माज्यमधू' ख. पाठः. ३. 'ते' क. पाठः.

यित्वा विप्रान् दानैः सन्तर्प्य शिवदिक्प्रक्लृप्ते तन्मण्डपे गत्वा नेत्रविधिं नेत्रोल्लेखनविधिं विदध्यात् ॥ २७ ॥

विवरणम्

समश्रितात्मेति देहशुद्ध्यादि सर्वमुक्तम् । मन्त्रीति । तत्प्रतिमोचितमन्त्राभिज्ञः । शिवदिक्प्रक्लृप्ते तन्मण्डप इति । प्रासादस्यैशभागे प्रागुदीरितशिल्पिनिलयाग्रदेशे रचिते विम्बपरिग्रहमण्डपे इत्यर्थः । अत्र कार्याल्पत्वान्मार्जनलेपनाभ्यामेव शुद्धिः स्यात् । वितानप्रदीपाद्युचितमेव ॥ २७ ॥

संयोज्याज्यमधू सुवर्णचषके सञ्जप्य मध्वृक्त्रिकं
शुद्धस्वालयसम्मुखीनशयनीयन्यस्तबिम्बाक्षिणी ।
सूच्यग्रेण विलिख्य साज्यमधुना तक्ष्णा समुत्कीर्य ते
प्रोक्ष्यापूर्य तथैव साज्यमधुना शय्यादि तक्ष्णेऽर्पयेत् ॥ २८ ॥

विमर्शिनी

कथं तदित्यत्राह — संयोज्येति । सुवर्णचषके संयोजितं तदादाय मध्वृक्त्रिकं 'मधु वाता' इति तृचं सञ्जप्य । शुद्धस्वालयसम्मुखीनशयनीयन्यस्तबिम्बाक्षिणी शुद्धे प्रासादाभिमुखशय्यायां शयनीये न्यस्तस्य बिम्बस्याक्षिणी नेत्रे । साज्यमधुना आज्यमधुयुक्तेन सूच्यग्रेण विलिख्य । तक्ष्णा ते अक्षिणी समुत्कीर्य स्पष्टीकरणं कारयित्वा । जलेन प्रोक्ष्य तथैव तेन साज्यमधुना आपूर्य पुनः शय्यादि सुवर्णचषकादिकं च तक्ष्णेऽर्पयेत् दापयेत् ॥ २८॥

विवरणम्

संयोज्याज्यमधू सुवर्ण(झ ? च)षक इति । (झ ? च)षकं वृत्तिकास्थण्डिले दर्भसंस्तरे (झ ? च)षकं न्यग्बिलं निधाय अस्त्रेण प्रोक्ष्य शोषणादि कृत्वोत्तानिते प्रणवेनाज्यमधुनी निषिच्य संयोज्य तस्यापि शोषणादि कृत्वा प्रणवेन पूजयेत् । सञ्जप्य मध्वृक्त्रिकमिति । 'मधु वाता' इत्यादि मन्त्रत्रयम् । शुद्धस्वालयेति । *शुद्धे स्वालयसम्मुखीने शयने संवेशिताया अर्चाया दृशौ ।

१. 'ना' ख. पाठः. २. 'संयोज्य म, ३. 'जप्त्वा स्वा', ४. 'सूच्या तया शिल्पिना तद्दृष्टी सुसमे विधाप्य शयनाद्यस्मै पुनर्दापयेत् ॥ शय्या', ५. 'संस्थ झ' क. पाठः.

* 'शुद्धस्वालयसम्मुखीनशयने संवेशितार्चादृशौ' इति विवरणपाठः.

साज्यमधुना सूच्यग्रेण विलिख्येति योजनीयम् । शयनं शय्या स्वस्तिकादौ व्रीहिवस्त्रादिकल्पिता । तस्याः पूर्वदिक्छिरस्कतया समास्तरणे स्वालयसम्मुखीनत्वं स्यात् । शय्यायाः शुद्धिश्च भवाम्बरकृतत्वमस्त्रप्रोक्षणादि च । शयने संवेशनं शिल्पिप्रवरेण तदुचिततया शायनम् । हरिहरेऽक्षित्रयविलेखनं भवति । बिम्बमस्त्रेण प्रोक्ष्य तेन सूच्यग्रप्रदेशेन तदाज्यमधू समादाय तेन दक्षिणवामनेत्रयोः, त्र्यक्षसम्भवे पुनर्ललाटनेत्रे चोल्लेखनं कार्यम् । तक्ष्णा समुत्कीर्य ते इति । ततः शिल्प्याचार्येण ते नेत्रे समुत्कीर्णे स्वशस्त्रेण समुन्मेषिते कारयित्वेत्यर्थः प्रोक्ष्येति पुनर्नेत्रयोः प्रोक्षणमुक्तम् । साज्यमधुना तथैवापूर्येति सूच्यग्रपूर्वकमापूरणमुक्तम् । शय्यादि तक्ष्णेऽर्पयेदिति । शयन(झ:च)षकादि तदुपयुक्तं सर्वं यजमानेन तस्मै शिल्पिने प्रदापयेदित्यर्थः ॥ २८ ॥

शय्यायां शयितस्य शर्वगुहयोर्बिम्बस्य दद्याद् बलिं
राज्याज्योज्ज्वलपायसेन परितः प्राग् देवताभ्योणुना ।
मूर्धन्यक्षतसर्षपाच्छकुसुमं न्यस्येत् त्रिनेत्रे ततः
सूत्रं चन्दनचर्चितं च मणिरेखायामनेन क्षिपेत् ॥ २९ ॥

विमर्शिनी

शिवस्कन्दयोर्विशेषमाह— शय्यायामिति । प्राक् नेत्रोल्लेखनात् प्राक् । शय्यायां शयितस्य शर्वगुहयोर्बिम्बस्य परितो राज्याज्योज्ज्वलपायसेन सर्षपाज्ययुक्तेन पायसेन । देवताभ्योणुना 'देवताभ्यः पितृभ्योऽथे'त्यादिमन्त्रेण बलिं दद्यात् । तत्र त्रिनेत्रे मूर्धनि शिरसि । अक्षतसर्षपाच्छकुसुमम् अक्षतसर्षपयुक्तं श्वेतपुष्पं न्यस्येत् । ततश्चन्दनचर्चितं चन्दनपङ्करूषितं (सूत्रम्) अनेन 'ओं नमो भगवत' इत्यादिमन्त्रेण मणिरेखायां क्षिपेत् ॥ २९ ॥

विवरणम्

शिवादौ विशेषमाह—शय्यायामिति । शयितस्य प्रागुक्तवत् संवेशितबिम्बस्य मूर्धनीति सम्बन्धः । प्राग् तद्बिम्बं परितः प्रागाद्यष्टदिक्षु राजिभिराज्येन च व्यामिश्रितेन पायसेन देवताभ्यः पितृभ्योऽथेति पुरोक्तमन्त्रेण बलिं दद्यात् वाद्यघोषणमिह सामान्यासिद्धम् । शिवे भेदमाह— त्रिनेत्रे तत इति । लक्षणं मणिरेखा पार्श्वरेखे चेत्येतत् सर्वं गतपटले लक्षितम् । क्षिपेदित्यारफालनाभिप्रायम् ।

१. 'त्वा व' ख. पाठः.

हस्तद्वयेनाङ्गुष्ठोपकनिष्ठिकाभ्यां गन्धाप्लुतं सूत्रमग्रयोर्गृहीत्वा मणिरेखास्थाने समास्फालनरूपेण विन्यसेदिति। अनेनेति वक्ष्यमाणमन्त्रग्रहणम् ॥ २९ ॥

"ओं नमो भगवते रुद्राय हिरण्यरेतसे महात्मने शिवाय शिवरूपाय उमाप्रियाय नमो नमः" इति।

विमर्शिनी

ततस्तन्मन्त्रं लिखति— 'ओं नम' इत्यादि।

सम्प्रोक्तक्रमतो विलोचनविधिं कुर्याद् गुहेऽथेश्वरे-
ऽघोरेणाज्यमधू सुयोज्य मधुमन्मन्त्रं प्रजप्यामुना।
सूच्यग्रेण विलिख्य लक्ष्म मणिरेखापार्श्वरेखान्वितं
तक्ष्णा तद् विरचय्य सर्वमथ मध्वाज्येन सम्पूरयेत् ॥ ३० ॥

विमर्शिनी।

अथ गुहे सम्प्रोक्तक्रमतो विलोचनविधिं नेत्रोल्लेखनं कुर्यात्। ईश्वरे अघोरेणाज्यमधू सुयोज्य। मधुमन्मन्त्रं 'मधु वाते'ति तृचं प्रजप्य। 'अमुना मधु वाते'ति तृचेन साज्यमधुना सूच्यग्रेण मणिरेखापार्श्वरेखान्वितं लक्ष्म विलिख्य। तक्ष्णा तत् लक्षणादिकं विरचय्य। अथ सर्वं लक्ष्मादिकं रेखासमूहं मध्वाज्येन सम्पूरयेत् ॥ ३० ॥

विवरणम्

स्कन्देऽपि भेदमाह — सम्प्रोक्तक्रमतो विलोचनविधिं कुर्याद् गुह इति। संवेशितार्चादृशौ सूच्यग्रेणेति नेत्रविलेखनं तत्समुत्किरणं पुनस्तत्पूरणं चोक्तम्। शिवे पुनर्भेदमाह — अथेश्वर इति। सुयोज्येति। प्राग्वदस्त्रप्रोक्षणादिपूर्वकं सुवर्ण(ञ ? च)षक इति प्रकरणादवसेयम्। लक्ष्मेति लिङ्गगतं लक्षणम्। मणिरेखया पार्श्वरेखाभ्यां चान्वितमिति समासः। तत्सर्वमिति। लक्षणादित्रयम्। सम्पूरयेदिति। तत्सर्वमित्यनुषङ्गः। शय्यादि तक्ष्णोऽर्पयेदिति सर्वत्र समानम् ॥ ३० ॥

सन्तुष्टेन ततो निजायतनवद् भद्रासने स्थापितं
तक्ष्णा तत्करतः प्रगृह्य यजमानेनाथ तत् प्रार्पितम्।

1. 'मन्त्री तत्परिपूर्य तेन रचयेत् तक्ष्णा यथालक्षणम् ॥ सन्तु' ख. पाठः।

**तारेण प्रविलोक्य तच्चरणयोस्तारं प्लुतं प्रोच्चरन्**
**गृह्णीयान्मनुबिम्बमुद्धतकुशाग्राभ्यां कराभ्यां गुरुः ॥ ३१ ॥**

विमर्शिनी

तत्परिग्रहप्रकारमाह—**सन्तुष्टेनेति** । अथ गुरुः सन्तुष्टेन हिरण्यवस्त्रादिदानतस्तुष्टेन तक्ष्णा । तत उद्धृत्य निजायतनवद् निजप्रासादो यद्दिङ्मुखस्तद्दिङ्मुखं भद्रासने स्थापितम् । यजमानेन तत्करतः कारुकरतः प्रगृह्य प्रार्पितम् । तद् मनुबिम्बं तारेण प्रविलोक्य तारं प्लुतं प्रोच्चरन् । उद्धतकुशाग्राभ्याम् ऊर्ध्वगतदर्भाग्राभ्यां कराभ्याम् । तच्चरणयोरभिवाद्यरूपेण गृह्णीयात् ॥ ३१ ॥

विवरणम्

**सन्तुष्टेन तक्ष्णेति** । दक्षिणादिभिरिति शेषः । यदा बिम्बं क्रीतं स्यात् तदाप्येतत् सर्वं कार्यम् । निजायतनवदिति । प्राग्द्वारे प्रासादे प्राङ्मुखं, प्रत्यग्द्वारे प्रत्यङ्मुखमिति भावः । ततो भद्रासन इति । ततः शय्यातलादुद्धृत्य भद्रासने तेनैव तक्ष्णा स्थापितम् । अथ तत्करतः प्रगृह्य यजमानेन प्रार्पितं तदिति । यथोक्तं स्थपतिरग्रतस्तिष्ठन् पृष्ठतः स्थितस्य कर्तुर्हस्ते दद्यात् । कर्ता प्रतिमां स्पृशन् तिष्ठेत् । अथ आचार्यस्तत्समीपमागत्याचम्य सकलीकृतात्मेत्यादि । तारेण प्रविलोक्येति । पुरतस्तिष्ठन्निति भावः । मनुबिम्बं तच्चरणयोः कराभ्यां गृह्णीयादित्यन्वयः । तारेण प्रविलोक्यैतदुचितम् । शिवेऽप्येतत् सर्वमनुसरणीयम् । *बुध इति । दक्षिणपादे दक्षिणकरेण सव्यपादे सव्यकरेण च दीर्घदर्भाग्रेण युगपत् सङ्ग्रहणमुक्तम् । यद्वा पीठब्रह्मशिलाकर्मबिम्बानां बलिपीठवाहनादीनां च सहाधिवासोपपत्तौ तेषामपि बिम्बोपयुक्तशेषेण यथास्वं नेत्रोल्लेखनादि पुनश्शोधनादि च सर्वमुक्तम् । वक्ष्यति च—'पीठं ब्रह्मशिलायुतं कृतजलावासान्तमुक्तक्रमाद्' इति । तथा — "कुर्यात् तुर्यदिनात्यये यदि महापीठप्रतिष्ठापनम्" इत्यादि ॥ ३१ ॥

**पाथोदर्भकधेनुबालघृतमासूराम्बुभिः श्रीपतौ**
**साज्यक्षौद्रकवल्कमृद्भसितचूर्णैर्गन्धतोयैः शिवे ।**

१. 'बुधः ॥' क. २. 'सनादु' क. पाठः. ३. 'प्रोक्ष्यैतदुचितम् ।' ख. पाठः.

* 'गुरुः' इत्यस्य स्थाने 'बुध' इति विवरणरीत्या पाठः.

अपूक्षौद्राज्यकदर्भवल्कसुमृदद्भिश्चाजितेशे मधू-
र्ध्वस्थाज्येन हरीरितेन महिषारावम्बुदर्भादिना ॥ ३२ ॥

दर्भाद्यप्पशुलूमगोघृतमसूराब्गोमयाद्भिर्गुहे
पाथोमृन्निजकल्कदर्भजलमध्वाज्यैः समासूरकैः ।
विघ्ने शास्तरि साम्बुदर्भकुशमृत्त्वग्गव्यकैः शालिपि-
ष्टाद्भिश्च क्रमतः स्वमूलमनुना स्वास्त्रेण वा शोधयेत् ॥

विमर्शिनी

गृहीतस्य विम्बस्य शोधनमाह— पाथ इति । श्रीपतौ पाथोदर्भक-धेनुवालघृतमासूराम्बुभिः क्रमतः स्वमूलमनुना स्वास्त्रेण वा शोधयेत् । अयमत्र शोधनप्रकारः — उक्तमन्त्रेण पूर्वं (पाथो?) जलेनाभिषिच्य दर्भकैः संघृष्य धेनुवालेन च संघृष्य घृतेनाभिषिच्य (മാസൂരം=കടലക്കായുള്ളിട) तेनोद्वर्त्याम्बुभिः क्षालयेदिति । एवं सर्वत्रानुरूपेण शोधनं कार्यम् । स्वमूलमनुना स्वास्त्रेण वेति प्रत्येकं सम्बध्यते । शिवे साज्यक्षौद्रकवल्कमृद्भ-सितचूर्णैः आज्यसहितेन क्षौद्रेण । क्षौद्रं मधु, वल्कास्त्वचः, मृन्मृत्तिका, भसितं भस्म चूर्णं च । एतैर्गन्धतोयैश्च । अजितेशे अप्क्षौद्राज्यकदर्भवल्कसुमृद-द्भिश्च । महिषारौ हरीरितेन हरावुक्तेन अम्बुदर्भादिना । मधूर्ध्वस्थाज्येन आ-ज्यात् पूर्वं मधुना च । गुहे दर्भाद्यप्पशुलूमगोघृतमसूराब्गोमयाद्भिः । दर्भा-दिः दर्भा मृदस्त्वचश्च, अप् जलं, पशुलूम पशुवालं, गोघृतमाज्यमेव, मसूर उक्तः, अप् गोमयम् अम्बु च, एतैः । विघ्ने पाथोमृन्निजकल्कदर्भजलमध्वा-ज्यैः समासूरकैः । निजकल्काः निजास्त्वचः । शास्तरि साम्बुदर्भकुशमृत्त्वग-व्यकैः शालिपिष्टाद्भिश्च ॥ ३२,३३ ॥

विवरणम्

स्थूलं विम्बशुद्धिमाह — पाथोदर्भकेति । शोधयेदित्युपरि सम्बन्धः । इह पूर्वमस्त्रप्रोक्षणतालत्रयाद्यौचित्यसिद्धम् । जलदर्भादि सर्वं दर्भसंस्तरे संसाद्य अस्त्रप्रोक्षणशोषणादि कृत्वा प्रणवेन पूजयेत् । गोबालेऽप्यस्त्रप्रोक्षणं स्यात् । मासूरं मसूरपिष्टमुद्वर्तनीयम् । साज्येति मध्वाज्ययोगविकल्पोऽपि सूचितः । वल्ककल्कशब्दौ त्वग्वचनौ । हरीरितेन मधूर्ध्वस्थाज्येन अम्बुदर्भादिनेति ।

1. 'ले तेना' ग. पाठः.

जलदर्भगोवालमध्वाज्यमासूरिपिष्टजलैरित्यर्थः । दर्भादिपदेन दर्भमृत्त्वग्ग्रहणम् । लूमशब्दो वालपर्यायः । विघ्न इत्यधः सम्बन्धनीयम् ॥ ३२,३३ ॥

मुद्गनिशायवशालीगोधूमसुवर्णजानि चूर्णानि ।
स्थाणौ स्वबिम्बकलशाद्यवगन्तव्यं मृदादि सर्वेषु ॥ ३४ ॥

विमर्शिनी

चूर्णान्याह — मुद्गेति । स्थाणौ मुद्गनिशायवशालीगोधूमसुवर्णजानि चूर्णानि । (ഭഗവല്ലമം=ഭഗവതമ്യ്) सर्वेषु मृदादि मृत्त्वगादि स्वबिम्बकलशाद्यवगन्तव्यं स्वबिम्बशुद्धिकलशादितो ज्ञातव्यम् ॥ ३४ ॥

विवरणम्

स्वबिम्बकलशाद्यवगन्तव्यमिति । आदिशब्देनाभिषेकग्रहणम् । शिवेऽभिषेके माधूकब्रह्मशैरीषकपनसरसालाः, अजितगिरिशयोः प्लक्षहीनाः क्षीर्याख्या इति त्वचः । बिम्बकलशे स्थाणौ नाकूक्षतीर्थद्विपशिखरिनदीवेदिकाचत्वरोत्था इति मृदः । कथितकथितवृक्षत्वक्करीषं सुदग्धं भसितमिति सामान्यसिद्धं भस्मेति हरिहरे । क्षीरिद्रुमद्विजशमीखदिरं कुमार्यां, हरीशे खदिरोनितं तदिति त्वचः । सरिदुभयतटक्षेत्रनाकूक्षजाता मृत्स्नाः शार्ङ्गीश इति मृदः । स्कन्दे वेदीक्षेत्रगजोक्षशृङ्गगिरिवल्मीकोद्भवाः सरिदब्धिजे शरभव इति मृदः । न्यग्रोधद्रुरुदुम्बरश्चलदलप्लक्षौ रसालद्विजौ शैरीषस्समधूकदारुरपि सेनान्यामिति त्वचः । गणपतौ शैवोक्ता एव मृदः । किंतु क्षेत्राखुजारच्युतचरमसरिज्जा इति विशेषः । विघ्ने पयोद्रुमकपित्थमधूकबिल्वमिति त्वचः । शास्तरि करिकिरिवृषवल्मीकवेणुद्भवाश्चेति मृदः । प्रभेशे क्षीर्याख्या इति त्वचः । इति ॥ ३४ ॥

अथालङ्कृत्य गन्धाद्यैः कुर्यान्नीराजनं शिवे ।
विष्ण्वादौ निजहोमान्ते विघ्नादौ कौतुकान्ततः ॥ ३५ ॥

विमर्शिनी

अथ शिवे गन्धाद्यैरलङ्कृत्य नीराजनं कुर्यात् । विष्ण्वादौ विष्णुदुर्गास्कन्देषु । निजहोमान्ते निजाक्षतहोमावसाने । विघ्नादौ विघ्नशर्वश्रीशयोः । कौतुकान्ततः कौतुकबन्धनानन्तरम् । अत्र शिवशब्दः शास्तुरप्युपलक्षणार्थः ॥ ३५ ॥

---

१. 'जाख्वारच्यु' क. पाठः. २. 'एवं विशोधितं बिम्बं गन्धपुष्पाद्यलङ्कृतम् । निधाय तत्र दर्भादि त्यक्त्वा भूमिं विशोधयेत् ॥ अ' ख. पाठः.

विवरणम्

अथालङ्कृत्य गन्धाद्यैरिति । निजानिजोक्तशोधनानन्तरमित्यर्थः । गन्धाद्यैरिति गन्धपुष्पाक्षतस्रगादिग्रहणम् । विष्ण्वादाविति दुर्गास्कन्दग्रहणम् । विघ्नादाविति हरिहरशास्तृग्रहणम् ॥ ३५ ॥

अग्रेऽग्निं विनिधाय तत्र विधिवद् विष्णौ सदुर्गागुहे
प्रत्येकं शतशः शमीदलमिलद्भिः साज्यकैरक्षतैः ।
सव्याहृतिभिर्जुहोतु जिनवर्णेनात्र पूर्णा हरौ
सम्पातं प्रतिमाङ्गपूर्तिविधये पादादिषु प्रार्पयेत् ॥ ३६ ॥

विमर्शिनी

अक्षतहोममाह—अग्र इति । सदुर्गागुहे विष्णौ अग्रे प्रतिमाया अग्रभागे । विधिवद् उल्लेखनादिपूर्वकम् अग्निं विनिधाय । तत्राग्नौ । शमीदलमिलद्भिः शमीपत्रमिश्रैः । साज्यकैरक्षतैः सव्याहृतिभिः 'ओं भूः स्वाहा' इत्यादिभिः 'ओं सत्यं स्वाहा' इत्यन्तैर्मन्त्रैः प्रत्येकं शतं जुहोतु । हरौ अत्र अक्षतहोमे । जिनवर्णेन गायत्र्या । पूर्णा पूर्णाहुतिः स्यात् । तेषु देवेषु संपातं प्रतिमाङ्गपूर्तिविधये प्रतिमाया अङ्गपरिपूरणार्थम् । पादादिषु मूर्धान्तेषु अर्पयेत् ॥ ३६ ॥

विवरणम्

तत्राग्रेऽग्निमित्यन्वयः । विधिवदित्युल्लेखनादिकमग्नौ पूजादिकं प्रणवव्याहृतिपीठमन्त्राज्यहोमादिकं चोक्तम् । सव्याहृतिभिः प्रत्येकं शतश इत्यन्वयः । शतं सर्वत्राष्टोत्तरं प्रथितम् । शमीदलमिलद्भिरिति । शमीपत्रमिश्रैः । आज्यसंस्कृतावक्षतानामपि पर्यग्निकरणं भवति । अत्र हरौ जिनवर्णेन पूर्णेति । विष्णौ स्वगायत्र्या पूजा मन्त्रान्ते शतशतान्ते च पूर्णाहुतिः । दुर्गायां गुहे च निजमूलेनान्यदेवेष्वपीति भाविरीत्या तत्तन्मूलेनैवेत्यर्थः । प्रतिमाङ्गपूर्तिविधय इति । सुपूर्णलक्षणमपि बिम्बं परमसूक्ष्मोनातिरेकसम्भवादपूर्णमिव स्यात् । तदीयादृष्टक्षपणेन पूर्णतासम्पादनार्थमेतदिति भावः । शैवादिषु त्वेतदधिवासे कार्यम् । यद् वक्ष्यति हि — 'प्रागष्टोर्ध्वसहस्रम्' इत्यादि । पादादिष्विति । पादजानुगुह्यनाभिहृन्मुखमूर्धस्विति । प्रार्पयेदिति । पुष्पाञ्जलिः सामान्यतो लभ्यते ॥ ३६ ॥

---

१. 'होमान्ते प्रतिमात्मनि प्रतनुयात् सम्पातपातादिकम् ॥ इ', ख. पाठः.

इष्ट्वा गन्धादिभिः कौतुकमथ कलयेन्मूलतो विघ्नशर्व-[1]
श्रीशे ताराभिरुद्धोपचरणमनुनोक्ताहुतेः प्राक् कुमारे ।
चण्ड्यां चक्रेण वोर्ध्वं मुरजिति जलवासोद्धृतौ सोपचारे-
णाष्टार्णेनार्यके प्राङ् निजकलशविधेर्बीजमन्त्रेण मन्त्री ॥

विमर्शिनी

कौतुकबन्धनमाह—इष्ट्वेति । मन्त्री मन्त्रविशेषज्ञो गुरुः । विघ्नशर्व-श्रीशे च अथ शोधनानन्तरं गन्धादिभिरिष्ट्वा मूलतः कौतुकं कलयेत् । कुमारे उक्ताहुतेः अक्षतहोमात् प्राक् । ताराभिरुद्धोपचरणमनुना प्रणवपुटितो-पचारमन्त्रेण । चण्ड्यां दुर्गायाम् । उक्ताहुतेरूर्ध्वं वा पूर्वं वा चक्रेण सुदर्शन-मन्त्रेण । मुरजिति जलवासोद्धृतौ जलाधिवासादुद्धृते सति । सोपचारेणा-ष्टार्णेन । आर्यके निजकलशविधेः बिम्बशुद्धिकलशाभिषेकात् प्राग् द्वादशपटले वक्ष्यमाणेन बीजमन्त्रेण च ॥ ३७ ॥

विवरणम्

मूलतो विघ्नशर्वश्रीश इति । कौतुकमिदानीमेव बध्नीयात् । वोर्ध्व-मिति । उक्ताहुतेरूर्ध्वं वा प्रागेव वेत्यर्थः । मुरभिदि जलवासोद्धृताविति । वक्ष्यति च—'प्रतिसरं तत् साम्प्रतिकञ्च' इति । सोपचारेणेति । जितन्तान्वितेन । मन्त्रीति कौतुकोक्तमन्त्रस्य प्रणवरुद्धत्वं नमोन्तत्वं चोक्तम् । अयमिह क्रमः सम्पद्यते । शिवे शोधितेऽलङ्करणं नीराजनं च, कौतुकं नास्ति । विष्णौ अल-ङ्करणाक्षतहोमौ नीराजनं च । हरिहरे गणपतौ चालङ्करणम् । गन्धादिभिरिष्ट्वा कौतुकं नीराजनं च । स्कन्दे तु तथा कौतुकानन्तरमक्षतहोमो नीराजनं च । दुर्गायां स्कन्दवत् । अथवालङ्करणाक्षतहोमौ गन्धादिभिरिष्ट्वा कौतुकं नीरा-जनं च । शास्तरि शिववदिति ॥ ३७ ॥

स्थित्वा प्राच्यां नमस्त इत्यणुयुजा दर्भाग्रगर्भाञ्जलिः
क्षौमक्षिप्तससुक्तसर्षपसुवर्णोर्जस्वलं कौतुकम् ।

---

१. 'वि' ख. पाठः. २. 'वैं' क. पाठः. ३. 'बीजाणुनार्ये ध्रुवपरिपुटितेनोपचा-राणुनाथ । स्कन्दे प्रोक्ताहुतेः प्राक् महिषाजिति परं वा रथाङ्गेन तोयावासोद्धारे जितन्तोपस्कृतनिजमूलेन शार्ङ्गायुधे च ॥ स्थि, ख. पाठः. ४. 'भिदि ज' मूलकोशपाठः.

ऊर्णासूत्रसितं सुवर्त्य परिजप्य स्वाणुना सप्तधा
साङ्गुष्ठोपकनिष्ठिकाङ्गुलियुजा बध्नातु बाहूत्तमे ॥ ३८ ॥

विमर्शिनी

कौतुकबन्धनस्येतिकर्तव्यतां दर्शयति — स्थित्वेति । दर्भाग्रगर्भाञ्जलिः दर्भाग्रद्वयेनान्तर्गतमञ्जलिं बद्ध्वा । अग्रतः स्थित्वा नमस्त इत्यणुयुजा 'नमस्तेऽर्चे ! सुरेशानी'त्यादिमन्त्रद्वयेन प्रार्थ्य । क्षौमक्षिप्तसमुक्तसर्षपसुवर्णोर्जस्वलं क्षौमखण्डे क्षिप्तेन मुक्तासर्षपसहितेन सुवर्णेन तेजोवत् । ऊर्णासूत्रसितम् । (உரூண்ணாஸூத்ரம்—கம்பளிநூல்) तेन बद्धं कौतुकम् । साङ्गुष्ठोपकनिष्ठिकाङ्गुलियुजा अङ्गुष्ठसहिताभ्यामनामिकाभ्यां सप्तधा सुवर्त्य । स्वाणुना परिजप्य बाहूत्तमे दक्षिणकरे बध्नातु ॥ ३८ ॥

विवरणम्

स्थित्वेति । तिष्ठन् भूत्वेत्यर्थः । दर्भाग्रगर्भाञ्जलिर्नमस्त इत्यणुयुजा प्रार्थ्येत्यन्वयः । क्षौमक्षिप्तसमुक्तसर्षपसुवर्णोर्जस्वलमूर्णासूत्रसितमिति । एवं कौतुकविरचनक्रम उक्तः । क्षौमपट्टे मुक्तासर्षपसुवर्णं निक्षिप्तमूर्णासूत्रेण बद्धं कौतुकमित्यर्थः । ऊर्जस्वलपदेनास्य महावीर्यत्वं मङ्गल्यत्वं सर्वरक्षाकरत्वं चोक्तम् । कौतुकस्यास्त्रप्रोक्षणं शोषणादिकं तदुक्तमन्त्रेण पूजनमभिमन्त्रणं चार्थसिद्धम् । स्वाणुना परिजप्य बाहूत्तमे बध्नात्विति बन्धनप्रकार उक्तः । सप्तधा सुवर्त्येति जपसमये व्यापारः । अर्थाच्च मन्त्रस्य सप्तवारमावृत्तिरपि लभ्यते । बाहूत्तम इति । दक्षिणबाहौ । तदापि बहुबाहुसम्भवे प्रधानबाहौ नोपबाहौ । मन्त्रान्ते च बन्धनं भवति ॥ ३८ ॥

नमस्तेऽर्चे ! सुरेशानि ! प्रतीके ! विश्वकर्मणः ।
प्रभाविताशेषजगद्धात्रि ! तुभ्यं नमो नमः ॥ ३९ ॥
त्वयि सम्पूजयामीशं नारायणमनामयम् ।
रहिता योनिदोषैस्त्वमृद्धियुक्ता सदा भव ॥ ४० ॥

विमर्शिनी

विष्णुप्रार्थनामन्त्रद्वयं पठति — नमस्त इति ॥ ३९,४० ॥

त्वयि सम्पूजयामीशौ शम्भुनारायणौ सदा ।
इत्यादितत्तत्कल्पोक्तभिदयात्र मनुं पठेत् ॥ ४१ ॥

१. 'स्वा' क. पाठः.

विमर्शिनी

शिवनारायणादौ विशेषमाह — त्वयीति । अत्र कौतुकबन्धने । तत्तत्कल्पोक्तभिदया तत्तदागमोक्तभेदेन सह मनुं पठेद् उच्चरेत् ॥ ४१ ॥

विवरणम्

तत्तत्कल्पोक्तेति । यथा कार्त्तिकेयमनामयमित्यादि ॥ ४१ ॥

नमस्तेऽर्चे ! सुरेशानि ! विश्वावासे ! सुरारिणि ! ।
प्रभाविताशेषजगद्धात्रि ! तुभ्यं नमो नमः ॥ ४२ ॥
त्वयि सम्पूजयामीशे ! देवीं नारायणीं सदा ।
रहितेत्यादिरूपोऽत्र दुर्गोपस्थानमन्त्रकः ॥ ४३ ॥

विमर्शिनी

दुर्गाप्रार्थनमन्त्रे विशेषमाह पुनः — नमस्त इति । इत्यादिरूप इत्यादिस्वरूपः । दुर्गोपस्थानमन्त्रकः दुर्गाया उपस्थानमन्त्रः ॥ ४२,४३ ॥

विवरणम्

रहितेत्यादिरूप इति । 'रहिता योनिदोषैस्त्वमि'त्यादि । शेष उक्तः ॥ ४३ ॥

अर्चामथावेष्ट्य सदर्भवस्त्रैरारोप्य मन्त्री निपुणं रथादौ ।
छत्रध्वजाद्यैर्बहुवाद्यहृद्यं जलाधिवासाय नयेच्च तीर्थम् ॥ ४४ ॥

विमर्शिनी

अथार्चां सदर्भवस्त्रैरावेष्ट्य रथादौ याने । निपुणम् अप्रमादयुक्तमारोप्य । छत्रध्वजाद्यैः सह बहुवाद्यहृद्यं बहुभिर्वाद्यवादनेन हृद्यं मनोहरं यथा भवति तथा मन्त्री कनिक्रदादिमन्त्रं जपन् जलाधिवासाय तीर्थं नयेच्च ॥ ४४ ॥

विवरणम्

सदर्भवस्त्रैरावेष्ट्येति । वस्त्रेण बिम्बं सर्वतः समाच्छाद्य तद्बहिर्दर्भैराच्छाद्य बन्धनं कार्यम् । मन्त्रीति कवचेनाच्छादनमुक्तम् । यद्वा स्वास्त्रेण तालत्रयादिकमुक्तम् । तथा शाकुनस्वस्तिसूक्तादिजपश्च । रथादाविति तदुचितयानाद्यभिप्रायम् । तीर्थमिति नदीतटाकादिविकल्पोपलक्षणम् ॥ ४४ ॥

---

१. 'कः ॥ नेत्रं तत्र तदीयनेत्रमनुमूल्योङ्कारकैर्गोळतारार्चिष्कल्पनयोक्तकौतुकविधेः प्रागार्यके प्रोल्लिखेत् । ज्योतिर्लिङ्गमिदं यदीह परिभूषामात्रमाकल्पयेज्जायासत्यकबिम्बके यदि तथा सर्वं तयोश्चाचरेत् ॥ अथाङ्गुकाद्यैः परिभूष्य बिम्बं नीराज्य कृत्वा नि' ख. पाठः

तीरेऽवतार्य[1] सलिलं सकलीकृतात्मा
संशोध्य तत्र वरुणं परिपूज्य देवम् ।
तन्मन्त्रतश्च परिजप्य च वारुणाद्यं
कृत्वात्र बोधिफलकं प्रयजेत पाठम् ॥ ४५ ॥

विमर्शिनी

तीरे बिम्बमवतार्य सकलीकृतात्मा स्वस्य सकलीकरणादि कृत्वा । सलिलं शोषणादिभिः संशोध्य । तत्र वरुणं तन्मन्त्रतः स्वमूलतो देवं च परिपूज्य । वारुणाद्यं पञ्चवारुणात्मकं परिजप्य । अत्र बोधिफलकं कृत्वा अश्वत्थनिर्मितां सकूर्चां फलकां विन्यस्य तत्र पीठं प्रयजेत ॥ ४५ ॥

विवरणम्

तीरेऽवतार्येति । जलतीरे मार्जनादिशोधिते तामर्चां भद्रासने जलाभिमुखतया निधायेत्यर्थः । सलिलं संशोध्येति । जलेऽस्त्रप्रोक्षणं तालत्रयादिकरणं शोषणादिकं चोक्तम् । नाभिदघ्ने जले चतुष्पदीं प्रपां विधाप्य तत्रैतत्सर्वं कार्यम् । तत्र वरुणं परिपूज्येति । तन्मन्त्रत इति सम्बन्धनीयम् ।

"सुधा कुमुदिनी पूर्णा वारुणी विश्वतोमुखी ।
तरङ्गिणी च सुरसा सुशीलाप्यायिनी क्रमात् ॥"

इति नव शक्तयः । सर्वशक्तिकमलासनाय नम इति समष्टिमन्त्रः । ओं वां वरुणाय नम इति मूलम् । वां वीमित्यादिभिरङ्गानि । अङ्गाष्टनागेन्द्रादिवज्रादिभिरावरणपूजा । 'ध्रुवासु त्वास्वि'ति वा मन्त्रः । 'अष्टभिः सप्तभिः षड्भिः पुनस्तावद्भिरक्षरैः' इत्यङ्गानि । स्वच्छांशुकाभरणपाशाङ्कुशाभयवरकरस्वच्छपद्मस्थितो ध्येय इति । देवमिति । तन्मन्त्रतः परिपूज्येति समानम् । परिजप्य च वारुणाद्यमिति । 'तत्त्वेमम्मेऽवतेहेळस्त्वन्नो अग्न उदुत्तममि'ति पञ्च वारुणानि । गङ्गे च यमुने चैवेत्यादि ।

"इमा आपश्शिवास्सन्तु शुभाः शुद्धाश्च निर्मलाः ।
पावनाः शीतलास्सन्तु पूतास्सूर्यस्य रश्मिभिः ॥

1. 'र्य परिशोध्य च धारणाभिस्तीर्थाम्बुपीठमभिपूज्य जलाधिनाथम् । मन्त्री स्वमन्त्रकृतसन्निधिमर्चयित्वा तत्र स्वमूलमनुना प्रयजेच्च देवम् ॥ पञ्चवारुणजपा(दि) भाविते वारिणीह फलकं सकूर्चकम् । स्वस्य बिम्बविनिवेशनाय तत्रार्चयेच्च निजयोगविष्टरम् ॥ इ। ख. पाठः

इति । त्रिपञ्चसप्तवारं पुनर्मूलं चासकृज्जपेदित्यर्थः । कृत्वात्र बोधिफलकमिति । अत्र जलेऽश्वत्थकृतं फलकं निधायेत्यर्थः । तस्मिन्नस्त्रप्रोक्षिते कूर्चं न्यस्य तत्पीठं पूजयेत् ॥ ४५ ॥

हामादिस्वस्वबीजोर्ध्वगतनतिपरायाक्षरोद्यत्पृथिव्या-
द्याख्योद्भिन्नात्मने हुंफडिति मनुमुदीर्यासुमुद्घातवृत्त्या ।
आयम्यानेन हुंफट्पदकृतनमसोव्याप्य हृत्वा धराद्यं
ज्योतीरूपां ध्रुवेण प्रतिकृतिमुदके वासयेत् प्राक्शिरस्काम् ॥

विमर्शिनी

अत्र पूर्ववेष्टितानि वस्त्रादीन्यपास्याभिषिच्यालङ्कृत्य हामादिस्वस्वबीजोर्ध्वगतनतिपरायाक्षरोद्यत्पृथिव्याद्याख्योद्भिन्नात्मने हुंफडिति हामित्यादिस्वस्वबीजानाम् ऊर्ध्वगतैर्नतिर्नम इति परायेत्यक्षरैश्चोद्गच्छद्भिः पृथिव्याद्याख्याभिरुद्भिन्न आत्मने हुं फडित्यक्षरैर्मनुमुदीर्य । 'हां नमः पराय पृथिव्यात्मने हुं फट्', 'हीं नमः पराय अबात्मने हुं फट्', 'हूं नमः पराय तेजआत्मने हुं फट्' 'हैं नमः पराय वाय्वात्मने हुं फट्', 'हौं नमः परायाकाशात्मने हुं फट्' इति मन्त्रानुदीर्येत्यर्थः । उद्घातवृत्त्या भूतानां स्वस्वगुणानुरूपिणी सङ्कोचोद्घातवृत्तिः, तयासुं प्राणमायम्य हुंफट्पदकृतनमसा हुं फडिति पदे स्थापितेन नमःपदेन । 'हां नमः पराय पृथिव्यात्मने नमः' इत्यादिनानेन व्याप्य पादाग्रादिनाभ्यन्तं तदादिहृदयान्तं तदादिकण्ठान्तं तदादितात्वन्तं तदादिमूर्धान्तं चोर्ध्वमूर्ध्वं तदा तदा व्याप्य धराद्यं पृथिव्याद्यं च हृत्वा संहृत्य शोषणदाहने च स्वस्वबीजाभ्यां कृत्वा ज्योतीरूपामग्निमयीं प्रतिकृतिं प्रतिमां[1] वस्त्रादिभिराच्छाद्य ध्रुवेण प्राक्छिरस्कामुदके वासयेत् ॥ ४६ ॥

विवरणम्

हामित्यादि पृथिव्यादीनां स्वस्वबीजानि हां हीं हूं हैं हौं इत्येतानि तदूर्ध्वगतानि नतियुक्तानि परायेत्यक्षराणि तत उद्यन्त्यः पृथिव्याद्याख्याः पृथिव्यप्तेजोवाय्वाकाशपदानि ताभिरुद्भिन्नमात्मने हुंफडितीदृशम् । मनुमुदीर्येति । यथा — ओं हां नमः पराय पृथिव्यात्मने हुं फडित्यादि । शिवे, हां नमश्शिवायेत्यादि पठनीयम् । वक्ष्यति च — "योऽयं चैतेषां परांशो

१. 'श्री प्रतिमां' ख. पाठः.

त्रिवार्णमि"ति । उद्घातवृत्त्या असुमायम्येति मन्त्रोक्तिसमये व्यापारोऽयमुक्तः । असुः प्राणः । उद्घातवृत्त्या तत्तद्गुणसङ्कुचयेत्यर्थः । यद्वक्ष्यति—"तत्त्वावृत्तिप्रजप्तस्त्वमनुः" इत्यादि । तत्सर्वमिहापि समानम् । हुंफट्पदकृतनमसा अनेनोद्वाप्येति । ह्रां नमः पराय पृथिव्यात्मने नमः इत्यादि उद्वयापनं संहारव्यापकम् । धराद्यं हृत्वेति । धरा पृथिवी तदादीनि भूतानि संहृत्येत्यर्थः । ज्योतीरूपां प्रतिकृतिमिति । तेजोरूपतां नीतां तां प्रतिमाम् । त्रिधा चैतत् सम्भवति । अप्सु संहारे कृते तेजोभावनया, शोषणे कृते दाहेन, वायुसर्गानन्तरं तेजोभावनयेति । तेषामिह विकल्पः । प्राक् पूजितफलके शाययित्वा नाभिदघ्ने तस्मिञ्जले प्रणवेनाधिवासयेत् । प्राक्शिरस्कामिति । नान्योऽत्र नियम इति भावः । यथोक्तम्—

"वेष्टितं वसनैर्दर्भैः प्राक्शीर्षं चोर्ध्वसूत्रकम्" इति । फलकोपर्यधोमुखं सर्वत्र शाययेदुत्तानं वेति ॥ ४६ ॥

रक्षां कृत्वा पञ्चमन्त्रैः समन्तात्
साङ्गैर्दिक्पांस्तद्बहिः संविभाव्य ।
दीपानग्निं जागरूकांश्च पुंस-
स्तत्रारक्षेत् स्थापयित्वा त्रिरात्रम् ॥ ४७ ॥

विमर्शिनी

पुनः स्वस्वपदे पञ्चमन्त्रैः समन्ताद् दिक्षूर्ध्वान्तं साङ्गैरस्त्रेण च रक्षां कृत्वा तद्बहिर्दिक्पान् संविभाव्य कल्पयित्वा दीपानग्निं जागरूकान् उन्निद्रान् पुंसः पुरुषांश्च तत्र स्थापयित्वा त्रिरात्रमारक्षेत् ॥ ४७ ॥

विवरणम्

रक्षां कृत्वा पञ्चमन्त्रैः समन्तादिति निजनिजपञ्चतत्त्वग्रहणम् । मध्ये परमेष्ठितत्त्वम् । प्रागादिषु पुरुषादितत्त्वानि । यद्वा, बिम्बस्य समन्ततः सर्वतत्त्वम् । तद्बहिस्समन्ततो निवृत्तितत्त्वमित्यादि । शिवे पञ्च ब्रह्माणि प्राग्वाणि, न्यासपूजार्घ्यदानान्येषां कार्याणि । साङ्गैरिति । तद्बहिस्समन्तादङ्गं पञ्च-

१. 'दिक्षूर्ध्वान्तं पञ्च मन्त्रान् यथार्हं दिक्पानर्चिंश्च विभज्य वि' ख. पाठः. २. 'स्वा', ३. 'ग्नीन् जा' क. पाठः. ४. स्वपञ्च' ख. पाठः. ५. 'दे ब' क. पाठः.

राकारेण विभावनीयम् । न्यासपूजार्घ्यदानजपा इहापि तुल्या एव । दिक्पालतद्बहिस्संविभाव्येति दशसु दिक्षु तेषां सन्निधापनपूजार्घ्यदानान्युक्तानि । तत्र स्थापयित्वा आरक्षेदित्यन्वय इति ॥ ४७ ॥

प्रासादं परिगृह्य कारुकरतः कर्त्रा गुरुः प्रार्पितं
पर्येत्य प्रयतोऽथ रात्रिसमये संगृह्य संशोध्य च ।
एतद्दक्षिणतो निषद्य सकलीकृत्यार्चितात्माग्रतो
विघ्नेशं प्रसमर्च्य बीजमनुना निर्विघ्नतां प्रार्थयेत् ॥ ४८ ॥

विमर्शिनी

एवं बिम्बं परिगृह्य जलाधिवासं कृत्वा ततः प्रासादमपि परिगृह्य शोधयेदित्याह—प्रासादमिति । अथ जलाधिवासानन्तरं गुरुः प्रयतः शुद्धो भूत्वा कर्त्रा यजमानेन कारुकरतः परिगृह्य प्रार्पितं दत्तं प्रासादं रात्रिसमये पर्येत्य परितः स्वयं गत्वा ऊनातिरेकं निरीक्ष्य संगृह्य संशोध्य तदन्तर्बहिश्च मार्जनालेपनाभ्यां शोधयित्वा एतद्दक्षिणतः प्रासादस्य दक्षिणभागे निषद्योपविश्य सकलीकृत्य शङ्खपूरणपूर्वमर्चितात्मा कृतात्माराधनो भूत्वाग्रतो बीजमनुना गणपतिबीजेन विघ्नेशं प्रसमर्च्य तं प्रति निर्विघ्नतां प्रार्थयेत् ॥ ४८ ॥

विवरणम्

इदानीं प्रासादशुद्धिं प्रस्तौति—प्रासादं परिगृह्येति । कतमदिन एतत् कर्तव्यमिति । बिम्बाधिवासतः पूर्वदिने । वक्ष्यति च—'तत्स्नपनतः पूर्वेऽह्नी' ति । किं च बिम्बाधिवासदिने प्रासादस्याप्यधिवासं वक्ष्यति 'पीठाधिवाससमये विहिताधिवासमि'ति । अतस्ततोऽपि प्रागेव तच्छोधनोपपत्तिः । अथ प्रासादं कारुकरतः परिगृह्य कर्त्रा प्रार्पितं गुरुः पर्येत्य सङ्गृह्येति योजना । कारुस्तक्षा । बिम्बपरिग्रहवत् प्रासादपरिग्रहप्रकारः । प्रयतः शुद्धः । स्नानादिकृदिति यावत् । गुरुस्तद्दिनेऽपराह्णे स्नानादि कृत्वा सभायामन्यत्र वा उपविश्य सकलीकरणमात्रं विधाय गणपतिं सम्पूज्य कर्त्रा परिगृहीते प्रासादे तन्मुखदिगादितदन्तं प्रदक्षिणं परीत्य तदग्रतस्तिष्ठन् तं प्रासादं कर्तृसकाशात् प्रणवेन आलोकय दर्शेण स्पृशन् प्लुतप्रणवेन परिगृह्णीयादिति । कारुकरत इति तेन सन्ताड्य मुक्तमात्रे कर्त्रा परिग्रह उक्तः । संशोध्य चेति । यद्यपि साधु मार्जनादिपरिशोधितस्यैवायं परिग्रहः, किन्तु परिगृहीतस्य पुनस्तलक्षालनादि सर्वमस्त्रेण

---

१. 'नभवा इ' ख. पाठः. २. 'इतत्प्रासा', ३. 'शेद् प्लु' क. पाठः.

कार्यमिति भावः । एतद्दक्षिणतो निषद्येति । प्राग्द्वारे प्रासादेऽन्तर्मण्डकान्तरे वा याम्यबलिपीठपुरतः प्रत्यग्द्वारे तत्पश्चिमत इति ज्ञेयम् । मण्डप एव वा । यथोक्तं गुरुराचम्य मण्डप उपविश्येत्यादि । निषदनमुपवेशनम् । सकलीकृत्येति । आत्मानमिति शेषः । अग्रतो बीजमनुना विघ्नेशं प्रसमर्च्येति । स्वस्तिकेऽष्टदलपद्मे वा विधिवद् गणपतेः स्वबीजमन्त्रेण पूजोक्ता । निर्विघ्नतां प्रार्थयेदिति । प्रतिष्ठापनपर्यन्तमियं निर्विघ्नताभिप्रेयते ॥ ४८ ॥

ततः समास्तीर्णकुशेषु सादितं
त्रिसूत्रकाद्यक्षतसूनपश्चिमम् ।
विशोधितं धारणया ध्रुवार्चितं
परामृशेत् स्वैर्मनुभिर्यथाक्रमम् ॥ ४९ ॥

विमर्शिनी

ततः समास्तीर्णकुशेषु सादितं त्रिसूत्रकाद्यक्षतसूनपश्चिमं त्रितन्त्वाद्यक्षतपुष्पान्तिमं द्रव्यजातं धारणया शोषणादिभिर्विशोधितं ध्रुवार्चितं तत् स्वैर्वक्ष्यमाणैर्मनुभिर्यथाक्रमं परामृशेत् संस्पृश्य जपेत् ॥ ४९ ॥

विवरणम्

ततः समास्तीर्णकुशेषु सादितमिति । स्वाग्रत उदग्भागे दक्षिणभागे वा दर्भसंस्तरे सादितं प्रणवेन क्रमतः सादनमिष्यते । त्रिसूत्रकं त्रिगुणितसूत्रम् । धारणया विशोधितमिति शोषणादिकमुक्तम् । अस्त्रप्रोक्षणपूर्वकमेतत् कर्तव्यम् । ध्रुवार्चितम् । पुनः प्रणवेन पूजितम् । स्वैर्मनुभिरिति । व्यस्ताव्यस्तप्रणवादिभिः ॥ ४९ ॥

सूत्रं प्राक् त्रिवृतं कुशस्रजमथो मुष्ट्या शकृद्वारि वा
पश्चात् सर्षपमुष्टिगोमयजलं गव्यं क्रमात् तत्परम् ।
कुर्याद्वा विकिरं समुष्टिकमथो गन्धाम्बु पुष्पाक्षतं
दर्भाग्रान्वितमन्ततो विकिरवापेऽन्ते तु तत्सादनम् ॥ ५० ॥

विमर्शिनी

द्रव्याण्याह—सूत्रमिति । प्राक् पूर्वं त्रिवृतं त्रिगुणितं सूत्रं कुशस्रजं चाथो मुष्ट्या सह शकृद्वारि गोमयजलं वा विकल्पेन, पश्चात् सर्षपमुष्टिगोमयजलं सर्षपं मुष्टिं गोमयजलं पञ्चगव्यं च क्रमात्, तत्परं विकिरं समुष्टिकं वा विकिरमुष्टिं च विकल्पेन कुर्यात् । अथ गन्धाम्बु दर्भाग्रान्वितं पुष्पाक्षतं च

कुर्यात् संपातयेत्। अन्ततः अवसाने विकिरवापे पक्षे तु तत्सादनं चान्ते कुर्यात् ॥ ५० ॥

विवरणम्

प्राक् त्रिवृतं सूत्रमित्यन्वयः । कुर्यादिति च सम्बध्यते । त्रिवृतं त्रिगुणितम् । कुशस्रजमिति । दर्भमालाम् । मुष्ट्या शकृद्वारि वेति । सहार्थे तृतीया । मुष्टिगोमयजले कुर्याद्वा नवेत्यर्थः । तत्परं कुर्याद्वा विकिरं समुष्टिकमिति । विकिरमुष्ट्योस्सहविकल्पः । पुष्पाक्षतं दर्भाग्रान्वितमित्येकं सन्धानमुक्तम् । अन्ततो विकिरवाप इति । यदा गव्यानन्तरं विकिरमुष्टी न स्तस्तदा धूपदीपकमपि प्रकल्प्य परित इत्येतदन्त एव विकिरकर्म कार्यम् । तदा चाक्षतान्ते विकिरसादनमपि कार्यम् । नन्विह मुष्टिरस्तीत्यभिप्रायः ॥ ५० ॥

व्यस्ताव्यस्तनिरञ्जनं त्रिगुणदाम्नोर्यं त्रिमुष्ट्यां शकृ-
त्तोये वं सितसर्षपे रमथवा सैंहं हरौ मन्त्रवित् ।
गव्ये पञ्च जपेन्मनून् विकिरकाद्येषु स्वमूलं हरा-
वर्कार्णं विकिरे त्रितन्तुषु तनुत्रं गव्यमन्वष्टकम् ॥ ५१ ॥

विमर्शिनी

तन्मन्त्रानाह — व्यस्ताव्यस्तेति । मन्त्रविद् मन्त्रविशेषज्ञो गुरुः त्रिगुणदाम्नोः त्रिसूत्रदर्भस्रजोः व्यस्ताव्यस्तनिरञ्जनं पृथग्भूतमपृथग्भूतं प्रणवं जपेत् । त्रिमुष्ट्यां मुष्टित्रये यमिति बीजं, शकृत्तोये वं बीजं, सितसर्षपे सिताः सर्षपा मुख्या इति सितसर्षप इत्युक्तं, तत्र रं बीजं, हरौ अथवा सैंहं क्ष्रौमिति नरसिंहबीजं, गव्ये निजान् पञ्च मन्त्रान् , विकिरकाद्येषु स्वस्वमूलं, हरौ विकिरेऽर्कार्णं द्वादशाक्षरं, त्रितन्तुषु तनुत्रं कवचं वा, गव्यमनु गव्येऽष्टकं च जपेत् ॥ ५१ ॥

विवरणम्

व्यस्ताव्यस्तनिरञ्जनं त्रिगुणदाम्नोरिति । निरञ्जनं प्रणवः, त्रिगुणं त्रिगुणितसूत्रं, तस्मिन् व्यस्तप्रणवं जपेत् । दाम दर्भमाला, तत्र समस्तप्रणवं जपेत् । यं त्रिमुष्ट्यामिति । मुष्टित्रये वायुबीजम् । शकृत्तोये वमिति । गोमयजलद्वयेऽपि वरुणबीजम् । सितसर्षपे रमिति । सितास्सर्षपा मुख्याः । सर्षपे चाग्निबीजमित्यर्थः । अथवा सैंहं हराविति । सर्षपे नरसिंहबीजं वेत्यर्थः ।

१. 'इ' क. पाठः. २. 'यं वापि गव्येऽष्ट' ग. पाठः. ३. 'क्षौ' क. पाठः.

मन्त्रविदिति विकिरणे फडन्तत्वमुक्तम् । यद्वा, सर्वेष्वप्यस्त्रविकल्प उक्तः । यदुक्तं — हरौ "सर्षपानस्त्रमन्त्रितानि"ति, शिवादिष्वपि "सर्षपानस्त्रमन्त्रतः", "सर्षपानस्त्रसञ्जप्तानि"त्यादि । गव्ये पञ्च जपेन्मनूनिति । विष्णौ वासुदेवादिनारायणान्तं मनवः ते च कर्मशेषपटलभाविनः । शिवे तु ईशानादि पञ्च ब्रह्माणि । हरिहरे द्वयान्यपि । पञ्चतत्त्वानि इतरेषु स्युः । पञ्चगव्यानां योजनक्लृप्तिस्तु निष्कृतिपटले वक्ष्यते —'गोमूत्रं निजवाञ्छया परिमितमि'त्यादि । विकिरकार्येषु स्वमूलमिति । विकिरगन्धोदकाक्षतेषु धूपदीपयोरपि सादने तयोरपि मूलम् । दुर्गायै तु वायुबीजं, यं त्रिमुष्टयामिति ह्युक्तम् । हरावर्कांशे विकिर इति । द्वादशाक्षरं मङ्गलाङ्कुरोक्तबीजैस्सर्वेषु विकिरसादनम् । स्कन्दे तु "विकिरमिह व्रीहियव"मित्यादि निष्कृतिवक्ष्यमाणं ग्राह्यम् । *त्रितन्तुषु तनुत्रं वेति । शिवादौ त्रिगुणितसूत्रे कवचं वेत्यर्थः । गव्येऽस्त्रकमिति । वेत्यनुषङ्गः । शिवादिष्वेव पञ्चगव्येऽस्त्रं वा जपेदित्यर्थः । अपि गव्य इति । दुर्गास्कन्दयोर्दर्भमालादि, सर्वेष्वप्यस्त्रविकल्पोऽपि सूचितः । विकिरे तु मूलमेवेष्यते । यदुक्तम् — 'विकिरान् जपेदष्टोत्तरं शतं मूलमन्त्रमि'ति ॥ ५१ ॥

दत्त्वा धेनूर्द्विजेभ्यो द्विरदवदनमुद्वास्य तद्देवतात्मा
स्थित्वा द्वारोपकण्ठे विभुसदनमदः प्रेक्ष्य दृष्ट्याऽस्त्रमय्या ।
फट्कारान्तेन तारेण च चुलकभृतैरष्टताराभिजप्तैः
पाथोभिः प्रोक्ष्य रक्षःप्रकरमिह कृतावासमुत्सारयेच्च ॥ ५२ ॥

विमर्शिनी

पुनर्द्विजेभ्यो धेनूर्दत्त्वा द्विरदवदनं गणपतिमुद्वास्य तद्देवतात्मा गुरुः स्वयं देवो भूत्वा द्वारोपकण्ठे प्रासादद्वारसमीपे स्थित्वा अदः एतद् विभुसदनं देवालयम् अस्त्रमय्या अस्त्रतेजःप्रसारिण्या दृष्ट्या प्रेक्ष्य चुलकभृतैर्निजदक्षिणकरचुलकगृहीतैः अष्टताराभिजप्तैः पाथोभिर्जलैः फट्कारान्तेन तारेण प्रोक्ष्य इह कृतावासं कृतस्थानीयकं रक्षःप्रकरं राक्षससमूहं उत्सारयेद् अपसारयेच्च ॥ ५२ ॥

विवरणम्

दत्त्वा धेनूर्द्विजेभ्य इति । चतुरवरं पशुदानमुक्तम् । द्विरदवदनमुद्वास्येति । अवसानीयार्घ्यदानादिपूर्वकं गणपतिरुद्वासनीयः । तद्देवतात्मेति ।

* 'त्रितन्तुषु तनुत्रं वापि गव्येऽस्त्रकम्' इति विवरणपाठः.

मूलमन्त्रप्राणायामाङ्गादिन्यासमानसपूजाजपैरिति शेषः । स्थित्वा द्वारोपकण्ठ इति । प्रासादद्वारसन्निधौ बहिरेव तदभिमुखं स्थित्वेत्यर्थः । अदो विभुसदन-मस्त्रमय्या दृष्ट्या प्रेक्ष्येत्यन्वयः । दृष्ट्योरस्त्रभावनास्त्रोच्चारणमपि कार्यम् । प्रासादशरीरे तदन्तर्गर्भगृहे चैतदीक्षणं भवति । चुलुकभृतैरष्टताराभिजप्तैः पाथोभिः फट्कारान्तेन तारेण च प्रोक्ष्येत्यन्वयः । दक्षिणकरपुटे शङ्खाज्जलं सम्पाद्य वाम-हस्तेन स्पृशन् प्रणवेनाष्टवारमभिमन्त्र्य तेन फडन्तप्रणवेन प्रासादशरीरं प्रोक्ष्ये-त्यर्थः । रक्षःप्रकरं रक्षसां समूहम् । उत्सारणमपनयनम् । भावनैवेयं भवति ॥ ५२ ॥

ईशादीशदिगन्तिमं गुणकुशस्रग्भ्यां कपोतोपरि
प्रासादं परिवेष्ट्य दिष्टमनुना मुष्ट्याद्ययान्तर्बहिः ।
सम्मृज्य प्रसमुक्ष्य गोमयजलेनोत्कीर्य सिद्धार्थकान्
मार्जन्या परिमृज्य सिञ्चतु शकृत्तोयेन गन्धेन च ॥ ५३ ॥

विमर्शिनी

ततः प्रासादं कपोतोपरिभागे गुणकुशस्रग्भ्यामीशादीशदिगन्तिमं दिष्टमनुना निर्दिष्टमन्त्रेण परिवेष्ट्य परितो वेष्टयित्वा । दिष्टमनुनेति सर्वत्र योज्यम् । आद्यया मुष्ट्यान्तर्बहिश्च संमृज्य गोमयजलेन समुक्ष्य सिद्धार्थ-कानुत्कीर्य मार्जन्या मुष्ट्या परिमृज्य शकृत्तोयेन गन्धेन च सिञ्चतु ॥ ५३ ॥

विवरणम्

दिष्टमनुनेति सर्वक्रियाभिः सम्बध्यते । जपोपदिष्टेन मन्त्रेणेत्यर्थः । प्रासादस्य कपोतपङ्क्त्युपरिभागे त्रिगुणसूत्रदर्भमालाभ्यामीशदिगादितदवसानं व्यस्तसमस्तप्रणवजपेन परिवेष्टयेत् । मुष्ट्याद्ययान्तर्बहिः संमृज्येति । प्रथममुष्ट्या वायुबीजेन गर्भगृहेऽग्न्यादीशान्तं पुनर्नाडीगृहे बहिरधिष्ठानेऽपि द्वारादितदन्तं परिमृज्यम् । करक्षालनमन्तरान्तरा कार्यमिति ज्ञेयम् । समुक्ष्य गोमयजलेनेति । क्वचिच्छुद्धजलमपीष्यते । यदुक्तम् —

"ततो गोमयवारिभ्यां गायत्र्या चोपलेपयेत् ।"

इति । उत्कीर्य सिद्धार्थकानिति । विष्णौ फडन्तेन नरसिंहबीजेन । अन्येषु रं-बीजेन स्वास्त्रेण वान्तर्बहिर्विकिरणं[3] कार्यम् । उत्कीर्येति वोपरि किरणमप्युक्तम् । तेन प्रागादिदशदिक्षु सर्वतस्सर्षपविकिरणमपि सूचितम् । यदुक्तम् —

"नृसिंहेन फडन्तेन विकिरेद्दशदिक्ष्वपि ।"

---

१. 'स्था तथान्त' इति मूलकोशपाठः. २. 'श प्रा' ख. पाठः. ३. 'नमुक्तम् । उ' ख. पाठः.

इति । मार्जन्या परिमृज्येति द्वितीयमुष्ट्या । सिञ्चतु शकृत्तोयेन गव्येन चेति । पूर्वं गोमयजलेन पुनः पञ्चगव्येन च जपोक्तमनुजापी प्रोक्षेत् । प्राग्वत् कचिच्छुद्धजलयोगः ॥ ५३ ॥

त्रेधा च प्रविकीर्य तत्र विकिरान् संमृज्य वापोणुना
वोक्षेद् गन्धजलैः किरेत् पुनरिषेत्वेत्यादिना वाक्षतैः ।
धूपं दीपमपि प्रकल्प्य परितो मूलेन गर्भालये-
ऽथेशेऽग्नावनिलेऽथवास्त्रमुदकुम्भेऽधोग्रकूर्चेऽर्चयेत् ॥ ५४ ॥

विमर्शिनी

तत्र विकिरानञ्जलिना त्रिधा च विकीर्य पुनर्मुष्ट्या संमृज्य वा गन्धजलैरापोणुना 'आपः पुनन्त्वि'त्यादिमन्त्रेण वा मूलेन वोक्षेत् । पुनः 'इषे त्वे'त्यादिना वा मूलेन वाक्षतैः किरेत् । परितो धूपं दीपमपि मूलेन प्रकल्प्याथ गर्भालये ईशे अग्नौ अथवानिले कोणे अधोग्रकूर्चे उदकुम्भे उदकपूर्णे कुम्भे अस्त्रं स्वस्वात्ममावाह्यार्चयेत् ॥ ५४ ॥

विवरणम्

त्रेधा च प्रविकीर्य तत्र विकिरानिति । प्रासादान्तस्त्रेधा पुनर्बहिश्च विकिरान् विकिरेदित्यर्थः । विकिरणक्लृप्तिस्तु मण्डपसंस्कारे द्रष्टव्याम् । 'प्रागास्योऽञ्जलिना त्रिधात्र विकिराञ्छक्त्यात्मनि प्रोत्किरेदि'ति । शिवे प्रासादेन इतरेषु मूलेन च प्रासादमूर्तिं विभाव्यैतत् कार्यम् । इह विकिरणक्लृप्त्यनभिधानादिह तदनियमोऽपि लभ्यते । संमृज्य चेति । तृतीयमुष्ट्येति भावः । आपोणुना वोक्षेत् गन्धजलैरिति । शिवशास्त्रादावयम् 'आपः पुनन्त्वि'ति मन्त्रविकल्पः । गन्धजलैर्वोक्षेच्चेति वा चशब्दो योज्यते । पूर्वं गन्धजलैरालेपनमनेन सूचितम् । तदुक्तं — 'गन्धोदैर्लिप्त्वाथापः पुनन्त्विवति भूयोऽपि ताभिः संप्रोक्ष्ये'ति । किरेत् । पुनरिषेत्वेत्यादिना वाक्षतैरिति शिवशास्त्रादावेवायं मन्त्रविकल्पः । दर्भाग्रपुष्पमिश्राणामेवाक्षतानामेतद् ग्रहणम् । धूपं दीपमपि प्रकल्प्य परितो मूलेनेति । यदुक्तं — 'धूपदीपौ च विन्यस्येदि'ति ।

"साराङ्गारविनिक्षिप्तगुल्गुलुवगरुवासितम् ।
धूपं दत्त्वाऽभितो दीपमपि प्रज्वाल्य विन्यसेत् ॥"

१. 'धूपाद्यं च समर्पयेद् विकिरकर्मान्ते तथा सादरेऽथैके' ख. पाठः. २. 'थै' क. ख. पाठः. ३. 'प्रे' क. पाठः

इति । अथ गर्भालये ईशेऽमावनिलेऽथवा अघोमकूर्चं उदकुम्भेऽर्चयेदिति । क्षालितस्थले स्वस्तिकामालिख्य व्रीहिदर्भपीठे तत्तत्पीठपूजापूर्वकं संस्कृते कुम्भेऽघोग्रं कूर्चं निक्षिप्य शुद्धाम्बुपूर्णे स्वास्त्रमावाह्य विधिवत् पूजयेत् । प्रतिष्ठावसितावस्य देवस्य उद्वासनं भवतीति बोद्धव्यं रक्षार्थत्वादस्येति ॥ ५४ ॥

ईशेशाजितविघ्नशास्तृषु सदर्भब्रह्मशाखाकृता
मुष्टिः सैव गुहे सपिप्पलशिखाशाखाशलाकाकृता ।
दुर्गाशार्ङ्गभृतोः सहाश्रितशलाकादर्भसन्दर्भिता
शार्ङ्गीशे द्विजशाखया प्रकलिता विष्णूदिता वा भवेत् ॥ ५५ ॥

विमर्शिनी

मुष्टिलक्षणमाह — ईशेशेति । ईशेशाजितविघ्नशास्तृषु सदर्भब्रह्मशाखाकृता दर्भैः सह पलाशशाखया कृता मुष्टिर्भवेत् । गुहे सपिप्पलशिखाशाखाशलाकाकृता अश्वत्थाग्रशाखाभिः शलाकाभिश्च सह कृता सैव शैवादिषूक्तैव । दुर्गाशार्ङ्गभृतोः सहाश्रितशलाकादर्भसन्दर्भिता सहायुक्ताभिः शलाकाभिश्च सह कृता दर्भैश्च बद्धा । (സഹാ=പൂവാംകുരുന്നൽ, ശലാകാ=ഈർക്കിൽ.) शार्ङ्गीशे द्विजशाखया पलाशशाखया सह प्रकलिता विष्णूदिता वा ॥ ५५ ॥

विवरणम्

इदानीमुक्तशोधनसाधनेषु मुष्टिरलौकिकीति तल्लक्षणं कथयति — ईशेशाजितविघ्नशास्तृष्विति । सदर्भब्रह्मशाखाकृतेति । दर्भैः पलाशशाखया निबद्धा । सैव गुहे सपिप्पलशिखाशाखाशलाकाकृतेति । यदुक्तं—

"पलाशाश्वत्थशाखाभिश्शलाकैर्दर्भमिश्रितैः ।
मुष्टिं कृत्वा"

इति । दुर्गाशार्ङ्गभृतोरिति । सहाशलाकादर्भैर्निबद्धा मुष्टिरित्यर्थः । शार्ङ्गीश इति । पलाशशाखान्विततया कृता । विष्णूक्तमुष्टिर्वा । पूर्वोक्तैव वा मुष्टिरित्यर्थः ॥ ५५ ॥

चक्रं चक्रिनिशुम्भजिद्धरिहरेऽघोरं गणेशेश्वरे
स्याद् वा पाशुपतं तदन्वितरथाङ्गं वाग्रमीशाच्युते ।

ज्वालामालिनिहुं ज्वलादिघ्रूणिहुंफट् चेति सङ्कीर्तिते
अस्त्रे शक्तिधरार्ययोः स्वलिपिक्लृप्ताङ्गे तथाङ्गाक्षरे ॥ ५६ ॥

विमर्शिनी

अस्त्रमाह — चक्रमिति । चक्रिनिशुम्भजिद्धरिहरे विष्णुदुर्गाशिवनारायणे चक्रं सुदर्शनमस्त्रं स्यात् । गणेशेश्वरे गणपतिशिवयोः अघोरं पाशुपतं वा । ईशाच्युते तदन्वितरथाङ्गं पाशुपतेन युक्तं सुदर्शनं वा । शक्तिधरार्ययोः क्रमेण ज्वालामालिनिहुं ज्वलादिघ्रूणिहुंफट् ज्वलघ्रूणिहुंफडिति च, स्वलिपिक्लृप्ताङ्गे स्वैः स्वैः षड्भिरक्षरैः कल्पिताङ्गयुक्ते, तथाङ्गाक्षरे षड्भिः षड्भिरक्षरेण च युक्ते अस्त्रे सङ्कीर्तिते ॥ ५६ ॥

विवरणम्

चक्रमिति । अस्त्रं स्यादिति सर्वत्र सम्बध्यते । पाशुपतं वेति । गणेशेश्वर इत्यनुषङ्गः । तदन्वितरथाङ्गं वेति पाशुपतान्वितचक्रं वा प्रागुक्तकेवलचक्रं वेत्यर्थः । अस्त्रयोगे तदङ्गयोगोऽपि भवति । चक्रादीनां कर्मशेषपटल उद्धारः । शक्तिधरः स्कन्दः । स्वलिपिक्लृप्ताङ्गे इति । द्वयोरपि षड्भिस्स्वाक्षरैरङ्गानि । अङ्गाक्षरे इति । द्वे अपि षडक्षरे । अङ्गेन्द्रादिवज्रादिभिरस्त्राणाम् आवरणपूजा ॥ ५६ ॥

गर्भालयेऽभ्यर्चितविष्टरेऽत्र[2]
प्रासादमन्त्रेण शिवे परेषु ।
मूलेन देवं गृहमूर्तिरूपं
प्रकल्प्य साङ्गं प्रयजेद् दिगीशैः ॥ ५७ ॥

विमर्शिनी[1]

क्रियाशेषमाह— गर्भालय इति । गर्भालयेऽभ्यर्चितविष्टरे अत्र शिवे प्रासादमन्त्रेण, परेषु मूलेन च गृहमूर्तिरूपं देवं प्रकल्प्यावाह्य साङ्गम् अङ्गैर्युक्तं दिगीशैः सह प्रयजेत् ॥ ५७ ॥

---

१. 'रे ॥ कृणुष्वपाजःप्रमुखाशुजापं कृत्वा सकृत साष्टशतं तथास्त्रम् । संजप्य संरक्ष्य गृहं प्रकुर्यात् राक्षोघ्नहोमं वहिरग्निकोणे ॥ पकवं' ख पाठः. २. 'दर्भकेऽत्र' क, पाठः.

विवरणम्

*अभ्यर्चितदर्भक इति । क्षालिततले ह्रस्वदर्भसंस्तरं कृत्वा तत्रेत्यर्थः । गृहमूर्तिरूपं देवं प्रकल्प्येति । स्वपीठपूजापूर्वकमुक्तमन्त्रेणावाह्य लिपितत्त्वमन्त्रा-न्न्यासाविधानमुक्तम् । साङ्गं प्रयजेद् दिगीशैरिति । मूलाङ्गैर्विग्रहपूजा इन्द्रादिवज्रा-दिभिरावरणपूजोक्ता । निवेद्यसमयेऽर्घ्यं दत्वा प्रसन्नपूजामपि विदध्यात् ॥ ५७ ॥

जपेत् कृणुष्वाद्यसकृत् तथाष्ट-
शतं निजास्त्रं च विकीर्य राज्या ।
गन्धैरुत प्रोक्ष्य गृहं प्ररक्षेत्
पुष्पास्त्रतालत्रयकल्पनाद्यैः ॥ ५८ ॥

विमर्शिनी

'कृणुष्वा'दिमन्त्रजातमसकृत् प्रजपेत् । निजास्त्रं चाष्टशतं जपेत् । राज्या सर्षपेण विकीर्य गन्धैरुत प्रोक्ष्य वा पुष्पास्त्रतालत्रयकल्पनाद्यैः पुष्पा-(स्त्रम ? स्त्रैर) स्त्रजप्तपुष्पैर्दिक्षु क्षेपणैः तालत्रयदिग्बन्धनाद्यैश्च गृहं प्ररक्षेत् ॥ ५८ ॥

विवरणम्

जपेदिति । राक्षोघ्नास्त्रयोर्जपः । तदभिमन्त्रितसर्षपविकिरणं तन्मन्त्रैर्गन्ध-प्रोक्षणमिदमुभयं समुदितं वा कार्यमिति । विकिरान्तपक्षे तु अक्षतविकि-रणानन्तरमेवं प्रासादमूर्तिं दर्भसंस्तरे विभाव्य गन्धपुष्पाभ्यां धूपदीपाभ्यां च तदादिप्रासादान्तर्बहिः पूजां विधाय निवेद्यस्थाने यथोक्तविकिरणमपि कार्यम् । पुनस्तं प्रासादमूर्तिं पूजयेत् । ततोऽस्त्रकलशपूजां राक्षोघ्नजपादिकं च कुर्यादिति । गृहं प्ररक्षेदिति । तत्रैवं स्थित्वा पुष्पास्त्रमोचनं कुर्यात्[1] । बहिर्निष्क्रम्य द्वारसम्मुखस्तालत्रयदिग्बन्धनाग्निप्राकारान् अस्त्रेण विदध्यादिति । पुष्पास्त्रमोचनमुक्तम्—

'अस्त्रमन्त्रेण पुष्पाणि दश दिक्षु प्रमोचयेत् ।
नाराचमुद्रया तत्र शूलमुद्रां च दर्शयेत् ॥'

इति । शिवे शूलमुद्रा विष्ण्वादिषु चक्रादिमुद्रेति ज्ञेयम् । पुनः प्राचीनासन उपविश्य आत्मनो लयाङ्गादि सर्वमर्थसिद्धमिति ॥ ५८ ॥

---

1. 'कुर्यात् ।' घ. पाठः.

* 'गर्भालयेऽभ्यर्चितदर्भकेऽत्र' इति विवरणपाठः.

ततो बहिः स्थण्डिलमारचय्य हुताशकोणे विनिधाय वह्निम् ।
आध्वर्यवार्हाग्निमुखादिक्लृप्त्या राक्षोघ्नहोमं विदधीत विद्वान् ॥ ५९ ॥

विमर्शिनी

ततो बहिर्हुताशकोणे स्थण्डिलमारचय्य वह्निं विनिधाय[1] । आध्वर्यवार्हाग्निमुखादिक्लृप्त्या, आध्वर्यवा यजुर्वेदिनः, तेषां योग्ययग्निमुखादिक्लृप्त्या राक्षोघ्नहोमं विदधीत । विद्वानिति राक्षोघ्नहोमेन दुष्टराक्षसादीनां निबर्हणं विद्वानित्यर्थः ॥ ५९ ॥

विवरणम्

राक्षोघ्नहोममाह — ततो बहिरिति । आध्वर्यवार्हाग्निमुखादिक्लृप्त्येति । आध्वर्यवं याजुषं चरणं तदर्हमग्निमुखं पक्वहोमप्रधानस्य आध्वर्यवत्वात् । आदिशब्देनोपरिष्टात् तन्त्रग्रहणम् । विद्वानित्यस्तमयाग्निप्रतिपत्त्यर्थम् । तदुक्तं—"अग्निं निधाय घोराग्निं ध्यायन्नग्निमुखं चरेत्" इति॥ ५९ ॥

पक्वं रक्षोहणादिद्वयमयमनुनाज्यं कृणुष्वादिमन्त्रै-
र्वैदेवाद्यैश्च दुर्गामनुभिरपि सभूरादिभिश्चाखिलेषु ।
प्राग् भूरादेः स्वगुह्याणुभिरजितहरे मार्गजाज्यान्नसर्पी-
ष्यस्त्रेणाथाष्टयुक्तं शतमपि जुहुयात् सर्वतः सस्वपूर्णम् ॥ ६० ॥

विमर्शिनी

अखिलेषु रक्षोहणादिद्वयमयमनुना 'रक्षोहणं वाजिनं' 'विज्योतिषा बृहता' इति द्वयस्वरूपेण मन्त्रेण पक्वं जुहुयात् । कृणुष्वादिमन्त्रैरष्टादशभिर्वैदेवाद्यैश्च पञ्चभिः दुर्गामनुभिः पञ्चभिर्दुर्गाभिश्च सभूरादिभिर्व्याहृतिभिरपि च आज्यं जुहुयात् । अजितहरे भूरादेः व्याहृतिभ्यः प्राक् स्वगुह्याणुभिः स्वपार्षदैस्तत्त्वैश्च । अथ सर्वतः सर्वदेवेषु मार्गजाज्यान्नसर्पींषि, मार्गजोऽपामार्गः, अस्त्रेण स्वस्वास्त्रमन्त्रेणाष्टयुक्तं शतमपि सस्वपूर्णं स्वस्वपूर्णाहुतिसहितं यथा तथा जुहुयात् ॥ ६० ॥

विवरणम्

पक्वं रक्षोहणादिद्वयमयमनुनेति । रक्षोहणं वाजिनमिति पुरोनुवाक्यामुक्तौ प्रणवेन सन्धाय विज्योतिषेत्यृचा पक्वं जुहुयादिति द्वयमयपदाभिप्रायः । कृणुष्वादिमन्त्रैरित्याध्वर्यवग्रहणाद्यजुर्वेदाम्नातैरष्टादशभिरिति लभ्यते ।

१. 'र' क. पाठः. २. 'विधा' ख. पाठः.

येदेवाद्यैरिति । पञ्चभिः दुर्गामनुभिरिति । पञ्चदुर्गाभिः । प्राग् भूरादेरिति । पञ्च-दुर्गानन्तरं स्वस्वपञ्चतत्त्वैरपीत्यर्थः । मार्गजेत्यपामार्गसमिधः । सर्वत इति । सर्वेषु । सस्वपूर्णमिति । व्याहृतिहोमान्ते समिदादिचतुर्णां प्रत्येकमन्ते च व्योमव्याप्यादिनिजमन्त्रेण पूर्णाहुतिरपि कार्येत्यर्थः ॥ ६० ॥

होमान्ते खरमञ्जरीरसलसद्भस्मप्रणीताम्भसा
सम्पातेन शतास्त्रजापमहितेनोक्षेद् गृहं सर्वतः ।
दर्भब्रह्ममयूरपिप्पलशिखाभिर्होममन्त्रैरमुं
निक्षिप्यानलमेव वास्तुहवनं कुर्वीत शार्व्यां दिशि ॥ ६१ ॥

विमर्शिनी

होमान्ते स्विष्टकृदादिहोमावसाने । खरमञ्जरीरसलसद्भस्मप्रणीताम्भसा, खरमञ्जरीरसोऽपामार्गरसः, तेन मिलितेन भस्मना प्रणीताम्भसा च युक्तेन शतास्त्रजापमहितेन शतावृत्त्यास्त्रजापात् सञ्जातमहितत्वेन सम्पातेन दर्भब्रह्म-मयूरपिप्पलशिखाभिः दर्भपलाशापामार्गाश्वत्थशाखाभिः होममन्त्रैः कृणुष्वाद्यैः गृहं सर्वतः सर्वप्रदेशेषूक्षेत् । अमुमेवानलं शार्व्यां दिशि निक्षिप्य वास्तुहवनं वास्तुहोमं कुर्वीत ॥ ६१ ॥

विवरणम्

होमान्त इति । अग्निमुखादिकल्पत्येत्युक्तत्वात् स्विष्टकृदादिहोमशेषे कृत इति लभ्यते । खरमञ्जर्यपामार्गः, लसच्छब्देन व्यामिश्रितत्वमुक्तम् । खर-मञ्जरीरसेन लसद्यत्र भस्मप्रणीताम्भश्चेति सम्पातविशेषणतया बहुव्रीहिः । पात्रसम्भृते सम्पातेऽपामार्गस्य रसं हुतभस्म प्रणीताजलं च संयोज्य अस्त्रेण अष्टो-त्तरशतवारमभिमन्त्र्य तेन सम्पातेन प्रासादमन्तर्बहिश्च सर्वतः प्रोक्षेत् । दर्भ-ब्रह्ममयूरपिप्पलशिखाभिरिति । दर्भान् पलाशापामार्गाश्वत्थानां शिखाश्च संग्रथ्य तेन प्रोक्षेदिति । होममन्त्रैरिति । कृणुष्वाद्यस्त्रान्तैरुक्तैरित्यर्थः । वास्तुहोमं प्रस्तौति— अमुमिति । अमुमेवानलं शार्व्यां दिशि निक्षिप्य वास्तुहवनं कुर्वीतेत्यन्वयः ॥ ६१ ॥

पूर्वेण तं हुतवहं विरचय्य पीठं
शालीनवीनवसनामलतण्डुलाद्यैः ।

---

१, 'मायूराग्रकुशादिभिः परिजपन् मन्त्रान् हुतोत्कानमुं', ख. पाठः

दुर्वाशमीदलकुशोत्तरकूर्चचार्चि-
तेऽस्मिन् यजेत कलशौ परिधानतः प्राक् ॥ ६२ ॥

विमर्शिनी

अत्र परिधानतः परिधिस्थापनात् प्राक् तं हुतवहं पूर्वेण तस्याग्नेः पूर्वभागे शालीनवीनवसनामलतण्डुलाद्यैः शालीभिर्नवेन वस्त्रेणामलैस्तण्डुलतिलसिद्धार्थैश्च पीठं विरचय्य दूर्वाशमीदलकुशोत्तरकूर्चचर्चिते दूर्वाशमीदलकुशानामुपरि कूर्चेन चालङ्कृते अस्मिन् पीठे कलशौ यजेत ॥ ६२ ॥

विवरणम्

पूर्वेण तं हुतवहमिति । तदुक्तम्—'स्थण्डिलस्य मृशस्थाने कल्पिते स्थण्डिलद्वये' इति । नवीनवसनं नूतनवस्त्रम् । तण्डुलाद्यैरिति । तिलसर्षपग्रहणम् । चर्चनमलङ्करणम् । कलशौ यजेतेति ॥ ६२ ॥

न्यक्कूर्चेऽभ्यर्चयतु निजया विद्ययावाह्य विद्वान्
प्रत्यक्संस्थे प्रकृतघटयोस्तण्डुलस्वर्णपूर्णे ।
शन्नोदेव्या द्विरभिहितपादाङ्गयर्चात्र शान्तिं
प्राचीने च प्रयजतु तथा स्वर्णरत्नोदपूर्णे ॥ ६३ ॥

विमर्शिनी

विद्वान् मन्त्रविशेषज्ञः प्रकृतघटयोः प्रस्तुतयोर्वास्तुकलशयोः प्रत्यक्संस्थे पश्चिमगते न्यक्कूर्चे अधोग्रकूर्चे तण्डुलस्वर्णपूर्णे तण्डुलेन स्वर्णेन च पूर्णे कुम्भे निजया विद्यया स्वस्वमूलेनावाह्य देवमभ्यर्चयतु । तथा च प्रकृतघटयोः प्राचीने स्वर्णरत्नोदपूर्णे सुवर्णेन रत्नोदकैश्च पूर्णे अत्र कुम्भे द्विरभिहितपादाङ्गया द्विष्कृत्वा उच्चारणादुद्भूतैः षड्भिः पादैरङ्गानि यस्याः तया शन्नोदेव्या ऋचा शान्तिमावाह्य प्रयजतु ॥ ६३ ॥

विवरणम्

कथमित्याह— न्यक्कूर्च इति । प्रकृतयोः कलशौ यजेतेति प्रक्रान्तयोर्घटयोर्मध्ये प्रत्यक्स्थिते घटेऽधोग्रं कूर्चं निक्षिप्य तण्डुलैस्सम्पूर्य सुवर्णं निक्षिप्य स्वमूलेनावाह्य पूजयेत् । पुनः प्राचीनघटे तथा न्यक्कूर्चे सुवर्णरत्नं निक्षिप्य तोयेन सम्पूरिते शन्नोदेवीरित्यनयर्चा शान्तिमावाह्य पूजयेत् । द्विरभिहितपादाङ्गयेति । द्विरभिहितायास्तस्याः षट् पादाः सम्पद्यन्ते । तैष्षडङ्ग-

1. 'देवं प्र' ख. पाठः.

विधिरिति भावः । शान्तेरङ्गेन्द्रवज्रादिभिरावरणपूजा । विद्वानिति पीठपूजादिकमुक्तम् । यद्वा, कलशद्वयेऽपि शान्तेरेव पूजेत्यादिपक्षान्तरं सूचितम् । पुनरुभयोः निवेद्यादि सर्वं विधाय स्वं स्वं मन्त्रमभिजप्य वस्त्रेणाच्छाद्य तालत्रयादि कार्यमिति ॥ ६३ ॥

**पक्वं वास्तोष्पतेन्ते प्रतिमनुयुगलेनाथ सर्पिर्ध्रुवास्थू-**
**णाद्यैर्जातादिभिः शान्त्यृगणुभिरपि भूरादिभिश्चाखिलेषु ।**
**भर्गे दुर्गापदे पञ्चभिरिह जुहुयाद् ब्रह्मभिर्गुह्यमन्त्रैः**
**शार्ङ्गीशे तत्पुरस्तात् तदुपरि निजषण्मन्त्रकैः षण्मुखे च ॥ ६४ ॥**

विमर्शिनी

अथाखिलेषु परिधिस्थापनाद्याज्यभागहोमान्ते वास्तोष्पतेन्ते प्रतिमनुयुगलेन वास्तोष्पत इत्यन्ते 'प्रतिजानीही'त्यादिना 'वास्तोष्पते संमया' इत्यादिना च मन्त्रद्वयेन पक्वं जुहुयात् । अथ वास्तोष्पतेन्ते ध्रुवास्थूणाद्यैः षड्भिः, जातादिभिः 'जातवेदस' इत्यादिपञ्चभिर्दुर्गाभिः, शान्त्यृगणुभिः, शान्तिदेवत्याभिः 'शन्न इन्द्राग्नी'त्यादिभिः पञ्चदशभिः ऋग्भिः, भूरादिभिर्व्याहृतिभिश्चापि सर्पिर्जुहुयात् । इह भर्गे शिवे दुर्गापदे पञ्चदुर्गास्थाने पञ्चभिर्ब्रह्मभिश्च, शार्ङ्गीशे तत्पुरस्तात् पञ्चदुर्गाभ्यः पुरस्ताद् गुह्यमन्त्रैः, षण्मुखे त(त्पुरस्तात् ? दुपरि) पञ्चदुर्गाणामुपरि निजषण्मन्त्रकैश्च जुहुयात् ॥ ६४ ॥

विवरणम्

**पक्वमिति** । आध्वर्यवार्हाभिमुखादिक्लृप्त्येत्येतदिहापि समानम् । पुनः परिधिनिधानादि कृत्वा पक्वं जुहुयात् । वास्तोष्पतेन्ते प्रतिमनुयुगलेनेति । वास्तोष्पतेपदावसाने प्रतीत्यादिना मनुद्वयेन वास्तोष्पते प्रतिजानीहीति द्वयमयमनुनेत्यर्थः । प्राग्वत् पूर्वां पुरोनुवाक्यामुक्त्वोत्तरया होमः । अथ सर्पिर्ध्रुवास्थूणाद्यैरिति । वास्तोष्पतेन्ते इत्यनुवर्तते । वास्तोष्पतेध्रुवास्थूणाद्यैः षड्भिः । यदुक्तं —

"वास्तोष्पते ध्रुवास्थूणा ततो गृह्यंभयादिना ।
अक्षिस्पन्देत्यादिना च दुःस्वप्नेत्यादिना ततः ॥
वास्तोष्पते प्रतरणोऽमीवहेत्यादिना(पि) च ।"

इति । जातादिभिरिति । पञ्चदुर्गाभिः । शान्त्यृगणुभिरिति । शन्न इन्द्राग्नी इत्यादिपञ्चदशभिः । शन्नःपञ्चोना शान्तिरिति ह्युक्तम् । भर्ग इति ।

पञ्चदुर्गास्थाने पञ्चब्रह्मभिः । गुह्यमन्त्रैरिति । हरिहरे पञ्चदुर्गातः पूर्वं स्वैः पञ्चतत्त्वैः । तदुपरीति । स्कन्दे पञ्चदुर्गातः पश्चात् स्वैः षण्मन्त्रैः ॥ ६४ ॥

शन्नोदेव्यणुना शमीघृतहविःसर्पींषि गव्याप्लुता
दूर्वाश्चाष्टशतं जुहोतु निखिले पूर्णाभिपूर्णं पृथक् ।
दुर्गायां पुनराद्ययादिमचतुष्कं दानवारौ हुनेद्
दूर्वा मूलत एव शास्तृगुहयोः सर्वं जिनार्णेन वा ॥ ६५ ॥

विमर्शिनी

निखिले निखिलेषु देवेषु शमीघृतहविस्सर्पींषि गव्याप्लुता दूर्वाश्चाष्टशतं शन्नोदेव्यणुना पूर्णाभिपूर्णं पूर्णाहुतिभिः पूर्णं यथा भवति तथा जुहोतु । दुर्गायां पुनराद्यया 'जातवेदस' इत्यृचा आदिमचतुष्कं समिदाज्यच(रुरा? र्वा) ज्यानि हुनेत् । दानवारौ विष्णौ दूर्वास्तु मूलत एव, शास्तृगुहयोः सर्वं द्रव्यपञ्चकं जिनार्णेन गायत्र्या वा हुनेत् ॥ ६५ ॥

विवरणम्

शमीति शमीसमिधां ग्रहणम् । पूर्णाभिपूर्णं पृथगिति । एकैकवर्गान्ते पूर्णाहुतिरपि स्ववक्ष्यमाणेन कार्येत्यर्थः । दुर्गायामिति । आद्यया 'जातवेदसे सुनवाम सोममि'त्यनया शमीसमिधादिचतुष्कं जुहुयात् । दानवाराविति । विष्णौ मूलत एव दूर्वाहोमः, शेषितमेव तु शन्नोदेव्यणुनेति भावः । शास्तृगुहयोरिति । सर्वं शमीसमिदादिचतुष्कं दूर्वाश्च ॥ ६५ ॥

प्राक् पावकं स्विष्टकृतोऽवशिष्टेनान्नेन तोयाज्यसमन्वितेन ।
विकीर्य दर्भाग्रचयं नमोरुद्राद्येन मन्त्रेण बलिं विदध्यात् ॥ ६६ ॥

विमर्शिनी

पावकं प्राग् अग्नेः प्राग्भागे दर्भाग्रचयं विकीर्य स्विष्टकृतोऽवशिष्टेन स्विष्टकृदवदानोच्छिष्टेन तोयाज्यसमन्वितेनान्नेन नमोरुद्राद्येन 'नमो रुद्राय वास्तोष्पतये' इत्याद्येन मन्त्रेण बलिं विदध्यात् ॥ ६६ ॥

विवरणम्

प्राक् पावकमिति । दर्भाग्रचयं विकीर्य बलिं विदध्यादित्यन्वयः । जलगन्धादिपूजा तु सामान्यसिद्धा ॥ ६६ ॥

---

१. 'लमहाणुनार्यं' ख. पाठः.

एकाशीतिपदात्मपद्मविहितं वह्नेरुदीच्यामुत
प्राच्यां वास्तुबलिं महेशदिशि वा कुर्यान्निजोक्तक्रमात् ।
सम्पातेन सभस्मशान्तिजलगव्येनाथ शम्यादिकै-
रुक्षेच्छान्त्यभिमन्त्रितेन भवनं त्वंविप्रमन्त्रं जपन् ॥ ६७ ॥

विमर्शिनी

वह्नेरुदीच्यामुत प्राच्यां वा महेशदिशि वा एकाशीतिपदात्मपद्म-विहितम् एकाशीतिपदस्वरूपे पद्मे निर्दिष्टं वास्तुबलिं निजोक्तक्रमाद् निज-निजोक्तरीत्या कुर्यात् । अथ वास्तुबलेरनन्तरं सभस्मशान्तिजलगव्येन भस्म-प्रणीतजलगव्यशेषैर्युक्तेन शान्त्यभिमन्त्रितेन 'शन्नो देवीरि'ति जप्तेन सम्पातेन शम्यादिकैः शमीपलाशाश्वत्थशाखादर्भैः 'त्वंविप्र'मन्त्रं जपन् भवनमुक्षेत् ॥ ६७ ॥

विवरणम्

एकाशीतिपदात्मपद्मविहितं वास्तुबलिमिति । क्षेत्रे रन्ध्रपुट इत्या-दिनैकाशीतिपदात्मके पद्मे विहितमित्यर्थः । निजोक्तक्रमादिति । स्वस्वोक्त-प्रकारेण । सभस्मशान्तिजलगव्येनेति । यदुक्तं—

"प्रणीतागव्यभस्माज्यशान्तितोयैश्च तद्गृहम्"

इति । सम्पाताज्ये प्रणीताजलं हुतभस्मपञ्चगव्यशेषं शान्तिकलशात् किञ्चि-ज्जलं च योजयित्वा तेनेत्यर्थः । शमीरसोऽप्यस्मिन् योजनीयः । शम्यादिकै-रिति । शमीपलाशाश्वत्थशिखानां सदर्भाणां ग्रहणम् । शमीमात्रग्रहणेन तेषां यथालाभं परिग्रहो विकल्पश्च सूचितः । यदुक्तं—

"शाखयोदुम्बरस्य वा ।
पलाशशाखया वाथ दर्भमुष्टयाथवा पुनः" ॥

इति । कुशाग्रैः प्रोक्षेदिति चाप्युक्तम् । शान्त्यभिमन्त्रितेनेति । 'शन्नो देवीरि'ति साष्टशतमभिमन्त्र्य तेन प्रोक्षणमुक्तम् । भवनमिति । प्रासादा-न्तर्बहिरपीति भावः ॥ ६७ ॥

---

१. प्रागेवत् स्वयं साधकः कुर्याद् वास्तुबलिं तदापि शिखिनस्तस्येश्वराशामुखे । सौम्यां', २. 'च', ३. 'सलिलोपेतेन शम्यमर्केस्त्वं विप्रस्त्वमिति ब्रुवन् भगवतः प्रासादमभ्युक्षतु ॥ गर्भा' ख. पा० १.

गर्भागारे कलशसुभृतांस्तण्डुलान् गेहमूर्तौ
प्रोत्कीर्यैतत्कलशसलिलैश्चापि सिक्त्वा तयर्चा ।
कृत्वा पुण्याहमपि सशिवं वास्तुवादादि विप्रैः
कृत्वा नीराजनमपि निजास्त्रेण रक्षां च कुर्यात् ॥ ६८ ॥

विमर्शिनी

गर्भागारे गर्भगृहे गेहमूर्तौ प्रासादरूपमूर्तौ कलशसुभृतान् वास्तुकलशस्थान् तण्डुलान् मूलेन प्रोत्कीर्य एतत्कलशसलिलैः वास्तुकलशजलैश्चापि तया 'शन्नो देवीरि'ति ऋचा सिक्त्वा विप्रैः सह 'ओं वास्तुदेवताः प्रीयन्तामि'त्यादिविशेषसहितं पुण्याहं सशिवं वास्तुवादादि शिवं वास्त्वित्यादिमङ्गलयुक्तं कृत्वा नीराजनमपि कृत्वा निजनिजास्त्रेण रक्षां च कुर्यात् ॥ ६८ ॥

विवरणम्

गर्भागार इति । प्राग्वत् क्षालिततले दर्भान् विकीर्य स्वं स्वं पीठमिष्ट्वा प्रासादमूर्त्तिमावाह्य सकलीकृत्य स्नानसमये नीराज्य पूर्वपूजितवास्तुकलशयोर्मध्ये तण्डुलकलशमानाय्य तत्तण्डुलैस्तस्मिन् प्रासादमूर्तौ मूलेन प्रोत्किरणं विधाय व्यापकादि कृत्वा नीराज्य शान्तिकलशमानाय्य तेन 'शन्नो देवीरि'ति तमभिषिच्य तया व्यापकादि कृत्वा अर्घ्यं दद्यात् । विप्रैः पुण्याहमपि कृत्वेति । चतुर्भिरष्टभिर्वा मूर्त्तिपैः सह वास्तुपुण्याहं कृत्वेत्यर्थः । वास्तुदेवताः प्रीयन्तामिति च देवतोद्देशः । सशिवं वास्तुवादादीति । कृत्वेत्यस्याः क्रियाया विशेषणम् । पुण्याहान्ते तैः शिवं वास्त्वित्यपि वाचयेत् । आदिशब्देन 'शान्तिरस्तु' 'पुष्टिरस्त्वि'त्याद्याशिषां ग्रहणम् । तासां पूर्वं वा वाचनम् । यदुक्तम् —

"आशिषो वाचयित्वाग्रे शिवं वास्त्विति वाचयेत् ।"

इति । नीराजनमपीति । कृत्वेत्यनुषङ्गः । पुनः प्रासादमूर्त्तेः पूजाशेषं विधाय बहिर्निष्क्रम्य निजास्त्रेण तालत्रयादिना रक्षां च कुर्यादिति ॥ ६८ ॥

---

1. 'लये निहितदर्भचये निजेन
प्रासादरूपमणुना पुरुषं प्रकल्प्य ।
तस्मिन् समर्प्य घटपूरिततण्डुलानि
मूलेन शान्तिकलशेन तया च सिञ्चेत् ॥
वास्तुपुण्याहमादाय मूर्तिं प्रासादरूपिणीम् ।
तत्स्थास्त्रषट्कवीर्येण गुप्तां सम्भावयेत् सदा ॥ शुद्धो' ख. पठः

*शुद्धोद्‍भवने च सप्तदशकद्रव्यक्रमात् क्षेत्रकं
कृत्वान्तर्नवकं प्रकल्प्य कलशानां बाह्यतो युक्तितः ।
श्रीशेऽन्तर्नवकेऽङ्कुरादिनवकं गन्धोदकं दिग्विदिक्-
खण्डान्तःस्थघटेषु शुद्धसलिलं शेषेषु चापूरयेत् ॥ ६९ ॥

विमर्शिनी

अथाधिवासदिवसात् पूर्वेद्युः कर्तव्यं बिम्बशुद्धिकलशपूजनमाह — शुद्धोद्‍भवन इति । अथ शुद्धोद्‍भवने प्रासादस्योद्‍भागक्लृप्ते मार्जनादिस्थलशुद्धिभिः शुद्धे भवने सप्तदशकद्रव्यक्रमात् कलशपटले सप्तदशद्रव्ये वक्ष्यमाणक्रमात् क्षेत्रं कृत्वान्तः कलशानां नवकं बाह्यतो युक्तितश्च प्रकल्प्य श्रीशेऽन्तर्नवकेऽङ्कुरादिनवकमापूरयेत् । दिग्विदिक्खण्डान्तःस्थघटेषु दिग्विदिक्खण्डानामन्तःस्थितेषु घटेषु गन्धोदकं, शेषेषु घटेषु शुद्धसलिलं चापूरयेत् ॥ ६९ ॥

विवरणम्

अथ तद्वात्रावेव बिम्बशुद्धिकलशपूजेति तां प्रस्तौति — शुद्धोद्‍भवनेऽथेति । प्रासादस्यैशर्यां दिशि स्नपनमण्डपः । तदुक्तम् —

"स्नानमण्डपमैशान्यां भूषयित्वा विशोधयेत् ।"

इति । यद्वा अधिवासमण्डपापेक्षया ऐश्यां दिशि स्यात् । यथोक्तम् —

"प्रागुदीच्यां तु वोदीच्यामधिवासनमण्डपात् ।"

इत्यादि । तदसम्भवे ततोऽपि पश्चादित्युद्‍भवन इत्युक्तम् । यद्वा ओद्‍भवन इति पदम् ईषदुद्‍भवन इति । शुद्धपदेन तत्र मृष्ट्यादिस्थलशुद्धिरुक्ता । सप्तदशकद्रव्यक्रमादिति । क्रमशब्देन 'शरशैलनन्दवर्गा नवोत्तरशतद्विशते चे'त्यादि वक्ष्यमाणक्रमग्रहणम् । अन्तर्नवकमिति । वक्ष्यति च —

"मध्ये पङ्कजकर्णिकादलगताः कुम्भा नव स्युः सदा ।"

इति । बाह्यतो युक्तित इति । सङ्ख्येति शेषः । युक्तिशब्देन तदीयपुटोपपत्तिरभिप्रेयते । यथा सप्तपुटे त्र्येकेति नवपुटेऽङ्काब्धीत्यादि । इह[1] विष्णौ हरिहरे च सप्तदशद्रव्यं शिवादिषु नवद्रव्यम् । सर्वेष्वप्येष एव क्षेत्रविरचनविधिरिति भावः । दिग्विदिक्खण्डान्तःस्थघटेष्विति । दैविकावरणे दिक्कोणखण्डानां ब्रह्मकलशेषु । शेषेष्विति । तदीयपरिकलशेषु ॥ ६९ ॥

---

१. 'शिवादिकपुटक्षेत्रेऽङ्कवर्गादिकाः स्युः कुम्भा इह मध्यतो नवकमेतद् वा' ख. पाठः.

---

* 'शुद्धोद्‍भवनेऽथ सप्त' इति विवरणपाठः ।

*मध्यान्तर्नवखण्डकेषु शिवशास्त्रोर्दिग्विदिक्क्लृप्तितो
दुर्गेभाननयोः प्रदक्षिणतया द्रव्याणि विन्यस्यतु ।
दिक्कोणक्रमतोऽन्तरादि शरजेऽथेशाच्युते मध्यतो
मध्याशाविदिशाक्रमान्नव बहिःखण्डेषु हेमाम्बु च ॥ ७० ॥

विमर्शिनी

शिवशास्त्रोर्नवखण्डकेषु दिग्विदिक्क्लृप्तितो मध्यान्तर्द्रव्याणि विन्यस्यतु । दुर्गेभाननयोः प्रदक्षिणतया मध्यान्तश्च । शरजेऽन्तरादि दिक्कोणक्रमतश्च अथेशाच्युते मध्यतो मध्यखण्डे मध्याशाविदिशाक्रमाद् मध्ये दिग्विदिक्क्रमाच्च नव द्रव्याणि बहिःखण्डेषु बहिःखण्डानामन्तःस्थघटेषु हेमाम्बु च विन्यस्यतु ॥

विवरणम्

मध्यान्तमिति । द्रव्याणि विन्यस्यत्विति सर्वत्र सम्बध्यते । प्रदक्षिणतयेति । प्रागादिखण्डेषु प्रादक्षिण्येन मध्यान्तमित्यर्थः । अन्तरादि दिक्कोणक्रमत इति दैविके दिक्विदिक्खण्डे क्रम उक्तः । मध्यतो मध्याशाविदिशाक्रमान्नवेति । द्रव्याणि विन्यस्यतु । ब्रह्मकलशे तदीयेषु दिग्विदिग्गतपरिकलशेषु चेत्यर्थः । बहिःखण्डेषु हेमाम्बु चेति । दिग्विदिक्क्रमादिति भावः ॥ ७० ॥

क्षीरिश्रीवकुलाम्रचम्पकपलाशाशोकनीपार्जुन-
प्रोत्थान्यत्र तु पल्लवानि कलशे कार्शानवाशादले ।
रक्षोदिक्स्थदले सपद्मकपटीरद्वन्द्वजात्यार्तवं
दर्भस्तम्भसकुन्दनन्द्याभिधदूर्वारोचनासर्षपम् ॥ ७१ ॥

यवव्रीहिस्वर्णं रजततिलकूलद्वितयमृ-
च्छकृद्युक्तं न्यस्येत् सततगतिदिक्पत्रकलशे ।
सहाविष्णुक्रान्तीमधुकरगुडूच्यार्द्रकशमीः
शतावर्या श्यामाकमपि शिवदिक्पत्रकलशे ॥ ७२ ॥

प्रत्यक् फलं न्यसतु गव्यमवाक् कषायं
प्रागुत्तरे च शतमूल्यमृताकुमारीः ।
व्याघ्रीं वचां बहुसुतां च सहां च सिंहीं
वल्मीकसप्तकमृदः कलशेऽथ मध्ये ॥ ७३ ॥

*. 'मध्यान्तम्' इति विवरणपाठः.

ओं सोमाय वनस्पत्यन्तर्गतये नमो मृदन्तमनुः ।
गन्धोदेऽष्टार्णं स्याच्छुद्धोदे द्वादशाक्षरं च हरौ ॥ ७४ ॥

विमर्शिनी

हरावित्यूर्ध्वतो ग्राह्यम् । अत्र हरौ तु कार्शानवाशादले मध्यस्थपद्मस्याग्नेयकोणदलस्थे कलशे क्षीरिश्रीवकुलाम्रचम्पकपलाशाशोकनीपार्जुनप्रोत्थानि क्षीरिवृक्षाद्यर्जुनवृक्षान्तेभ्यो गृहीतानि पल्लवानि न्यसेत् । क्षीरिणः क्षीरवृक्षास्तोरणे वक्ष्यमाणाः । (ശ്രീഃ = കൂവളം. വകുളം = ഇലഞ്ഞി. ആമ്രം = മാവ്.) चम्पकः स्वयमेव । (പലാശം = പ്ലാശ്) अशोकः स्वयमेव । (നീപം = കടമ്പ്. അർജ്ജുനം = മരുത്.) रक्षोदिक्स्थदले निर्ऋतिकोणस्थदलकलशे सपद्मकपटीरद्वन्द्वजात्यार्तवम् । सपद्मकं पद्मकसहितम् । (പദ്മകം = പൽമകം.) पटीरद्वन्द्वं चन्दनं रक्तचन्दनं च । (ജാത്യാർത്തവം = പിച്ചകപ്പൂവ്) दर्भस्तम्बसकुन्दनन्द्यभिधदूर्वारोचनासर्षपम् । (ദർഭസ്തംബം=ദർഭമൂല കന്ദം=കിഴങ്ങ്. നന്ദി=നന്ദ്യാർവട്ടം. രോചന=ഗോരോചന.) सततगतिदिक्पत्रकलशे वायव्यकोणगतकलशे यवव्रीहिस्वर्णं यवाः व्रीहयः स्वर्णं च रजततिलकूलद्वितयमृच्छकृद्युक्तं, कूलद्वयमृद् नदीतीरद्वयस्था मृत् , शकृद् गोमयं, तैर्युक्तं न्यस्येत् । शिवदिक्पत्रकलशे ईशानकोणदलकलशे सहाविष्णुक्रान्तीमधुकरगुलूच्यार्द्रकशमीः (സഹാ=പൂവാംകുറുന്തൽ. മധുകരം=കയ്യുണ്ണി ഗുളൂചി=ചിററമൃത്. ആർദ്രകം=ഇഞ്ചി. ശമീ=വന്നി.) शतावर्या सह । (ശതാവരീ=ശതാവേലി. ശ്യാമാകം=കവിട്ട.) प्रत्यक् पश्चिमे फलं फलोदकं न्यसतु । अवाक् दक्षिणे गव्यं, प्राक् प्राग्भागे कषायम् । उत्तरे शतमूल्यमृताकुमारीः । (ശതമൂലീ=കുഞ്ഞിരിക്ക.) अमृता स्वयम् (കുമാരീ=കററവാഴ. വ്യാഘ്രീ=ചെറുവഴുതിന. വചാ=വയമ്പ്) बहुसुता शतावरी । सहा उक्ता (സിംഹീ=വലിയവഴുതിന.) एताः न्यसतु । अथ मध्ये मध्यस्थे कलशे वल्मीकसप्तकमृदः वल्मीकानां सप्तकादाहृता मृदः । 'ओं सोमाय वनस्पत्यन्तर्गतये नमः' इति मृदन्तमनुः पल्लवादिमृदन्तेषु पूरणे मन्त्रः स्यात् । गन्धोदे गन्धोदकेषु अष्टार्णं, शुद्धोदे द्वादशाक्षरं च ॥ ७१,७२,७३,७४ ॥

विवरणम्

विष्णावङ्कुरादिनवकं तावदाचष्टे — क्षीरिश्रीति । श्रीवृक्षो बिल्वः ।

विवरणम्

पल्लवमङ्कुर एव । कार्शानवाशादले । कुशाङ्कुरम्भिः । तदीयं कार्शानवम् । आशादले दिग्दल इति यावत् । पटीरद्वयं चन्दनद्वयम् ॥ ७१ ॥

कूलद्वितयेति नदीतटद्वयग्रहणम् । सततगतिर्वायुः ॥ ७२ ॥

गव्यमवागिति । दक्षिणतः पञ्चगव्यम् । कषायं प्रागिति पृथग्वाक्यम् । वल्मीकसप्तकमृदः कलशेऽथ मध्ये इति । ब्रह्मकलशे सप्तभ्यो वल्मीकेभ्य आहृता मृद इत्यर्थः । द्रव्यन्यासोऽयमग्न्यादिकोणेपूक्तः प्रदक्षिणः ततोऽप्रदक्षिणः पश्चिमादिदिक्ष्वन्तरन्तत इति ॥ ७३ ॥

मृदन्तमनुरिति । पल्लवादिमृदन्तद्रव्याणां न्यासे मन्त्रः ॥ ७४ ॥

क्राथोदगव्यभसितानि शिवे मृदम्भो-
गोमूत्रदुग्धदधिकं कुशगन्धवारि ।
मृत्साजलं क्वथितवार्यथ पञ्चगव्यं
व्यस्तं समस्तमपि गन्धजलं प्रभेशे ॥ ७५ ॥

विमर्शिनी

शिवे क्वाथोदगव्यभसितानि कषायं पञ्चगव्यं भस्मोदकं च, मृदम्भोगोमूत्रदुग्धदधिकं गोमूत्रं क्षीरं दधि च, कुशगन्धवारि कुशोदकं गन्धोदकं च । क्रमः प्रागुक्तः । न्यसत्विति पूर्वस्मादायाति । प्रभेशे मृत्साजलं क्वथितवारि, अथ व्यस्तं पृथक्स्थितं पञ्चगव्यं पञ्चसु [1]घटेपु, पुनः समस्तं पञ्चगव्यमप्येकस्मिन् घटे, गन्धजलं च ॥ ७५ ॥

व्यस्तं क्रमेण महिषद्विषि पञ्चगव्यं
मृत्क्वाथरत्नसलिलान्यपि गन्धतोयम् ।
पाद्यार्घ्यगव्यकपयांसि दधि द्विपास्ये
क्वाथाम्बुमृत्कुशजलान्यपि गन्धवारि ॥ ७६ ॥

विमर्शिनी

महिषद्विषि व्यस्तं पञ्चगव्यं क्रमेण गोमूत्रगोक्षीरदध्याज्यक्रमेण, मृत्काथरत्नसलिलानि मृज्जलं कषायं रत्नजलं च, गन्धतोयमपि । द्विपास्ये पाद्या-

---

१. 'आग्नेयदि' क. पाठः.

ध्येगव्यकपयांसि पाद्यमर्घ्यं गव्यं च क्षीरं च दधि, क्वाथाम्बुमृत्कुशजलानि कषायं मृज्जलं कुशजलं च, गन्धवार्यपि ॥ ७६ ॥

कौशोदगव्यककषायकदौर्व्यराजी-
मृद्रत्नशुद्धजलगन्धजलं कुमारे ।
मृत्क्वाथकं हरिहरे पृथगास्थितानि
गव्यानि पञ्च फलवार्यखिलौषधं च ॥ ७७ ॥

विमर्शिनी

कुमारे कौशोदगव्यककषायकदौर्व्यराजीमृद्रत्नशुद्धजलगन्धजलं कौशोदं गव्यं कषायं दूर्वोदं सर्षपोदं मृज्जलं रत्नजलं शुद्धजलं गन्धजलं च । हरिहरे मृत्क्वाथकं पृथगास्थितानि पञ्चगव्यानि फलवारि अखिलौषधं च न्यसतु ॥ ७७ ॥

स्वस्वदिक्संस्थितब्रह्मतदङ्गैरिह पूरयेत् ।
मदनद्रुहि तद्द्रव्याण्यपरेषु स्वमूलतः ॥ ७८ ॥

विमर्शिनी

मदनद्रुहि शिवे इह बिम्बशुद्धिकलशपूरणे स्वस्वदिक्संस्थितब्रह्मतदङ्गैः दिक्षु तत्पुरुषादिभिः अग्न्यादिकोणेषु हृदयशिखाकवचशिरोभिः पञ्चब्रह्माङ्गैर्मध्यकलश ईशानेन च (तद्)द्रव्याणि पूरयेद्, अपरेषु देवेषु स्वस्वमूलतश्च ॥ ७८ ॥

विवरणम्

स्वस्वदिक्संस्थितेति ।
पुङ्घोरसद्यवामाः स्युर्दिक्षु कोणेषु हच्छिखे ।
वर्मशीर्षे च मध्ये स्यादीशानः पूरणे मनुः ॥

इति । शिवेऽपि सप्तदशद्रव्यं वा स्यात् । तथोक्तम् —

'हेमरत्नाक्षगन्धाद्भिः पूरयेन्मध्यमं घटम् ।
कषायं पञ्चगव्यं च भस्मोदं मार्त्तिकं जलम् ॥
दिक्षु कोणेषु गोमूत्रं क्षीरं दधि कुशोदकम् ।
अन्तः पद्मदलेष्वष्टौ जलधीन् पूरयेत् क्रमात् ॥

१. 'जि' ख. पाठः.

व्यस्तैर्मन्त्रैश्च सम्पूज्य शुद्धोदैरपरान् घटान् ॥"

इति । समुद्रजलानामष्टगन्धानां चायं विकल्प इति बोद्धव्यम् । वरुणश्च तेषां देवतेति पूरणमन्त्रोऽपि लभ्यत इति ॥ ७८ ॥

स्थाणौ नाकूक्षतीर्थद्विपशिखरिनदीवेदिकाचत्वरोत्था
विघ्ने क्षेत्राखुजाढ्याश्च्युतचरमसरिज्जाश्च्युताद्यन्तिमाः स्युः ।
सक्रोडोत्थाः कुमार्यां सरिदुभयतटक्षेत्रनाकूक्षजाता
मृत्सा शार्ङ्गीश आर्ये करिकिरिवृषवल्मीकनद्युद्भवाश्च ॥ ७९ ॥

विमर्शिनी

मृदादीनि कथयति — स्थाणाविति । स्थाणौ नाकूक्षतीर्थद्विपशिखरिनदीवेदिकाचत्वरोत्थाः वल्मीकवृषशृङ्गस्थतीर्थस्थगजशृङ्गस्थपर्वतस्थनदीगतवेदिकास्थचत्वरस्था मृदः स्युः । विघ्ने क्षेत्राखुजाढ्याः क्षेत्रजाखुजाभ्यां युक्ताः च्युतचरमसरिज्जाः हीनचत्वरस्थनदीगताश्च । कुमार्यां च्युताद्यन्तिमाः रहितवल्मीकचत्वरस्थाः सक्रोडोत्थाः सूकरदारितमृत्सहिताश्च । शार्ङ्गीशे सरिदुभयतटक्षेत्रनाकूक्षजाताः नद्या उभयतटाद् क्षेत्राद् वल्मीकादुक्षशृङ्गाच्च जाता मृत्साः मृदः । आर्ये करिकिरिवृषवल्मीकनद्युद्भवाः गजवराहवृषदन्तेभ्यो वल्मीकनदीभ्यां चोद्भवाश्च ॥ ७९ ॥

विवरणम्

नाकुर्वल्मीकम् । द्विपादिपदैस्तच्छृङ्गग्रहणम् । विघ्ने क्षेत्राखुजाढ्याश्च्युतचरमसरिज्जा इति । शिवोक्ता एव गणपतौ मृदः । किन्तु क्षेत्रमूषिकमृदौ योज्ये, चरमा चत्वरजा नदीजा च हेये इत्यर्थः । च्युताद्यन्तिमाः स्युः सक्रोडोत्थाः कुमार्यामिति । वल्मीकचत्वरमृदौ हेये । वराहमृद्योज्येत्यर्थः । करी गजः । किरिर्वराहः ॥ ७९ ॥

क्षीरिद्विजद्रुमशमीखदिरं कुमार्यां
क्वाथाङ्कं हरिहरे खदिरोनितं तत् ।
विघ्ने पयोद्रुमकपित्थमधूकबिल्वं
शेषैप्रसिद्धिरुपरि स्नपनाभिधाने ॥ ८० ॥

---

१. 'वाः स्युः ॥' ख. पाठः. २. 'रे', ३. 'पे', ४. 'द्रुमप' क. पाठः.

विमर्शिनी

कुमार्यां क्षीरिद्विजद्रुमशमीखदिरं क्वाथाङ्गकं कषायाङ्गम् । हरिहरे खदिरोनितं खदिररहितं तदेव । विघ्ने पयोद्रुमकपित्थमधूकबिल्वम् । (കപിത്ഥം=വ്ളാത്തി മധൂകം=ഇരിപ്പ) शेषप्रासिद्धिः शेषद्रव्याणां प्रकर्षेण सिद्धिः प्राप्तिः उपरि स्नपनाभिधाने कलशपटले ॥ ८० ॥

विवरणम्

द्विजः पलाशः । शेषप्रासिद्धिरिति । विष्णौ फलकषायगन्धानां, शिवे कषायभस्मगन्धानां, शास्तरि कषायगन्धयोर्दुर्गायां रत्नगन्धयोः, विघ्ने पाद्यार्घ्यगन्धानां, स्कन्दे कषायमृद्रत्नगन्धानां, हरिहरे फलस्य च प्रसिद्धिरित्यर्थः ॥८०॥

सर्वौषधानि तिलमाषयवप्रियङ्गु-[1]
गोधूमशाल्यणुसमाह्वयकान्यथ[2] स्युः ।
नीवारगार्मुकगवीधुकजर्तिलाख्य-
श्यामाकवेणुफलवास्तुकसंयुतानि ॥ ८१ ॥

विमर्शिनी

अथ हरिहरे तिलमाषयवप्रियङ्गुगोधूमशाल्यणुसमाह्वयकानि (അണു=മത്തംപുല്ല്) इति ग्राम्याणि सप्त । नीवारगार्मुकगवीधुकजर्तिलाख्यश्यामाकवेणुफलवास्तुकसंयुतानि । (നീവാരം=വരിനെല്ല്. ഗാർമ്മുകം=കാട്ടുപയറ. ഗവീധുകം=ചിലന്നി. ജർത്തിലം=കാട്ടെള്ള്. ശ്യാമാകം=കവിട്ട. വേണുഫലം=മുളനെല്ല്. വാസ്തൂകം=വാസ്തുചീര) इत्यारण्यकैः सप्तभिः सहितानि सर्वौषधानि स्युः । तथाचाहुः —

"तिलमाषव्रीहियवाः प्रियङ्गवश्चाणवश्च गोधूमाः ।
एता ग्रामौषध्यो नीवाराद्यास्तथैव चारण्याः ॥
नीवारश्यामाका गवीधुका जर्तिलाश्च वेणुफलाः ।
गार्मुकवास्तुसमेता आरण्याः सप्त च स्युरौषध्यः ॥"

इति ॥ ८१ ॥

विवरणम्

सर्वौषधानीति । तिलादीनि सप्त ग्राम्याणि, नीवारादीनि सप्तारण्यानीति विभागः । यद्वा —

१. 'नि यवमाषतिलव्रि', २. 'नि सप्त ।' ख. पाठः

"तिलमाषयवव्रीहिगोधूमाणुप्रियङ्गवः ।
तथा श्यामाकनीवारजर्त्तिलाश्च गवेधुकाः ॥
गार्मुकाणुयवा वास्तुनिष्पावाश्च कुलस्थकाः ।
स्मृता सप्तदशौषध्य आढकीभिस्समन्विताः ॥"

इति ॥ ८१ ॥

**मूलाष्टोर्ध्वशताज्यहुत्युदितसंपातं समर्प्यात्मभू-**
**खण्डस्थेषु हिरण्यवर्णमनुमन्येषु स्वमूलं हरौ ।**
**सर्वत्र स्वकमूलमेव परिजप्यान्येषु वस्त्रैर्नवै-**
**राच्छाद्येत्यधिवास्य तत्स्नपनतः पूर्वेऽह्नि रक्षेद् घटान् ॥ ८२ ॥**

विमर्शिनी

क्रियाशेषमाह — मूलेति । एवं कलशान् सम्पूर्य सम्पूज्य मूलाष्टोर्ध्वशताज्यहुत्युदितसम्पातं मूलेनाष्टोर्ध्वं शतमाज्यं हुत्वा तत्सम्पातं कलशेषु समर्प्य हरौ आत्मभूखण्डस्थेषु मध्यखण्डस्थकलशेषु हिरण्यवर्णमनुं 'हिरण्यवर्णां हरिणीमि'ति मन्त्रम्, अन्येषु खण्डगतकलशेषु स्वमूलम् अन्यत्र देवेषु सर्वत्र अन्तर्बहिश्च स्वकमूलं स्वस्वमूलमेव परिजप्य नवैर्वस्त्रैराच्छाद्य इति उक्तप्रकारेणाधिवास्य तत्स्नपनतः पूर्वेऽह्नि घटानधिवास्य रक्षेत् ॥ ८२ ॥

विवरणम्

मूलाष्टोर्ध्वशतेति । कलशक्षेत्रोदग्भागेऽग्निमाधायाग्निमुखं विधाय तत्तन्मूलेनाष्टोत्तरशतवारम् आज्यं हुत्वा पूर्णामपि हुत्वा होमशेषं समाप्य तदुत्थं सम्पातं द्रव्यकलशेषु सिक्त्वा मूलं जपेत् । आत्मभूर्ब्रह्मा । विष्णौ ब्राह्मखण्डगतनवकलशेषु हिरण्यवर्णामिति प्रागाद्यन्यखण्डेषु स्वमूलमपि जपेत् । अन्येषु सर्वत्र स्वकमूलमेव परिजप्येत्यन्वयः । सर्वत्रेति । बाह्यखण्डेषु ब्राह्मखण्डे चेत्यर्थः । इत्यधिवास्येति । उक्तप्रकारेणेत्यर्थः । स्नपनतः पूर्वेऽह्नीति । बिम्बाधिवासदिनपूर्वदिने । रात्राविति भावः । रक्षेदिति तालत्रयादिभिरिति शेषः ॥ ८२ ॥

**इति तन्त्रसमुच्चये तृतीयः पटलो मङ्गलबीजरोपणाढ्यः ।**
**जलवासनवास्तुयागबिम्बाप्लवकुम्भार्चनचर्चितः प्रणीतः ॥ ८३ ॥**

विवर्शिनी

पटलमुपसंहरति — इतीति । तन्त्रसमुच्चये ग्रन्थे तृतीयः पटलः प्रणीतः कृतः । कथंभूतः, मङ्गलबीजरोपणाढ्यः मङ्गलबीजरोपणाभिधानेन परिपूर्णः, जलवासनवास्तुयागबिम्बाप्लवकुम्भार्चनचर्चितः जलाधिवासनस्य प्रासादशुद्ध्या-दिवास्तुपूजायाः बिम्बशुद्धिकलशार्चनस्य चोक्तिभिः पूजितः ॥ ८३ ॥

इति तन्त्रसमुच्चयविमर्शिन्यां

तृतीयः पटलः ॥

---

## अथ चतुर्थः पटलः ।

अधिवासनमण्डपं तदर्हेऽह्न्यथ सङ्गृह्य गुरुर्विशोधयेत ।
रुचिरैः परिभूषितं वितानप्रमुखैर्मृष्टसुलिप्तभूमिभागम् ॥ १ ॥

विमर्शिनी

अथाधिवासदिवसे प्रातरेव मण्डपसंस्कारादिकं कर्तव्यमिति विवक्षन् पटलमारभते — अधिवासनमण्डपमिति । अथ गुरुः स्वयं तदर्हे तद्योग्ये अह्नि रुचिरैः सुन्दरैः वितानप्रमुखैः वितानाच्छादनाद्यैः परिभूषितं परितोऽलङ्कृतं मृष्टसुलिप्तभूमिभागं मार्जनालेपनाभ्यां शोभितभूप्रदेशम् अधिवासनमण्डपं देवस्याधिवासनार्थं संपादितं मण्डपं संगृह्य परिगृह्य विशोधयेत विशेषेण शोधयेत ॥ १ ॥

विवरणम्

अथाधिवासदिवसे दिवाकार्यं सर्वं वदन् अधिवासमण्डपसंस्कारमारभते — अधिवासनमण्डपमिति । तदर्हेऽह्नीति । तदुचिते दिवसे । दिवैवेत्यर्थः । सङ्गृह्येति । प्रासादपरिग्रहवन्मण्डपपरिग्रहो द्रष्टव्यः । विशोधयेतेति । वक्ष्यमाणप्रकारेणेति भावः । वितानप्रमुखैरिति । वितानस्तम्भपरिवेष्टनादिभिः ।

"घण्टाचामरमालाभिर्धूपदीपाष्टमङ्गलैः ।
पल्लवैश्शालिकणिकैर्मुक्तादामफलादिभिः ॥" अपि चेति ।

मृष्टसुलिप्तभूमिभागमिति लौकिकमार्जनलेपनमुक्तम् । यदुक्तं —

"वेदिकां च तथालिन्दं प्राङ्गणं परिशोध्य च ।"

इति ॥ १ ॥

स्नात्वा शुद्धनवीनवस्त्रपरिधाय्याचम्य तन्मण्डपं
स्वास्त्रेक्षादिनिरस्तभूतनिवहं प्राविश्य पर्येत्य च ।
नैर्ऋत्यामुपविश्य शोधितसमिष्टात्माथ विघ्नेश्वरं
संपूज्याभिहितक्रमात् त्रिगुणसूत्रादीनि संसादयेत् ॥ २ ॥

विमर्शिनी

तच्छोधनविधानमाह — स्नात्वेति । गुरुर्विशेषतः स्नात्वा शुद्धनवीनवस्त्रपरिधायी शुद्धेन नवेन वस्त्रेण परिहितो भूत्वा आचम्य स्वास्त्रेक्षादिनिरस्तभूतनिवहं स्वस्वास्त्रेक्षणादिना निरस्तोऽपसारितो भूतसमूहो यत्र तन्मण्डपं प्राविश्यान्तर्गत्वा पर्येत्य चालिन्दमार्गेण परितश्च गत्वा नैर्ऋत्यां निर्ऋतिकोणे उपविश्य शोधितसमिष्टात्मा आत्मनः शोधनं मन्त्रभावनं शङ्खपूरणमात्माराधनं च कृत्वा अथ विघ्नेश्वरं संपूज्य त्रिगुणसूत्रादीनि अभिहितक्रमात् प्रासादशोधने अभिहितेन क्रमेण संसादयेत् ॥ २ ॥

विवरणम्

स्वास्त्रेक्षादिनिरस्तभूतनिवहमिति । स्वास्त्रनिरीक्षणादिभिर्मण्डपे सम्भाव्यमानभूतनिरासः प्रथमतः कार्य इति । तदुक्तम् —

"ततस्तालत्रयच्छोटीपार्ष्णिघातनिरीक्षणैः ।
दिव्यान्तरिक्षभूमिष्ठान् विघ्नान् द्वारगतान् हरेत् ॥
प्रधानद्वारमासाद्य नाराचास्त्रं प्रयोजयेत् ।"

इति । पुनस्तालत्रयाद्यग्निप्राकारान्तं विधायाधिवासमण्डपस्यान्तर्नाराचास्त्रं क्षिप्त्वेत्यत्र तालत्रयादिकमिदानीं वास्त्रतः प्रोक्ष्य चेत्येतदनन्तरं वा कार्यम् । स्वास्त्रेण निरीक्षणादीनि कार्याणि । तेषां क्रमानियमः । यद्वा निरीक्षणं नाराचास्त्रक्षेपणं च प्रधानमित्येवमभिधानम् । प्राविश्येति । प्रधानद्वारेणेति शेषः । पर्येत्य चेति । अलिन्दमार्गेणेति भावः । शोधितसमिष्टात्मेति देहशुद्ध्याद्यात्माराधनान्तमुक्तम् । अभिहितक्रमादिति । प्रासादशुद्धिविधाविति भावः ॥ २ ॥

विप्राननुज्ञाप्य निरेत्य मुख्यद्वारास्त्रतः प्रोक्ष्य च मण्डपं तत् ।
ईशादि नीप्रोपरि तन्तुदर्भस्रग्भ्यां यथोक्तं परिवेष्टयेच्च ॥ ३ ॥

---

१. 'तु ॥ निर्गत्येशाद्यन्तमेतत् समन्ताद् व्यस्ताव्यस्तेनोदितेन ध्रुवेण ।
वर्मास्त्राभ्यां वेष्टयेद् वा त्रितन्तुदर्भस्रग्भ्यां मण्डपं नीप्रदेशे ॥' ख. पाठः.

विमर्शिनी

विप्रान् दानैरनुज्ञाप्य मुख्यद्वारा प्रधानद्वारेण निरेत्य निर्गत्य अस्त्रतः तन्मण्डपं च प्रोक्ष्य तालत्रयादि कृत्वा तन्तुकुशस्रग्भ्यां नीप्रोपरि नीप्रस्योपरिभागे यथोक्तमीशादीशपर्यन्तं परिवेष्टयेच्च ॥ ३ ॥

विवरणम्

विप्राननुज्ञाप्येति । 'दत्त्वा धेनूर्द्विजेभ्य' इत्याद्युक्तं सर्वमभिप्रेतम् । यथोक्तमिति । ईशान्तं व्यस्तसमस्तताराभ्यामित्यर्थः ॥ ३ ॥

सर्वत्राप्यथ तोरणांश्चतसृषु प्रागादिदिक्षु क्रमात्
केतूंश्चाष्टसु दर्भपल्लवपटीसंभूषितान् स्थापयेत् ।
द्वौ द्वौ द्वार्यथवा हरीशमहिषार्योस्तोरणाभ्यन्तरे
विन्यस्येद् वृषवाहने नवसु दिक्षूर्ध्वावसानं पुनः ॥ ४ ॥

विमर्शिनी

अथ सर्वत्र सर्वदेवेष्वपि पूर्वद्वारप्राधान्ये पश्चिमद्वारप्राधान्येऽपि प्रागादिष्वेव चतसृषु दिक्षु क्रमात् तोरणान् स्थापयेत्, दर्भपल्लवपटीसंभूषितान् दर्भैः पल्लवैः पताकया च समलङ्कृतान् केतून् ध्वजांश्च अष्टसु प्रागादिदिक्षु । हरीशमहिषार्योः अथवा द्वारि तोरणाभ्यन्तरे तोरणस्यान्तर्भागे द्वौ द्वौ केतून् विन्यस्येत् । वृषवाहने पुनर्नवसु दिक्षूर्ध्वावसानम् ऊर्ध्वगतमन्त्यमीशानकोण एव विन्यस्येत् ॥ ४ ॥

विवरणम्

केतूंश्चाष्टस्विति । प्रागादिदिक्ष्वित्यनुषङ्गः । दर्भपल्लवपटीसम्भूषितानित्युभयेषां विशेषणम् । पटी तोरणेष्वावेष्टनपटः । ध्वजेषु तत्पट्टिकेति भेदः । तोरणेषु स्रगलङ्करणमपीष्यते । द्वौ द्वाविति । केतुशब्दोऽनुवर्तते । तोरणाभ्यन्तर इति । पूर्वत्र दिग्ध्वजानामपि समानम् । ऊर्ध्वावसानमिति । नवमं ध्वजमैशबाह्य उपरिबुद्ध्या विन्यसेत् । यदुक्तम् — 'नवमरिशिवसन्निधावि'ति ॥ ४ ॥

---

१. 'ध्वाशासु पूर्वादितः', २. 'दिक्षु प', ३. 'ताकादर्भसंभूषितान् । द्वौ' ख. पाठः.

प्लाक्षौदुम्बररौहिणाश्वलदलोत्थश्चेश्वरे तोरणाः
सार्ये ते गुहविघ्नयोर्वटभवान्त्यास्ते हरीशाच्युते ।
प्रोक्ताः प्लाक्षचतुर्थपैप्पलपुरोगास्तेऽपि मध्यस्थयुग्-
व्यत्यासान्महिषद्विषि स्युरखिलेऽपीष्टा ध्वजा वैणवाः ॥ ५ ॥

विमर्शिनी

तोरणादीनाह — प्लाक्षेति । सार्ये शास्तृसहिते ईश्वरे प्लाक्षौदुम्बररौहिणाश्चलदलोत्थश्च । रोहिणो वटः । चलदलोऽश्वत्थः । तोरणाः तोरणवृक्षाः प्रोक्ताः स्युः । गुहविघ्नयोः वटभवान्त्याः ते प्लक्षोदुम्बराश्वत्थवटाः । हरीशाच्युते शिवनारायणविष्ण्वोः प्लाक्षचतुर्थपैप्पलपुरोगाः ते अश्वत्थोदुम्बरवटप्लक्षाः । महिषद्विषि तेऽपि मध्यस्थयुग्व्यत्यासाद् अश्वत्थवटोदुम्बरप्लक्षाः । अखिलेऽपि वैणवाः ध्वजाश्चेष्टाः स्युः ॥ ५ ॥

विवरणम्

ते गुहविघ्नयोर्वटभवान्त्या इति । प्लक्षोदुम्बराश्वत्थवटजाः । हरीशाच्युत इति । पिप्पलोदुम्बरवटप्लक्षजाः । तेऽपि मध्यस्थयुग्व्यत्यासादिति । प्लक्षवटोदुम्बराश्वत्थजाः ॥ ५ ॥

द्वारां पार्श्वयुगे कृतास्त्रखननादिक्षिप्तदर्भाक्षता-
दीष्टाब्जासनकेऽवटेऽस्त्रविहितोक्षादीन् क्रमात् तोरणान् ।
योगेयोगऋचाङ्घ्रियुग्भिरपि देवस्येति शूलैः सुयो-
ज्योत्तिष्ठेत्यधिदैवनाम*भिरपि न्यस्येच्छिवे मन्त्रवित् ॥ ६ ॥

विमर्शिनी

स्थापनक्रियामाह — द्वारामिति । मन्त्रविद् मन्त्रविशेषज्ञो गुरुः शिवे द्वारां द्वाराणां पार्श्वयुगे पार्श्वद्वये कृतास्त्रखननादिक्षिप्तदर्भाक्षतादीष्टाब्जासनके कृतमस्त्रेण खननादि खननहरणगोमयजलोक्षणानि यत्र, क्षिप्तं दर्भाक्षतादि दर्भाक्षतगन्धपुष्पाणि च यत्र, इष्टं पूजितं 'पद्माय नमः' इति पीठं च यत्र, तस्मिन्नवटे गर्ते अस्त्रविहितोक्षादीन् अस्त्रेण कृतोक्षणादीन् । आदिशब्देन शोषणादिकं, स्वस्वनाममन्त्रेण प्राणायामः पूजनं चोच्यते । तोरणान् क्रमाद् योगेयोगऋचा 'योगे योगे तवस्तरमि'ति मन्त्रेण अङ्घ्रियुग्भिः पादद्वयैः, 'देवस्य त्वे'ति मन्त्रेण शूलैरपि सुयोज्य 'उत्तिष्ठे'त्यृचा अधिदैवनामभिः 'प्रमोदाय नमः' इत्यादिनाममन्त्रैरपि न्यस्येत् स्थापयेत् ॥ ६ ॥

---

* नाममन्त्रुभिर्न्यस्येच्छिवे' इति विवरणरीत्या पाठः.

विवरणम्

**कृतास्त्रखननादिक्षिप्तदर्भाक्षतादीष्टाब्जासनक** इत्येकं पदम् । **पूर्वमस्त्रेण** द्वारदक्षिणवामपार्श्वबहिर्भागे तोरणपादोचिततया खननं पांसुनिर्हरणं गोमयजला-लेपनं प्रोक्षणं च कृत्वा प्रणवेन गन्धपुष्पाक्षतोपेतान् ह्रस्वदर्भान् निक्षिप्य पद्म-मात्रं पीठमर्चयेदित्यभिप्रायः । अस्त्रविहितोक्षादीनिति । अस्त्रप्रोक्षणं प्रागुक्त-दर्भाद्यलङ्करणं शोषणादिकं तत्तन्मन्त्रप्राणायामपूजनमित्येतत्सर्वमुक्तम् । स्थापनां-नन्तरमेव वस्त्रस्रगलङ्करणमुचितमिति । क्रमात्तोरणानिति । शिवे 'उत्तिष्ठे'त्यधिदैव-नाममनुभिर्न्यस्येदित्यन्वयः । पादैश्शूलैश्च योजनमस्त्रप्रोक्षणानन्तरं कार्यमिति ज्ञेयम् । मन्त्रविदिति प्रणवपुटितत्वं नमोन्तत्वमप्युक्तम् ॥ ६ ॥

**तैरेवेषुभवेऽथ तैर्मुररिपौ स्योनापृथिव्या युतै-**
**र्वेदाद्यैर्महिषारिशास्तृगणपेष्वीशाच्युते तारतः ।**
**प्राग्द्वारदक्षिणपार्श्वपूर्वविहितस्थानेषु संस्थापयेत्**
**केतूंश्च क्रमविद् द्वयेषु यजतामावाह्य तद्देवताः ॥ ७ ॥**

विमर्शिनी

**इषुभवे** तैरेव अधिदैवनामभिरेव, अथ मुररिपौ स्योनापृथिव्या ऋचा युतैस्तैरधिदैवनामभिः, महिषारिशास्तृगणपेषु वेदाद्यैः 'अग्निमीळे' 'इषे त्वा' 'अग्न आयाहि' शन्नो देवीः' इति चतुर्भिर्मन्त्रैः ईशाच्युते तारतश्च न्यस्येत् । पुनः क्रमवित् स्थानक्रमं मन्त्रक्रमं च वेत्ता गुरुः प्राग्द्वारदक्षिणपार्श्वपूर्वविहित-स्थानेषु प्राग्द्वारस्य दक्षिणं पार्श्वं, दक्षिणद्वारस्य पश्चिमं पार्श्वमित्यादिविहितेषु स्थानेषु केतूंश्च तथा संस्थापयेत् । द्वयेषु तोरणेषु ध्वजेषु च तद्देवता आवाह्य यथोक्तरीत्या यजताम् ॥ ७ ॥

विवरणम्

**तैरेवेषुभव** इति । अधिदैवनाममनुभिरेवेत्यर्थः । अस्त्रविहितोक्षादीन् क्रमात् तोरणानिति सर्वेष्वपि सम्बन्धनीयम् । वेदाद्यैर्महिषारिशास्तृगणपेष्विति । 'अग्निमीळे' 'इषेत्वोर्जे त्वा' 'अग्न आयाहि वीतये' 'शन्नो देवीरि'त्येभिर्वेदादि-भवैर्मन्त्रैः क्रमात्तोरणान् स्थापयेत् । तेषु तत्तद्देवतामन्त्रयोग इति भावः । ईशाच्युते तारत इति । यदुक्तम्—

"प्रणवेन तु संस्थाप्य पूजयेत् स्वैश्च नामभिः ।"

---

१. 'तानामयो' घ. पाठः.

इति । प्राग्द्वार्दक्षिणेति । प्राग्द्वारस्य दक्षिणपार्श्वपूर्वकेषु केतूंश्चाष्टसु द्वौ द्वौ द्वारीत्येवं विहितेषु स्थानेष्विति । प्राग्द्वारदक्षिणपार्श्वे तोरणाभ्यन्तरे पुनरग्निकोणे ततो दक्षिणद्वारस्य पश्चिमपार्श्वे तोरणाभ्यन्तरे पुनर्निर्ऋतिकोणे इत्यादि । तथा प्राग्द्वारदक्षिणपार्श्वे उत्तरपार्श्वे च तोरणाभ्यन्तरे ततो दक्षिणद्वारपश्चिमपार्श्वे पूर्वपार्श्वे चेत्यादि इति । एतदेव सर्वं क्रमविदित्युक्तम् । द्वयेषु यजतां आवाह्य तद्देवता इति । द्वयेषु तोरणेषु ध्वजेषु च तत्तत्तोरणस्थापनानन्तरं तत्तद्देवतामपि तस्मिंस्तस्मिन्नावाह्य पूजयेत् । पुनस्तत्तद् ध्वजस्थापनानन्तरं तत्तद्देवताः तस्मिं-स्तस्मिन्नप्यावाह्य पूजयेत् । अङ्गाभावे व्यापकमात्रं सकलीकरणम् । यद्वा प्रणवेन षडङ्गविधिः । अथवा अं सुशोभनाय नमः । मां हृदयाय नमः इं सुशोभनाय नमः ईं शिरसे स्वाहेत्यादीनि षडङ्गानि स्युः ॥ ७ ॥

सुशोभनः शार्ङ्गधरे सुभद्रः सुकर्मनामा च तथा सुहोत्रः ।
शिवे प्रमोदाभयशान्तसंज्ञा महांश्च चत्वार इति प्रदिष्टाः ॥ ८ ॥

विमर्शिनी

देवताः पठति— सुशोभन इत्यादिभिः । शार्ङ्गधरे सुशोभनः सुभद्रः सुकर्मनामा सुहोत्रश्च प्रदिष्टाः उक्ताः । अत्रत्या नामसंज्ञाभिधाह्वयादिकाः क-प्रत्ययश्च स्वतोऽर्थविशेषाभावात् पद्याविरोधार्थमेव कल्पिताः । शिवे प्रमोदाभय-शान्तसंज्ञा महांश्च इति चत्वारः ॥ ८ ॥

विवरणम्

इदानीं तद्देवता उपदिशति — सुशोभन इति ॥ ८ ॥

सुमङ्गलः स्थाणुहरौ सुहोत्रस्तथैव कल्याणकभद्रकौ च ।
यज्ञेशनामा महिषाभिमातौ प्रभाकरो मङ्गलसुप्रभौ च ॥ ९ ॥

विमर्शिनी

स्थाणुहरौ सुमङ्गलः सुहोत्रः तथा कल्याणकभद्रकौ च । महिषाभि-मातौ महिषशत्रौ यज्ञेशनामा प्रभाकरो मङ्गलसुप्रभौ च ॥ ९ ॥

षाण्मातुरे स्युर्वरदो यशोदो द्वौ पुष्टिदश्रीप्रदसंज्ञितौ च ।
विघ्ने सुपूर्णाह्वयपूर्णभद्रौ प्रशान्तनामा विजयाभिधश्च ॥ १० ॥

१. 'पूर्वदक्षिणद्वारप' घ. पाठः.

विमर्शिनी ।

षाण्मातुरे वरदो यशोदः पुष्टिदश्रीप्रदसंज्ञितौ द्वौ च । विघ्ने सुपूर्णा-ह्वयपूर्णभद्रौ प्रशान्तनामा विजयाभिधश्च ॥ १० ॥

आर्यः शास्ता गुहासन्नः सेनानीश्च प्रभापतौ ।
इति सप्तसु संप्रोक्ताः क्रमात् तोरणदेवताः ॥ ११ ॥

विमर्शिनी

प्रभापतौ आर्यः शास्ता गुहासन्नः सेनानीश्च । इति सप्तसु देवेषु क्रमात् तोरणदेवताः संप्रोक्ताः ॥ ११ ॥

कुमुदकुमुदाक्षसंज्ञौ लक्ष्मीशे पुण्डरीकवामनकौ ।
अथ शङ्कुकर्णसर्वादिकनेत्रौ सुमुखसुप्रतिष्ठितकौ ॥ १२ ॥

विमर्शिनी

लक्ष्मीशे कुमुदकुमुदाक्षाद्या ध्वजेशाः । सर्वादिकनेत्रः सर्वनेत्रः ॥ १२ ॥

विवरणम्

वामनकसुप्रतिष्ठितकवीरभद्रकेषु ककारो वृत्तानुरोधार्थ एवेति ज्ञेयम् ॥ १२ ॥

भृङ्गीशकार्त्तिकेयौ वृषनन्दीशौ शिवे महाकालः ।
कुम्भोदरो महोदरनामाथो वीरभद्रको ब्रह्मा ॥ १३ ॥

विमर्शिनी

शिवे भृङ्गीशाद्या नव ॥ १३ ॥

शिवशार्ङ्गिणि गिरिशोत्सवविधास्यमानाः स्युरष्ट नन्द्याद्याः ।
भृङ्गीशाद्या नव वा कुमुदात्माद्यैस्तथाष्टभिः सहिताः ॥ १४ ॥

विमर्शिनी

शिवशार्ङ्गिणि कुमुदात्माद्यैरष्टभिः सहिताः गिरिशोत्सवविधास्यमानाः शिवस्योत्सवे वक्ष्यमाणा नन्द्याद्या अष्ट स्युः 'नन्दिने कुमुदात्मने नम' इत्याद्यः । तथा कुमुदात्माद्यैरष्टभिः साहिताः भृङ्गीशाद्या नव वा । 'भृङ्गीशाय कुमुदात्मने नम' इत्याद्यष्ट । नवमे 'ब्रह्मणे नम' इत्येव ॥ १४ ॥

१. 'ज्या' ख. पाठः. २. 'न्ति' क. पाठः. ३. 'नः' ख. पाठः.

विवरणम्

कुमुदात्माद्यैरिति । यथा 'नन्दिने कुमुदात्मने नमः' इत्यादि, 'भृङ्गीशाय कुमुदात्मने नमः' इत्यादि । नव वेति । भृङ्गीशादिपक्षे नवसु दिक्षूर्ध्वावसानमित्येतदिष्यते । तत्र नवमे ध्वजे केवल एव ब्रह्मा पूज्य इत्यपि प्रतिपादितं भवति ॥ १४ ॥

काली कराली विरजा मन्दरा विन्ध्यवासिनी ।
सुप्रभा सिंहवक्त्रान्त्या दुर्गायां दैत्यमर्दिनी ॥ १५ ॥

विमर्शिनी

दुर्गायां कालीकरालाद्याः । अन्त्या दैत्यमर्दिनी च ॥ १५ ॥

गोप्ता च पिङ्गलाक्षश्च वीरसेनश्च शाम्भवः ।
त्रिणेत्रशूलिनौ दक्षभीमरूपौ च शास्तरि ॥ १६ ॥

विमर्शिनी

शास्तरि गोप्त्रादयः ॥ १६ ॥

स्कन्ददन्तीन्द्रमुखयोरिन्द्राद्या दिगधीश्वराः ।
इति सप्तसु संप्रोक्ताः क्रमेण ध्वजदेवताः ॥ १७ ॥

विमर्शिनी

स्कन्ददन्तीन्द्रमुखयोः, दन्तीन्द्रमुखो गणपतिः, इन्द्राद्या दिगधीश्वराः लोकपाला एव । इति सप्तसु देवेषु क्रमेण ध्वजदेवताः संप्रोक्ताः ॥ १७ ॥

इष्ट्वा बलिं तोरणदेवताभ्यो ध्वजाधिपेभ्योऽपि च वाद्यहृद्यम् ।
दत्त्वा समाचम्य समेत्य चान्तः समाचरेद् द्वारघटार्चनाद्यम् ॥ १८ ॥

विमर्शिनी

एवमिष्ट्वा तोरणदेवताभ्यो ध्वजाधिपेभ्योऽपि च वाद्यहृद्यं वाद्यघोषैर्मनोहरं यथा भवति तथा बलिं दत्त्वा समाचम्य अन्तः समेत्य द्वारघटार्चनाद्यं समाचरेच्च ॥ १८ ॥

विवरणम्

इष्ट्वेति । बलिदानाङ्गतया पूजोक्ता । बलिं दत्त्वेत्यन्वयः । शुद्धान्नेन भूतकूरहविषा वाद्यं बलिः । 'सर्वधान्येन सम्पन्नं पललेन विमिश्रितम्' । इति चोक्तम् ॥ १८ ॥

प्राग्द्वार्दक्षिणसौम्यपार्श्वसमुपक्रान्त्या चतुर्दिक्ष्वपि
द्वाःस्थान् पूर्णघटेषु विष्णुगुहविघ्नार्येश्वरेषु द्विशः ।
द्वाःशाखासु यजेत वा शिवहरौ द्वाःस्थानिहाष्टासु दि-
क्ष्वाशेशान् कलशेषु केवलममून् वै तेषु सुम्भद्विषि ॥ १९ ॥

विमर्शिनी

**विष्णुगुहविघ्नार्येश्वरेषु** पञ्चसु चतुर्दिक्ष्वपि द्विशः द्वौ द्वौ पूर्णघटेषु पूरितकलशेषु प्राग्द्वार्दक्षिणसौम्यपार्श्वसमुपक्रान्त्या पूर्वद्वारस्य दक्षिणोत्तरपार्श्वक्रमेण तथा दक्षिणस्य पश्चिमपूर्वक्रमेण तथान्ययोरपि तत्क्रमेणारभ्येत्यर्थः, द्वाःस्थान् यजेत । शिवहरौ द्वाःशाखासु द्वाःस्थान् यजेत वा न वा । इह शिवहरौ अष्टासु दिक्षु कलशेषु आशेशान् लोकपालान् यजेत । सुम्भद्विषि तेषु कलशेषु केवलममून् आशेशान् वै यजेत ॥ १९ ॥

विवरणम्

**प्राग्द्वार्दक्षिणसौम्यपार्श्वसमुपक्रान्त्येति** । यथा प्राग्द्वारस्य दक्षिणपार्श्वे सौम्यपार्श्वे च दक्षिणद्वारस्य पश्चिमपार्श्वे पूर्वपार्श्वे चेत्यादि । द्वारशाखासु यजेत वा शिवहराविति । प्राग्द्वार्दक्षिणसौम्यपार्श्वसमुपक्रान्त्येति सम्बध्यते। द्वाराणां द्विद्विशाखयोः द्वौ द्वौ द्वाःस्थावुक्तक्रमेण पूजयेत्, नवा पूजयेदित्यर्थः । अष्टासु दिक्ष्विति । द्वाःस्थपूजने तदपूजनेऽपि प्रागाद्यष्टदिक्षु कलशेषु इन्द्राद्यष्ट दिक्पालाः पूज्या इत्यर्थः । यदुक्तम् —

"द्वाःस्थौ सम्पूजयेद् द्वारशाखयोर्मध्यतोऽधिपान् ।
इन्द्रादीन् पूर्णकुम्भेषु"

इत्यादि । केवलममून्वै तेषु सुम्भद्विषीति । प्रागाद्यष्टदिग्गतपूर्णकुम्भेषु केवलमिन्द्रादिदिक्पालानेव वा पूजयेत् । यद्वा, तोरणकलशैस्सहैव दिक्कलशेष्विन्द्रादिपूजा । यद्वा तोरणकलशैस्सह द्वारकलशपूजेति विकल्पाभिप्रायः । यदुक्तम्—

"तोरणध्वजमूलेषु घटेष्वर्च्याः स्वदेवताः ।
दिक्क्रमादष्टकुम्भेषु दिगीशान् वा समर्चयेत् ॥"

इति । यज्ञेशादयस्तोरणकलशदेवताः कालीकराल्याद्याश्च ध्वजमूलगतद्वारकलशदेवता इति ॥ १९ ॥

पद्मरागं प्रवालं विडूरोद्भवं
पुष्यनीलाश्मगर्भाणि मुक्ताफलम् ।
स्फाटिकं च न्यसेद् विष्णुविष्वक्शयो-
र्द्वारकुम्भेषु हेमापि वा सर्वतः ॥ २० ॥

विमर्शिनी

विष्णुविष्वक्शयोर्द्वारकुम्भेषु[1] पद्मरागं प्रवालं विडूरोद्भवं वैडूर्यं पुष्यनीलाश्मगर्भाणि, अश्मगर्भं मरतकं, मुक्ताफलं स्फाटिकं च न्यसेत्, सर्वतः सर्वत्र हेम स्वर्णमपि वा ॥ २० ॥

विवरणम्

हेमापि वा सर्वत इति । वैष्णवापेक्ष एव विकल्पः । सर्वतः सर्वेष्वपि कलशेषु तोरणकलशेषु दिक्कलशेष्वपीत्यर्थः । यदुक्तम् —

"साधारेष्वथ कुम्भेषु जलपूर्णेषु देशिकः ।
सहिरण्येषु सर्वेषु मण्डितेष्वथ लोकपान् ॥"

इति ॥ २० ॥

द्वारपाला हरौ पूर्णपुष्करानन्दनन्दनाः ।
वीरसेनसुषेणौ च सम्भवप्रभवौ क्रमात् ॥ २१ ॥

विमर्शिनी

हरौ पूर्णपुष्कराद्याः द्वारपालाः क्रमात् स्युः ॥ २१ ॥

स्थाणौ महोदरमहाकायमहाकण्ठका महोरस्कः ।
अग्न्यादिजिह्वनेत्रौ तदनु विरूपाक्षको विशालाक्षः ॥ २२ ॥

विमर्शिनी

स्थाणौ महोदराद्याः । अग्न्यादिजिह्वनेत्रौ अग्निजिह्वोऽग्निनेत्रश्च ॥ २२ ॥

विवरणम्

महाकण्ठकविरूपाक्षकगजास्यकमेघनादकेषु ककारो वृत्तानुरोधार्थ एव ॥ २२ ॥

---

1. 'वृष्णीश' ख. पाठः.

वीरमहाद्यौ स्वाद्यो भद्राद्यश्चारुपूर्वकः सेनाः ।
षष्ठो गुहे सुषेणः सेनावथ पूर्णचित्रपूर्वौ च ॥ २३ ॥

विमर्शिनी

गुहे वीराद्याः सेनाः । वीरमहाद्यौ वीरसेनो महासेनश्च । स्वाद्यः सुसेनः । भद्राद्यो भद्रसेनः । चारुपूर्वकश्चारुसेनः । षष्ठः सुषेणश्च । अथ पूर्ण-चित्रपूर्वौ सेनौ पूर्णसेनश्चित्रसेनश्च ॥२३ ॥

विवरणम्

वीरमहाद्याविति । यथा वीरसेनो महासेन इत्यादि ॥ २३ ॥

गणराजि वज्रदन्तो गजास्यको भीमनाममहिषास्यौ ।
अथ मेघनादकविरूपाक्षौ वरदश्च सर्वभक्षश्च ॥ २४ ॥

विमर्शिनी

गणराजि वज्रदन्ताद्याः ॥ २४ ॥

विवरणम्

भीमनामा भीम एव ॥ २४ ॥

वीरबाहुमहावीरविद्युद्दन्तविलासिनः ।
आर्ये तीक्ष्णस्तीक्ष्णदन्तस्ताराक्षश्च भवोद्भवः ॥ २५ ॥

विमर्शिनी

आर्ये वीरबाह्वादयः ॥ २५ ॥

महोदरादयस्तेऽष्टौ पूर्णात्मादिभिरष्टभिः ।
सम्भेदिता हरिहरे द्वारपाला इतीरिताः ॥ २६ ॥

विमर्शिनी

हरिहरे पूर्णात्मादिभिरष्टभिः सम्भेदिता युक्तास्ते महोदरादयोऽष्टौ । 'महोदराय पूर्णात्मने नमः' इत्यादयः । इति द्वारपाला ईरिताः ॥ २६ ॥

विवरणम्

महोदरादयस्तेऽष्टाविति । यथा 'महोदराय पूर्णात्मने नमः' 'महाकायाय पुष्करात्मने नमः' इत्यादि ॥ २६ ॥

सहस्रवीची विमला शतादि-
धारा प्रमोदिन्यपि धूर्जटौ स्युः ।
अर्च्याश्चतुस्तोरणकुम्भकेषु
दिक्पा हरौ मन्त्रविदा स्वमन्त्रैः ॥ २७ ॥

विमर्शिनी

धूर्जटौ चतुस्तोरणकुम्भकेषु चतुर्षु तोरणमूलस्थकलशेषु सहस्रवीची विमला शतादिधारा शतधारा प्रमोदिन्यपि स्युः । हरौ तु तेषु मन्त्रविदा इन्द्रादीनां मन्त्रज्ञेन दिक्पा अर्च्याः स्युः ॥ २७ ॥

विवरणम्

दिक्पा हराविति । इन्द्रयमवरुणसोमाः । मन्त्रविदेति । सर्वत्रावहनादिप्रयोगाभिज्ञत्वम् । प्रणवेन द्विद्विस्वरमध्यगस्वमन्त्रेण वाञ्छाभिज्ञत्वं चोक्तम् । यद्वायमाशयः — ओं इन्द्राय सुराधिपतये सायुधवाहनाय सपरिवाराय नमः इत्यादयो मन्त्रा इति । दिक्कलशेष्वपि समानमेतत् । तथान्येऽपि तोरणध्वजाधिपा द्वारतोरणकलशवासिनश्च सपरिवारा विभावनीयाः । तदुक्तम् —

"एता स्वगणयुक्ता वै पूज्या देव्यस्तु सर्वदा ।
सुरारिपिशिताशा वै सर्वदुष्टभयङ्कराः ।" इति ॥

कालीकराल्याद्यभिप्रायेण एता इति निर्देशः । इति ॥ २७ ॥

कुम्भभद्रादिकौ कर्णौ श्वेतगोपूर्वकावपि ।
शिवशार्ङ्गीशयोर्द्वारमध्येऽर्च्या द्वारदेवताः ॥ २८ ॥

विमर्शिनी

शिवशार्ङ्गीशयोर्द्वारमध्ये कुम्भभद्रादिकौ कर्णौ कुम्भकर्णो भद्रकर्णश्च, श्वेतगोपूर्वकावपि कर्णौ श्वेतकर्णो गोकर्णश्च द्वारदेवता अर्च्याः ॥ २८ ॥

अग्न्यादीशदिगन्तमुक्तविधिना मुष्ट्यादिभिः शोधयेत्
सिद्धार्थादिभिरेव वा सशिखिकुण्डं मण्डपान्तःस्थलम् ।
प्रागास्योऽञ्जलिना त्रिधात्र विकिराञ्छक्त्यात्मनि प्रोत्किरेत्
सिद्धार्थान् विकिरांश्च रक्षतु सशोपान् मार्जनोपार्जितान् ॥२९॥

---

१. 'शसेनानीरर्च्याः स्युर्द्वार' ख. पाठः.

विमर्शिनी

क्रियाशेषमाह— अग्न्यादीति । मुष्ट्यादिभिः सिद्धार्थादिभिरेव वा, पक्षद्वयेऽपि साशिखिकुण्डम् अग्निकुण्डसहितं मण्डपान्तःस्थलं प्रासादशुद्धावुक्तविधिना अग्न्यादीशदिगन्तं शोधयेत् अग्निकोणादीशकोणान्तं प्रदक्षिणगत्या शोधयित्वा पुनरग्न्यादीशान्तमपि पूर्वभागं शोधयेदित्यर्थः । शक्त्यात्मनि भुवनेश्वर्यां पूर्णपुष्पाञ्जलिं विधाय मण्डपं शक्तिमयं ध्यात्वा अत्र मण्डपे प्रागास्यो भूत्वा अञ्जलिना विकिरान् त्रिधा प्रोत्किरेत् पूर्वं मध्ये पुनर्दक्षिणोत्तरपार्श्वयोश्च । मार्जनोपार्जितान् मार्जनेन स्वीकृतान् सशेषान् पात्रेऽवशेषितांश्च सिद्धार्थान् विकिरांश्च रक्षतु ॥ २९ ॥

विवरणम्

वेद्याश्शुद्धिमभिधत्ते — अग्न्यादीशदिगन्तमिति । उक्तविधिनेति । पुरा प्रासादशुद्धौ 'दिष्टमनुना मुष्ट्याद्ययान्तर्बहिरि'त्याद्युक्तविधानेनेत्यर्थः । सिद्धार्थादिभिरेव वेति । 'मुष्ट्या शकृद्वारि वा पश्चात् सर्षपमुष्टी'ति मुष्ट्यादिपक्षस्सिद्धार्थादिपक्षश्चोक्तः । साशिखिकुण्डमिति । यथासन्निधानं पूर्वादिकुण्डशोधनमुक्तम् । कुम्भेशवर्धनीस्थलमपि औचित्याच्छोधनीयम् । मण्डपस्यान्तःस्थलं वेदी भवति । धूपदीपान्ता शुद्धिस्सर्वापीहोक्ता । तत्र विकिरविकिरणं गव्यानन्तरमक्षतविकिरणानन्तरं वोक्तम् । तत्प्रकारमुपदिशति — प्रागास्य इति । प्राग्द्वारेऽपि मण्डपे वेदिपश्चिमदिशि प्राङ्मुखस्तिष्ठन्नञ्जलौ पूर्णं विकिरं गृहीत्वा तेनाञ्जलिनैव तद्विकिरं वेद्यां पश्चिमादिप्रागन्तपातबुद्ध्या विकिरेत् । पुनस्ततो दक्षिणतः प्राङ्मुखस्तिष्ठन्नप्येवं विकीर्य, उत्तरतस्तथा तिष्ठन्नप्येवं विकिरेदिति ।

"विकिरान्विकिरेत्तिष्ठंस्त्रिधा[1] चोत्तानपाणिना ।" इति ।

सर्वत्र विकिरणमपीष्यत एव । तथा चोक्तम् — प्राङ्मुखस्तिष्ठन्नुत्तानपाणिना विकिरान् मण्डपमध्ये दक्षिणवामयोर्विकीर्य पुनस्सर्वत्र विकीर्येति । तदा च कुण्डेष्वपि त्रेधा विकिरणम् । पुनस्तत्र सर्वत्र विकिरणं च कार्यमिति ॥

---

१. 'ति । पुनः स' घ. पाठः.

"शक्त्यात्मनीति सङ्कल्प्य शक्तिरूपं च मण्डपम् "

इति चोक्तम्। विष्णौ श्रीबीजेन। इतरेषु शक्तिबीजेन । मण्डपं शक्तिरूपं ध्यात्वा, तेनैव जलगन्धादिभिरभिपूज्य विकिरप्रयोग इति भावः। सिद्धार्थानिति। सिद्धार्थविकिरणकाले तावद्देशपर्यन्तं विकीर्य सिद्धार्थशेषान्वितं तत् पात्रं तत्र निदध्यात्। पुनर्मार्जनकाले मार्जनेनापि विकीर्णसिद्धार्थानैशदेशे सञ्चित्य पूर्वनिहिततत्पात्रे सङ्गृह्णीयात्। तच्च पुनर्वर्धनीपीठे तत्परिभ्रमणानन्तरं विनियोक्तुं कुत्रचित् सङ्गृह्य रक्षेद्, एवं विकिरमपि कुम्भेशपीठे विनियोक्तुं सङ्गृह्य रक्षेदिति। वक्ष्यति च 'अथ पुरार्जितान् सर्षपानि'त्यादि ॥ २९ ॥

**मध्येवेदि समिष्टपीठनिजशक्त्यास्थापितं मूलतो**
**देवेशं दिगधीश्वरानपि दिशास्वभ्यर्च्य कृत्वा ततः ।**
**पुष्पास्त्रप्रविमोचनं च परितो धूपं प्रदीपं तथा**
**न्यस्यारक्षतु मण्डपात्मकममुं चास्त्रत्रितालादिना ॥ ३० ॥**

विमर्शिनी

**मध्येवेदि** वेदिमध्ये समिष्टपीठनिजशक्त्यास्थापितं समिष्टे पीठे निजायां शक्तावावाहितं देवं मूलतो दिशासु दिगधीश्वरानप्यभ्यर्च्य ततः पुष्पास्त्रप्रविमोचनं परितः पुष्पेणास्त्रमन्त्रेण क्षेपणं च कृत्वा तथा धूपं प्रदीपं च न्यस्य मण्डपात्मकममुं देवम् अस्त्रत्रितालादिना अस्त्रेण तालत्रयादिना आरक्षतु ॥ ३० ॥

विवरणम्

**मध्येवेदीति**। 'पारे मध्ये षष्ठ्या वे'ति समासः। समिष्टपीठनिजशक्त्या स्थापितमिति। समिष्टे पीठे निजशक्तिः समिष्टपीठनिजशक्तिः तस्यां आस्थापितं मूलत एवावाह्य सकलितम्। मूलतोऽभ्यर्च्येति सम्बन्धः। वेदिमध्ये स्वस्तिकमालिख्य तत्र स्वं पीठं सम्पूज्य तस्मिन् मण्डपशक्तेः शक्त्यात्मनि प्रोक्षिरेदिति भावनामात्रसिद्धां निजशक्तिमेव तन्मन्त्रेणावाहनसकलीकरणपूजनैः सम्यग् विभाव्य तस्यां मण्डपात्मिकायां देवमपि तन्मन्त्रेण समावाह्य पूजयेत्। मध्ये विकिरपक्षे विधानमेतत्। अन्तर्विकिरपक्षे त्वयं विशेषः । शक्तिविभावनायां कृतायां विकिरविकिरणं पुनर्मध्ये देवोऽपि पूजनीयः। यद्वा, शक्तिपूजायामेव तस्यां देवोऽप्यावाह्य पूजनीय इति। पक्षद्वयेऽपि देवपूजायां प्रागादिदिक्षु इन्द्रादिलोकपालानपि सह पूजयेत्। यद्वा, तेषां तत्तद्दिक्षु स्वस्तिकेषु पूजा।

---

१. 'देवं त्रि' इति मूलकोशपाठः. २. 'स्त्रं' ख पाठः.

"यदुक्तं—

" .......परितो दिक्षु यजेद्दिङ्नायकानपि ।
तारनामस्वाधिपत्यहेतिवाहनपार्षदैः ॥"

इति । मण्डपात्मिकायाः शक्तेर्मार्जनालेपनादिस्थूलशोधनवत् भूतसंहारादिशोधनमप्युचितम् । तदुक्तम् — 'धूपदीपानन्तरं तच्छक्तिमात्मनि संहृत्य भूतसंहारधारणानन्तरं तच्छक्तिप्रतिसङ्क्रमणं कृत्वा भूतसर्गानन्तरं तन्मन्त्रप्राणायामव्यापकाङ्गानि कृत्वा पीठपूजापूर्वकमावाह्य मण्डपशक्तिं पूजयेत्' इति । केचिद् वेदिमध्ये तच्छक्तिपूजामेव वदन्ति —

"पूजयेद्गन्धपुष्पैश्च शक्तिं मण्डपभूगताम् ।"

इति । श्रीबीजेनावाह्य साङ्गं सम्पूज्य दिक्ष्विन्द्रादीन् यजेदिति च । वैष्णवत्वात् श्रीबीजेनेत्युक्तम् । इति ।

"शक्तौ मण्डपरूपिण्यां शान्त्यतीता तु मध्यतः ।
प्रागादिद्वारदेशेषु शान्त्याद्याः क्रमतः कलाः ॥
वेद्यामाधारशक्त्याद्या धर्माद्याः स्तम्भगोचराः ।
चतुर्वंशेष्वधर्माद्याः सत्त्वाद्यास्तद्गुणास्पदाः ॥
मायाविताने विद्या च कल्पनीया विधानतः ।"

इति । शक्तेः सकलीक्रियायामेतद् भवति । पुनः पुष्पास्त्रमोचनादि सर्वं कार्यमिति । मण्डपात्मकममुं देवमिति । शक्तिमयमण्डपस्यान्तरात्मतयावस्थितमित्यर्थः ॥ ३० ॥

**अथ शिवदिशि[1] पार्जन्यांशके[2] वा लिखित्वा**
**वसुदलकमलं तद्दक्षिणे स्वस्तिकं च ।**
**सरसिरुहि सशालीवस्त्रदर्भादिपीठे**
**न्यसतु कलशनाथं[3] स्वस्तिके कर्करीं च ॥ ३१ ॥**

विमर्शिनी

कुम्भेशपूजामाह — अथेति । अथ तदनन्तरं शिवदिशि पार्जन्यांशके वास्तुगतपर्जन्यस्यांशे वा वसुदलकमलम् अष्टदलं पद्मं तद्दक्षिणे स्वस्तिकं च लिखित्वा सशालीवस्त्रदर्भादिपीठे शालीसहितवस्त्रदर्भतण्डुलादिभिः कृते पीठे सरसिरुहि पद्मे कलशनाथं कुम्भेशं, स्वस्तिके कर्करीं सनालं कुम्भं च न्यसतु ॥ ३१ ॥

१. 'खलु शिवकोणे दोशिकः कल्पयित्वा' क. पाठः. २. 'न्येऽपि वा कल्पयित्वा', ३. 'राजं स्व' ख. पाठः.

विवरणम्

इदानीं कुम्भेशपूजां वक्तुमारभते— **अथ शिवदिशीति**। वास्तुपदाभिप्रायमेतत्। तत्रालिन्दोद्देश ईशानपदे पर्जन्यपदे वेति। वसुदलकमलमिति। अष्टदलं पद्मम्। तच्च पीठपर्यन्तं स्यात्। सरसिरुहीति। तस्मिन् कमले। कलशराजमिति। कुम्भेशन्यखिलतया सादनमेतदुक्तम्। स्वस्तिके कर्करीं चेति। न्यसत्वित्यनुषज्यते। शालिदर्भवस्त्रादिभिः पीठरचनमिहाप्युचितं कार्यम्॥ ३१॥

**आराध्य योगासनमत्र तोयैः सिक्तं प्रसक्तं गुणगन्धधूपैः।**
**सुसंस्कृतं न्यस्तकुशाद्यमिष्टं घटं समुत्तानितमात्तकूर्चम्॥ ३२॥**
**सहेमरत्नाक्षतगन्धपुष्पं सुधीः समापूर्य जलैश्च पूतैः।**
**तत्रेष्टवर्णाम्बुरुहोपविष्टमूर्त्यन्तरुद्यत्सकलात्मतत्त्वे॥ ३३॥**
**त्र्याधारपद्मेष्वभिवाह्य चात्मविद्यापराख्यान्यपि तत्त्वकानि।**
**सर्वेषु सम्पूजयतु त्रिणेत्रे परांशसम्पन्नशिवानि मन्त्री॥ ३४॥**

विमर्शिनी

तत्पूजाविधानं सूत्रयति— **आराध्येत्यादिभिः**। अत्र अष्टदलपद्मे पीठे योगासनमाराध्य तोयैः सिक्तं क्षालितं, गुणगन्धधूपैः प्रसक्तं गुणेन वेष्टितं गन्धेन लिप्तं धूपेन धूपितं च, सुसंस्कृतं धारणादिभिः शोधितं, न्यस्तकुशाद्यं कृतदर्भविन्यासगन्धजलोक्षणादिकम्, इष्टं पूजितं, समुत्तानितं यथाविधि स्थापितम्, आत्तकूर्चं, सहेमरत्नाक्षतगन्धपुष्पं हेमरत्नाक्षतगन्धपुष्पैर्योजितं घटं सुधीः मानसपूरणकृद् गुरुः पूतैर्गालितपूजितैर्जलैश्च समापूर्य इष्टवर्णाम्बुरुहोपविष्टमूर्त्यन्तरुद्यत्सकलात्मतत्त्वे इष्टे लिपिपङ्कजे उपविष्टाया मूर्तेरन्तः प्रकाश्यमानैः कलासहितैरात्मनस्तत्त्वैश्च युक्ते तत्र कलशे त्र्याधारपद्मेषु मूलाधारकलशगतमन्त्रमूर्तेर्मूलाधारहृदयभ्रूमध्येषु सर्वेषु देवेषु आत्मविद्यापराख्यानि तत्त्वानि 'ओं अं नमः परायात्मतत्त्वात्मने नमः' 'ओं उं नमः पराय विद्यातत्त्वात्मने नमः' 'ओं मं पराय परतत्त्वात्मने नमः' इति मन्त्रैस्तान्यावाह्य सम्पूजयतु च। त्रिणेत्रे परांशसम्पन्नशिवानि परांशे परतत्त्वस्थाने योजितशिवतत्त्वानि 'ओं मं नमः शिवाय शिवतत्त्वात्मने नमः' इति मन्त्रेण च। मन्त्रीत्यनेन वक्ष्यमाणाद् ब्रह्मकलशपूजनात् पूजाविधानं स्वीकर्तव्यमिति सूचितम्॥ ३२, ३३, ३४॥

---

१. 'समिष्ट', २. 'त्परचित्यमुष्मिन्॥' ख. पाठः. ३. 'भ्मि' क. पाठः.

विवरणम्

**तोयैः सिक्तमिति** । 'अस्त्रेणासिच्य तोयै'रित्येतदुक्तम् । प्रसक्तं गुणगन्धधूपैरिति । गुणः सूत्रम् । 'कलयतु कवचेन त्रिसूत्रेणे'त्यादिकमुक्तम् । सुसंस्कृतमिति शोषणादिसंस्कारपञ्चकम् । न्यस्तकुशाद्यमिति वक्ष्यमाणरीत्या दर्भन्यासगन्धोदकप्रोक्षणाक्षतविकिरणानि । इष्टमिति । मूलेन जलगन्धादिभिः पूजितम् । समुत्तानितमित्युत्तानीकरणं स्वपीठमध्ये विन्यसनं चोक्तम् । आत्तकूर्चमिति । आत्तः परिगृहीतो निक्षिप्ततया कूर्चो येनेति समासः । प्रणवप्रोक्षणपूर्वकमस्त्रप्रोक्षितयमादिसंस्कृतकूर्चन्यसनमनेनोक्तम् ॥ ३२ ॥

**सहेमरत्नाक्षतगन्धपुष्पमिति** । अस्त्रप्रोक्षणादिसंस्कृतद्रव्यन्यासः । सुधीरिति मानसपूरणाभिप्रायम् । पूतैरिति । ऐशभागे कटाहादौ नवपटगालितैः । वरुणपूजाद्युपलक्षणमेतत् । तत्रेति । तस्मिन् कलशे । इष्टवर्णाम्बुरुहेति । पूजिते वर्णाम्बुरुहे लिपिपङ्कज उपविष्टायाः आवाहितपूजिततया आसीनाया मूर्तेः अन्तरुद्यद् भवति सकलात्मतत्त्वं यत्रेति, तत्रेत्येतद्विशेषणतया बहुव्रीहिः । इष्टवर्णाम्बुरुहायाः उपविष्टाया मूर्तेरिति वा स्यात् । तदा मूर्तौ लिपिपङ्कजपूजा लभ्यते । सकलात्मतत्त्व इति विद्यादेहावाहनाभिप्रायमेतत् । सकलं हि सदात्मतत्त्वं हि विद्यादेहः । यद्वा सकलानि सर्वाण्यात्मतत्त्वानि स्वस्वदेवस्य तत्त्वानि यत्र तत् सकलात्मतत्त्वम् । विद्यादेहान्तस्तदवयवशक्तितया तत्त्वावाहनमप्यनेनोक्तम् । अथवा सह कलाभिरात्मीयतत्त्वैश्च वर्तत इति सकलात्मतत्त्वम् । मूर्तौ मूलाधाराद्याधारत्रयेऽग्निसूर्यसोमकलानां विधिवदावाहनम् । विद्यादेहे तत्त्वावाहनं च । एवमुक्तं न्यासपूजान्वितं सर्वमावाहनमिति ज्ञेयम् ॥ ३३ ॥

**त्र्याधारपद्मेष्विति** । मूलाधारे हृदये पुनर्भ्रूमध्ये मूर्धनि द्वादशान्ते वा । पद्मपदेनैतद् दर्शितं— पूर्वमग्न्यादिकलावाहना न कृता चेदिदानीं तासां न्यासमात्रमवश्यं कर्तव्यमिति । त्रिनेत्र इति । परतत्त्वस्थाने शिवतत्त्वं स्यादित्यर्थः । मन्त्रीति । मन्त्रप्रयोगाभिज्ञः । यथा 'ओं अं नमः परायात्मतत्त्वात्मने नम' इत्यादि । शैवे तु 'ओं अं नमः शिवायात्मतत्त्वात्मने नम' इत्यादि । एतदपि परांशसम्भिन्नशिवानीत्यनेनैव लभ्यते । प्रणवादिपञ्चपदैरेषां पञ्चाङ्गन्यासः । प्रणवत्रयतत्त्वमन्त्रामन्त्रितपदादियोगोऽप्यावाहनधर्मो मन्त्रीत्येवोक्तः । 'ओं सं सों ह्रूं हं सः' इत्यादियोगोऽपीष्यत इति ॥ ३४ ॥

---

१. 'प्रोक्षणय' घ. पाठः. २. 'न' ग. पाठः.

तस्मिन् पल्लवचक्रिकादिघटिते तारोपचारादिना
देवेशं कलशेऽभिवाह्य निजमूलेनार्णतत्त्वादिभिः ।
साकल्यं परिकल्प्य कल्पविधिना दत्त्वोपहारान् क्रमात्
सम्पूज्याथ निवेद्य तोषणसपर्यां च प्रकुर्याद् गुरुः ॥ ३५ ॥

विमर्शिनी

अथ गुरुः पल्लवचक्रिकादिघटिते पल्लवचक्रिकातण्डुलदर्भाक्षतफलगन्धां पुष्पैर्युक्ते तस्मिन् कलशे तारोपचारादिना निजमूलेन देवेशमभिवाह्य अर्णतत्त्वादिभिः लिपितत्त्वमूलाक्षराङ्गादिभिः साकल्यं सकलत्वं परिकल्प्य कल्पविधिना पूजापटले वक्ष्यमाणविधानेनोपहारान् क्रमाद् दत्त्वा सम्पूज्य निवेद्य तोषसपर्यां प्रसन्नपूजां च प्रकुर्यात् ॥ ३५ ॥

विवरणम्

पल्लवचक्रिकादिघटिते इति । पल्लवाद्यलङ्करणं कलशपटले[1] वक्ष्यमाणरीत्या कार्यम् । तारोपचारादिना निजमूलेनेत्यन्वयः । अर्णतत्त्वादिभिरिति मूलाक्षराङ्गादिग्रहणम् । कल्पविधिनेति । स्वागमोक्तरीत्या पूर्वं कलशपूजाक्रमकथनमिदानीं कल्पविधिनेत्यभिधानं च पूजासङ्कोचाकरणार्थमिति बोद्धव्यम् ॥ ३५ ॥

प्रक्लृप्तयोगासनपूजनादिकां
गलन्तिकां गालितवारिपूरिताम् ।
ततो निजास्त्रेण कृताभिवाहनां
प्रकल्पिताङ्गाममुना प्रपूजयेत् ॥ ३६ ॥

विमर्शिनी

ततः प्रक्लृप्तयोगासनपूजनादिकां कृतपीठपूजादिकां, गालितवारिपूरितगालितैर्जलैः पूरितां, निजास्त्रेण कृताभिवाहनां स्वस्वास्त्रेण कृतावाहनां प्रकल्पिताङ्गाम् अस्त्रमन्त्रस्याङ्गैः कृताङ्गां गलन्तिकां कर्करीम् अमुनास्त्रेण प्रपूजयेत् ॥ ३६ ॥

विवरणम्

प्रक्लृप्तयोगासनपूजनादिकामिति कुम्भसंस्कारकूर्चन्यासग्रहणम् । गलन्तिकां वर्धनीम् । प्रकल्पिताङ्गामिति । लिपितंस्वास्त्रियाङ्गन्यासकथनम् ।

---

१. 'लभाविरी' ग, घ. पाठः.

अमुना प्रपूजयेदिति । अस्त्रेण साङ्गेन सावरणं परिपूज्य निवेद्य प्रसन्नपूजामपि कुर्यादिति भावः । पूजान्ते कुम्भेशे मूलत्रितत्त्वजपो वर्धन्यामस्त्राष्टोत्तरशतजपश्च कार्यः । तदुक्तम्—

"अस्त्रेण शतवारं तु मन्त्रयित्वा तु वर्धनीम् ।

इति ॥ ३६ ॥

ततः करकधारया विहितकुड्यमूलोक्षया
प्रदक्षिणपरिभ्रमं वितनुयादलिन्देऽस्त्रतः ।
घटं नयतु पृष्ठतोऽप्यथ पुरार्जितान् सर्षपान्
विकीर्य करकं घटीं विकिरकांश्च पीठे न्यसेत् ॥ ३७ ॥

विमर्शिनी

ततोऽलिन्दे विहितकुड्यमूलोक्षया विहितं विधीयमानं कुड्यमूलोक्षणं यया तया करकधारयास्त्रतोऽस्त्रमन्त्रं[1] जपन् प्रदक्षिणपरिभ्रमम् ईशादीशपर्यन्तं प्रदक्षिणक्रमेण परितो भ्रमणं वितनुयात् । पृष्ठतः तत्पृष्ठमार्गेण घटं कुम्भेशं नयतु । अथ पुरार्जितान् प्राङ् मण्डपशोधने गृहीतान् सर्षपान् विकीर्य करकं कर्करीं न्यसेत् । पीठे विकिरकांश्च विकीर्य घटीं कुम्भेशं न्यसेत् ॥ ३७ ॥

विवरणम्

विहितकुड्यमूलोक्षयेति करकधाराया विशेषणम् । विहिता कृता अलिन्दस्यैव कुड्यमूले उक्षा उक्षणं सेको यया सा तथोक्ता । ततः प्रदक्षिणपरिभ्रममिति । ईशादारभ्य तदन्तमिति भावः । तदुक्तम्—

"ईशानान्तं परिभ्रम्य तत आरभ्य साधकः ।"

इति । घटं नयतु पृष्ठत इति । तदप्युक्तम्— 'घटं तेनैव मार्गेणे'ति । रक्षार्थं वर्धन्याः परिभ्रमणं भूपरिग्रहार्थं कुम्भेशस्येति ज्ञेयम् । गुरुर्वर्धनीं नयतु मूर्तिपः कुम्भेशमपि, विपर्ययेण वेति । पुरार्जितानिति । सिद्धार्थान् विकिरांश्च । रक्षस्त्वित्यादि पुरोक्तम् । करकं स्वे पीठे सर्षपान् विकीर्य न्यसेत् । कुम्भेशं च स्वे पीठे विकिरान् क्षिप्त्वेति विवेकः ॥ ३७ ॥

आधारत्रितये यथापुरमदः सम्पूज्य तत्त्वत्रयं
मूलेनात्र विभाव्य देवमणुना साङ्गं समभ्यर्चयेत् ।

---

1. 'तो म' ख. पाठः.

**पूर्णीकृत्य गलन्तिकामपि यजेत् स्वास्त्रेण कृत्वा द्वयो-**
**र्नैवेद्यं परितोष्य[1] रक्षतु घटौ व्येकांशुकावेष्टितौ ॥ ३८ ॥**

विमर्शिनी

**आधारत्रितये** अदः एतत् तत्त्वत्रयं यथापुरं पूर्ववत् सम्पूज्य अत्र मूलेनाणुना देवं (परि ? वि)भाव्य आवाह्य साङ्गं सकलीकृतं तं समभ्यर्चयेत् । गलन्तिकां कर्करीमपि पूर्णीकृत्य स्वास्त्रेण यजेत् । द्वयोरपि नैवेद्यं कृत्वा परितोष्य प्रसन्नपूजां कृत्वा व्येकांशुकावेष्टितौ वस्त्रद्वयेन वस्त्रेकेन च वेष्टितौ कुम्भेशकर्करीघटौ रक्षतु ॥ ३८ ॥

विवरणम्

**अत्र अदस्तत्त्वत्रयं यथापुरं सम्पूज्येति** । अत्रेति कुम्भेशे । यथा-पुरमित्यावाहनादिपूर्वकम् । मूलेनाणुना देवं च विभाव्येति पुनः स्वमूलेनावाह-नादिकमुक्तम् । पूर्णीकृत्य गलन्तिकामपीति । वर्धनीं पूर्वोक्तैरेव गालितोदकैः सुपूर्णां कृत्वेत्यर्थः । यजेत् स्वास्त्रेणेत्यावाहनादिकमुक्तम् । घटाविति । कुम्भेशं वर्धनीं च । 'पुमान् स्त्रिया'त्येकशेषः । व्येकांशुकावेष्टिताविति । कुम्भेशेंऽशुकद्वयं वर्धन्यामेकमिति विभाग ॥ ३८ ॥

**[2]स्विष्टात्मा परिमार्जनादिपरिशुद्धेऽस्त्रान्ततारोक्षिते**
**वाय्वग्न्यम्बुमहीवियद्दहनबीजैस्तत्त्वसंख्योदितैः ।**
**सन्धार्यासुमसौ विधाय परिशोषादिप्रदाहान्तिमं**
**तद्वैशेषिकशोधनं परिलिखेत्[3] कुण्डे स्वके स्वोक्तवत् ॥ ३९ ॥**

विमर्शिनी

अग्निजननमाह — **स्विष्टात्मेति** । असौ गुरुः स्विष्टात्मा सकलीकरण-शङ्खपूरणानन्तरं कृतात्माराधनो भूत्वा गणेशमभ्यर्च्य परिमार्जनादिपरिशुद्धे । अत्र मण्डपशोधनेन सह कुण्डानामपि परिशोधनं क्रियते । अपरत्राप्यग्निजनने मुष्ट्यादिभिः स्थलशुद्धिः कार्येत्यभिप्रायः । अस्त्रान्ततारोक्षिते 'ओं हुं फडि'ति मन्त्रेण प्रोक्षिते स्वके (कुण्डे) आचार्यकुण्डे तत्त्वसंख्योदितैः प्रत्येकं पञ्चविं-

---

१. 'नव्यसवस्त्रैरावेष्ट्य रक्षेद् घटौ ॥', २. "कुण्डे स्वे कृतमार्जनादिपरिशोधे वायुवह्न्यम्बुभूव्योमैरानलबीजमन्त्रशरकृतयावृत्तिमात्रं क्रमात् । आयच्छन्ननिलं विधा', ३. 'गुरुरिति प्रोत्पादयेत् पावकम् ॥' ख. पाठः. 'प्रजनयेत्' कुण्डे 'स्वकेऽथानलम्' ॥ क. पाठः. समनन्तरपद्यव्याख्यारीत्या विवरणकारस्याप्येष एव पाठ इति प्रतीयते ।

शतिसंख्यया जप्तैः वाय्वग्न्यम्बुमहीवियद्दहनबीजैः यं रं वं लं हं रं इति बीजैः असुं प्राणं सन्धार्य संयम्य परिशोषादिप्रदाहान्तिमं शोषणदहनप्लावन-काठिन्यसुषिरीकरणदहनात्मकं तद्वैशेषिकशोधनं तस्य कुण्डस्य विशेषशोधनं विधाय स्वोक्तवत् स्वस्वोक्तप्रकारेण परिलिखेत् ॥ ३९ ॥

विवरणम्

अथाग्निजननं प्रस्तौति — स्वेष्टात्मेति । देहशुद्ध्याद्यात्माराधनान्तमुक्तम् । गणपतिपूजादि सर्वं सामान्यसिद्धम् । परिमार्जनादिपरिशुद्ध इति कुण्डे स्वक इत्यत्रान्वयः । परिमार्जनादिभिस्सशिखिकुण्डं मण्डपान्तःस्थलमित्युद्दिष्टाभिः शुद्धिभिः परिशोधिते । पूर्वं परिशोधनासम्भवे पुनरिदानीं तत्कार्यमिति चाभिप्रायः । अस्त्रान्ततारः फडन्तप्रणवः । वाय्वादिपञ्चबीजैः शोषणादिपञ्चकं कुण्डशरीरस्यैव । पुनर्वह्निबीजेन प्रदाह आयतनोद्देशस्येत्यवबोद्धव्यम् । तत्त्वसङ्ख्योदितैस्सन्धार्येति । पञ्चविंशतिसङ्ख्याजप्तैः कुम्भकप्राणायामा उक्ताः । असाविति गुरुः । तद्वैशेषिकशोधनमिति । परिमार्जनादिशोधनं सामान्यं, शोषणादि त्विदं विशेषशोधनमिति भावः । यद्वा वैशेषिकं सामान्यभूतविकृतित्वात् । कुण्डशक्तेः शरीरं कुण्डरूपमुच्यते । यदुक्तम् —

"प्राच्यां शिरः समाख्यातं बाहू दक्षिणसौम्ययोः ।
उदरं कुण्डमित्युक्तं योनिः पादौ च पश्चिमे ॥"

इति । तस्य[1] शोधनं भूतसंहारादिलक्षणम् । तदुक्तम् —

"कुण्डाभिमानिनीं शक्तिं संहृत्योत्पादयेत् पुनः ।
उद्घातावृत्तियोगेन प्राणायामपुरस्सरम् ॥ "

इति । तत्त्वसङ्ख्योदितैरिति । तत्त्वाय तद्भावाय वाय्वग्न्यादिभावापत्तये सङ्ख्याः षोडश तद्द्विगुणतद्द्विगुणरूपा रेचकादिलक्षणाः ताभिरुदितैरिति व्याख्येयम् । कुण्डजीवशक्तिमात्मन्याहृत्य भूतसंहारशोषणादिपञ्चकतज्जीवप्रतिसंक्रमणभूतसर्गायतनोद्देशप्रदाहप्राणायामं कृत्वा लिपिन्यासं कुर्यात् । स्वके कुण्डे इति । यद्वस्तु तावत् कुण्डं तद्वस्त्वात्मके कुण्डे सम्पन्ने अग्निं प्रजनयेदिति । यत उक्तम् —

"कुण्डस्था वैष्णवी शक्तिः प्रकृतिस्त्रिगुणात्मिका'

इत्यादि । तत्र प्रथमं प्रणवन्यासः ।

---

१. 'स्याः' क. ख. पाठः.

"व्यापय्य तारतः कुण्डं तदंशान्मेखलात्रये ।
गर्तेऽन्तर्बिन्दुनादादीन् व्यापकत्वेन विन्यसेत् ॥
सप्तवर्गपदे गर्ते पर्जन्याद्यब्जजावधि ।
पदेषु विन्यसेद् विद्वानादिहान्तां च मातृकाम् ॥"

अब्जजो ब्रह्मा मध्यपद एव हलक्षाक्ष(र)न्यासः । वक्ष्यति च — 'हलक्षाक्षरं मध्यभाग' इति ।

"न्यस्येत् स्वस्वजिनार्णार्णान् प्रागादिषु पदेषु तु ।
तावत् सुपश्चिमान्तेषु तारेण व्यापयेत् पुनः ॥"

गर्तोद्देशं प्रागादिपश्चिमान्तं चतुर्विंशतिधा विभज्य तेषु पदेषु गायत्र्या वर्णन्यासः ।

"गर्तवप्रेऽपि पूर्वादिचतुर्वप्रेषु विन्यसेत् ।
षट् षट् पदानि सङ्कल्प्य गायत्र्यर्णान् विभागवित् ॥
व्यापय्य जीवतत्त्वेन शेषतत्त्वान्यथ क्रमात् ।
प्रागादिपश्चिमान्तेषु पदेषु व्यष्टसु न्यसेत् ॥
शैवे शिवादितत्त्वानि द्वादश व्यापकात्मना ।
विन्यस्य शेषतत्त्वानि प्रागादिषु पदेष्वपि ॥
पश्चिमादिपुरोन्तेषु योनौ पञ्चदश स्वरान् ।
पदेषु[1] विन्यसेत् गर्ते विसर्गं होमदेशतः ॥
शक्त्या व्यापय्य तस्यांशांस्त्रीन्न्यसेन्मेखलास्वथ ॥
बिन्द्वादीन् व्यापयेद्गर्ते तदङ्गान्यपि विन्यसेत् ।"

इति । तत्तन्न्यासानन्तरं तत्तत्पूजापि कार्येति । प्रागुक्ताधिकसंस्कारेण कुण्डशक्तेः संहारसामर्थ्यं वा साधनीयम् । तदुक्तम् —

"लीयते विश्वमत्रेति कुण्डं तद्विश्वकुण्डनात्' ।

इति । यद्वा, होमोद्देशे बिन्दुलक्षणायाः संहारशक्तेः स्फूर्त्यर्थमेतत् । तदा त्वमृतबीजेन सर्गशक्तेः स्फूर्त्तिरपि भावनीया । यदप्युक्तम्—

"अग्निरूपेण संहारं सोमरूपेण चोदयम् ।
करोति बिन्दुयुग्मस्था' इति ॥ ३९ ॥

---

१. 'षु न्यस्य गर्ते तु वि' घ. पाठः.

तारेणाजितसुम्भजिद्धरिहरे रेखामुदग्गामिनीं
प्रागग्रे च तदन्तयोर्विलिखतु द्वे ते च तिस्रोऽन्तरा ।
तच्छेषेष्वथ तिस्र एव विलिखेत् पाश्चात्यरेखोर्ध्वतो
याम्यादिक्रमतो महेशगुहयोस्ताः स्वास्त्रतः कल्पवित् ॥ ४० ॥

विमर्शिनी

कल्पविद् अजितसुम्भजिद्धरिहरे विष्णुदुर्गाशिवनारायणेषु तारेण उदग्गामिनीं पश्चिमभागे दक्षिणत आरभ्योदगग्रां रेखां विलिखतु, तदन्तयोस्तस्या रेखायाः पार्श्वयोः (प्रागग्रे) द्वे रेखे च, ते अन्तरा तयोरन्तराले दक्षिणत आरभ्य तिस्रश्च । अथ तच्छेषेषु शिवस्कन्दगणपतिशास्तृषु पाश्चात्यरेखोर्ध्वतः पश्चिमरेखावसाने याम्यादिक्रमतस्तिस्र एव विलिखेत् । कल्पविदित्यनेन स्वचरणोक्ता रेखा लिखेद्वेति च सूचितम् । महेशगुहयोस्ता रेखाः स्वास्त्रतो विलिखेत् ॥ ४० ॥

विवरणम्

अथानलं प्रजनयेदित्ययमुद्देशः कथमित्याह-- तारेणेति । प्रादेशमात्रा इह रेखाः स्युः । तदन्तयोः प्रागग्रे च द्वे इति । रेखे इति शेषः । याम्यादिक्रमत इत्येतदिहापि योजनीयम् । ते चान्तरा तिस्र इति । तयोर्मध्ये इत्यर्थः । पाश्चात्यरेखोर्ध्वत इति । रेखामुदग्गामिनीमित्यस्याः प्राग्भाग इत्यर्थः । महेशगुहव्यतिरिक्तेषु तारत एव । कल्पविदिति... ॥ ४० ॥

स्कन्देशयोः कवचतो ध्रुवतः परेषु
भूयः समुक्ष्य सलिलैः शकलं निरस्य ।
न्यस्येत् सगन्धकुसुमाक्षतवारिकूर्चै-
स्तारेण विष्टरमिहार्हतु योगपीठम् ॥ ४१ ॥

विमर्शिनी

भूयः स्कन्देशयोः कवचतः, परेषु ध्रुवतश्च सलिलैः समुक्ष्य शकलं निरस्य सगन्धकुसुमाक्षतवारिकूर्चैः गन्धसहितपुष्पाक्षतजलकूर्चैस्तारेण विष्टरमभेरुपवेशनयोग्यं पीठं न्यसेत् । इह विष्टरे योगपीठमर्हतु च ॥ ४१ ॥

---

१. 'अस्त्राणुना विधिवदायतनं विलिख्य भूयः समुक्ष्य सलिलैः शकलं निरस्य । कृत्वा सगन्धकुसुमाक्षतवारिकूर्चैस्तारेण' ख. पाठः. २. 'चै तारे' क. पाठः.

विवरणम्

शकलं निरस्येति । नैर्ऋतदिश्यस्त्रेणेति सामान्यावसेयम् । कूर्चपदेन कलशपटलभाविकूर्चग्रहणम् । विष्टरमित्यौचित्याच्छयनीयरूपमित्यवसीयते ॥ ४१ ॥

श्रीबीजेन प्रकृतिमभिवाह्याजितेऽन्येषु शक्त्या
चेष्ट्वा दीर्घस्वरभिदुरबीजाङ्गसाङ्गीकृतां ताम् ।
पुत्रीयन्तीं शुचिमृतुमतीं प्राक्शिरस्कां रतोत्का-
मुत्तानाङ्गीमुदरकुहरीभूतकुण्डां स्मरेच्च ॥ ४२ ॥

विमर्शिनी

अजिते श्रीबीजेन, अन्येषु शक्त्या भुवनेश्वर्या च प्रकृतिं जगत्कारणभूतां शक्तिमभिवाह्य दीर्घस्वरभिदुरबीजाङ्गसाङ्गीकृतां दीर्घस्वरभेदितेन श्रीबीजेन शक्तिबीजेन वा कृतैरङ्गैः सकलीकृतामिष्ट्वा तां प्रकृतिम् ऋतुमतीं सञ्जातर्तुकालां, शुचिं शुद्धाम् । शुचिशब्द उभयथा योज्यः । शुचिमग्निं पुत्रीयन्तीम् अग्निमात्मनः पुत्रमिच्छन्तीं च, प्राक्छिरस्कां कुण्डस्य प्राग्भागगतशिरोभागयुक्तां पश्चिमगतपादां च, रतोत्कां सुरत उन्मनस्काम्, उत्तानाङ्गीम् उत्तानावयवाम्, उदरकुहरीभूतकुण्डाम् उदरकुहरत्वेन कल्पितकुण्डां च स्मरेत् ॥ ४२ ॥

विवरणम्

शक्त्या चेति । आवाह्येत्यनुकर्षः । दीर्घैः स्वरैर्भिदुरं तद्बीजं श्रां श्रीमित्यादि ह्रां ह्रीमित्याद्यपि लिपितत्त्वन्यासावपीह युक्तौ । तामिष्ट्वेति जलगन्धादिभिस्सपर्योक्ता । पुत्रीयन्तीं शुचिमिति । अग्निमात्मनः पुत्रमिच्छन्तीं, शुचिमिति स्नातालङ्कृतामिति चार्थः । ऋतुमतीमिति । गर्भाधानकालयोगिनीम् । प्राक्छिरस्कामिति । यदुक्तम्— 'प्राच्यां शिरस्समाख्यातम्' । इत्यादि । रतोत्कामिति । वागीश्वरीशक्तिरियम् । वागीश्वरेण सह सम्प्रयोगोन्मना भवतीति भावः । तदा ध्यानार्थमेतावदुक्तम् । स्वात्मनश्च वागीश्वरभावधिया मूलप्राणायामाङ्गन्यासाद्यपि कार्यमिति ज्ञेयम् । स्मरेच्चेत्यनेनैतदपि सूचितम् । वक्ष्यति च— 'विभुर्वीर्यमयमि'ति । तच्चोक्तम्— 'ध्यात्वात्मानं शिवं देवमि'त्यादि । पाद्यादि दत्त्वा परिपूज्यार्घ्यदानमपि कार्यम् ॥ ४२ ॥

**विप्रावसथ्यं निभृतोपनीतमर्काश्मजं वारणिसम्भवं वा ।**
**हव्यादमादाय निधाय नाभौ क्रव्यादभागं निर्ऋतौ निरस्येत् ॥ ४३ ॥**

विमर्शिनी

विप्रावसथ्यं ब्राह्मणस्य महानसभवम्, अर्काश्मजं सूर्यकान्तार्तपयोगाज्जातं वा, अरणिसम्भवम् अरणिभ्यां मथनात् सम्भूतं वा निभृतोपनीतं गूढोपनीतं हव्यादमग्निमादाय नाभौ निधाय क्रव्यादभागं राक्षसांशं निर्ऋतौ बहिर्निर्ऋतिभागे निरस्येत् त्यजेत् ॥ ४३ ॥

विवरणम्

**विप्रावसथ्यमिति** । ब्राह्मणगृहसम्भवम् । निभृतोपनीतमिति । शरावादिपात्रे सुभृतमक्षुब्धतया प्रशान्ततया कृत्वा मूर्तिपेनोपाहृतमित्यर्थः । पात्रान्तरेण उपर्याच्छादनमपि कार्यम् । अर्काश्मा सूर्यकान्तम् । हव्यादमादायेति । अग्निं प्रणवेन परिगृह्येत्यर्थः । निधाय नाभाविति । दर्भसंस्तरे कूर्चे वा न्यसनम् । क्रव्यादभागमिति । रक्षसां भागम् । स चाङ्गारमात्रं दर्भोद्योतो वा अस्त्रेण वा तूष्णीं वा निरासः ॥ ४३ ॥

**उन्नीय वह्निचितिमात्मनि संविलाप्य**
**कृत्वा प्रदाहचरमां परिशुद्धिमग्नौ ।**
**प्रत्यर्प्य तत्र चितिमात्मगतां निजेन**
**बीजेन तारपुटितेन यजेच्च किञ्चित् ॥ ४४ ॥**

विमर्शिनी

**वह्निचितिम**ग्निचैतन्यम् उन्नीयोर्ध्वं नीत्वा स्वात्मनि स्वस्य गुरोरात्मनि योजयित्वा प्राणायामेन संविलाप्याग्नौ प्रदाहचरमां परिशुद्धिं शोषणदहने स्वस्वबीजेन कृत्वा 'ओं पद्माय नमः' इति पूजितपीठे तत्राग्नौ वा आत्मगतां पूर्वं योजितां चितिं चैतन्यकलां प्रत्यर्प्य आवाह्य तारपुटितेन निजेन बीजेन 'ओं रं ओं नमः' इत्यनेन किञ्चिद् यजेच्च ॥ ४४ ॥

विवरणम्

**उन्नीय वह्निचितिमिति** । फडन्तप्रणवप्रोक्षणमस्त्रेण, तालत्रयाद्यपि सामान्यसिद्धम् । प्रणवेनैतदुन्नयनमात्मनि संविलापनं च भवति । प्रदाहचरमा-

१. 'पाभायो' क. ख. पाठः.

मिति । शोषणं दहनं च । प्रत्यर्प्येति प्रणवेनैव प्रतिसङ्क्रमणमुक्तम् । निजेन बीजेनेति । यजेच्चेति सम्बन्धः । किञ्चिदिति । अग्नेरुद्वासनं मा भूदिति भावः । विद्वानिति वा पाठः । तारपुटितेन रंबीजेन अग्निशक्त्यावाहनं रां रीमित्याद्यङ्ग-न्यासोऽपि कार्य इति तदाशयः । यद्वा सोऽप्यग्निः स्वात्मनो वागीश्वरभूतस्य मूलाधारे चिन्तनीय इति । यत उक्तम्—

"ध्यात्वात्मानं शिवं देवं चिद्रूपं कुण्डमध्यगाम् ।
रत्यर्थिनीं ऋतुस्नातां ध्यायन्नादाय पावकम् ॥"

इत्यादि ॥ ४४ ॥

उद्बुद्धमुद्धृतपिधानमुदर्चिषं त्रि-
रास्थाय जानुयुगलेन परिभ्रमय्य ।
योन्यां ध्रुवेण विभुवीर्यमयं निदध्याद्
गर्भाशयं समुपनीय समेधयेच्च ॥ ४५ ॥

विमर्शिनी

ततः स्वयं जानुयुगलेनास्थाय जानुयुगलं भुवि स्पृष्टं यथा भवति तथोपविश्य पात्रघट्टनेन उद्बुद्धमुद्धृतपिधानं त्यक्ताच्छादनम् उदर्चिषम् अग्निमायतनोप-रिभागे त्रिः परिभ्रमय्य विभुवीर्यमयं देवस्य बीजात्मकं ध्रुवेण प्रकृतेर्योन्यां निदध्यात् । पुनर्गर्भाशयं गर्भपात्रमिन्धनशकलेन समुपनीय समेधयेत् ज्वा-लयेच्च ॥ ४५ ॥

विवरणम्

उद्बुद्धमिति । कुण्डगतवागीश्वरीशक्तिसम्प्रयोगमाहात्म्याद् उद्बुद्धं तद्बुद्ध्या पात्रताडनेन उद्बोधितम् । उदर्चिषमिति । अग्निं जानुयुगलेना-स्थाय त्रिः परिभ्रमय्येत्यन्वयः । वीर्यमथनधियैतत् परिभ्रमणम् । ध्रुवे-णेत्युद्बोधने परिभ्रमणे च सम्बन्धनीयम् । विभुवीर्यमयमिति । विभोर्यतः सा शक्तिः पुत्रीयन्ती तस्य शुक्रं वीर्यमयमित्यर्थः । अत एवोद्बोधपरिभ्रमणयोरुक्तप्र-तिपत्तिलाभः । विभुवीर्यमयमित्यभिधानेन वागीश्वरस्य पृथग्भावनापक्षोऽपि सूचितः । गर्भाशयमित्यग्न्यायतनमध्यमित्यर्थः । समेधनं ध्रुवेणैव प्रज्वलनम् । तदा च वागीश्वरभावोपसंहारेण प्रकृतभावभावनया मन्त्रप्राणायामाद्यपि कार्यमिति ज्ञेयम् ॥ ४५ ॥

स्वस्वोक्तवत् परिसमूहपरिस्तराद्यं
सर्पिःस्रुवप्रभृतिसंस्करणं च कृत्वा ।
कल्याणरेतसममुं परिभूष्य गर्भा-
धानादिसंस्कृतिमथ क्रमशोऽस्यं कुर्यात् ॥ ४६ ॥

विमर्शिनी

स्वस्वोक्तवत् स्वस्वगृह्योक्तक्रमेण परिसमूहपरिस्तराद्यं परिसमूहनपरिस्तरणपर्युक्षणाद्यं सर्पिःस्रुवप्रभृतिसंस्करणमाज्यसंस्कारादिकं[2] कृत्वा कल्याणरेतसमग्निं परिभूष्य गन्धपुष्पादिभिरलङ्कृत्य अथास्याग्नेः गर्भाधानादिसंस्कृतिं क्रमशः कुर्यात् ॥ ४६ ॥

विवरणम्

स्वस्वोक्तवदिति । स्वस्वकल्पोक्तमेव स्वस्वोक्तं भवतीत्येवमभिधानम् । परिसमूहपरिस्तराद्यमिति पर्युक्षणादिग्रहणम् । सर्पिःस्रुवप्रभृतिसंस्करणं चेति स्रुगादिग्रहणम् । महास्रुचा हि पूर्णाहुतिरिष्यते; तदसम्भवे तु जुहोति । कल्याणरेतसममुं परिभूष्येति । गन्धपुष्पाभ्यामिममग्निमलङ्कृत्येत्यर्थः [॥ ४६ ॥

तारेण प्रसमर्च्य कर्म करणीयं कल्पयित्वा धिया
हुत्वैकां समिधं घृतं प्रजुहुयात् स्वोक्ताणुनात्राष्टशः[1] ।
तिष्ठन् सस्रुवया स्रुचा चतुरवत्ताज्याढ्यया होमयेत्
पूर्णां कर्म कृतं स्मरेत् तदधुना वा स्यात्[3] स्रुवेणार्चनम् ॥

विमर्शिनी

तत्परिपाटीमाह — तारेणेति । पूर्वं तारेण प्रसमर्च्य करणीयं कर्म धिया कल्पयित्वा 'गर्भाधानं करिष्य' इत्यादिकमुपांशूच्चार्य एकां समिधममन्त्रकं हुत्वा अत्र अग्नौ स्वोक्ताणुना स्वस्वोक्तमन्त्रेणाष्टशो घृतं प्रजुहुयात् । चतुरवत्ताज्याढ्यया स्रुचि स्रुवेण चतुष्कृत्वः आज्यमवदाय पूरणं कृत्वा सस्रुवया स्रुवसहितया तया स्रुचा स्वयं तिष्ठन् पूर्णां होमयेत् । ततस्तत्कर्म कृतं स्मरेत् 'गर्भाधानं कृतमि'त्याद्युपांशूच्चरेत् । तत् स्रुवेणार्चनमधुना वा स्यात्, कर्मणः पूर्वमर्चनमिति केचित्, कर्मण उपरीति केचिदित्यर्थः ॥ ४७ ॥

---

१. 'त्र' ग. पाठः. २. 'कर्म कृ' ख. पाठः. ३. 'स्याद् ध्रुवे' क. पाठः.

विवरणम्

गर्भाधानादिसंस्कृतिं विवृणोति — तारेण प्रसमर्च्यैति । करणीयं कर्म धिया कल्पयित्वेति । 'ओं गर्भाधानं करिष्ये' इति मनसोच्चारणमेतत् । चतुरवत्ताज्याढ्यया सस्रुवया स्रुचा तिष्ठन् पूर्णां स्वोक्ताणुना होमयेदित्यनुषङ्गेण योज्यम् । स्रुवेण चतुर्वारं महास्रुचि घृतमवदाय तिष्ठन् पूरयेत् । अत एवाढ्यग्रहणम् । पुनः स्रुवं तदुपरि सम्पुटं निधाय नाभिसंलग्नतया कृत्वा वौषडन्तेन तन्मन्त्रेण पूर्णाहुतिमच्छिन्नधारया विदध्याद् इत्येवं तत्प्रकारोऽप्यनेन सूचितः । कर्म कृतं स्मरेत्तदिति । 'ओं गर्भाधानं कृतमि'ति । एवं पुंसवनादिष्वपि बोद्धव्यम् । अधुना वा स्याद् ध्रुवेणार्चनमिति । तारेण पूजा प्रक्रमे तावदुक्ता, सेदानीं परिसमाप्तौ वा स्यादित्यर्थः ॥ ४७ ॥

ईशे षोडश सेकपुंसवनसीमन्तोन्नया जातक-
मांख्या निष्क्रमभुक्तिचौलमुपनीतिश्च व्रतानि क्रियाः ।
स्नानोद्वाहवितानवह्निकरणं शेषेष्वनिष्क्रान्तयः
सन्त्वष्टोपनयान्तिमा महिषहन्त्र्यां सप्त चौलान्तिमाः ॥ ४८ ॥

विमर्शिनी

कर्माण्याह — ईश इति । ईशे सेकपुंसवनसीमन्तोन्नयाः सेको गर्भाधानं, पुंसवनं, सीमन्तोन्नयश्च, जातकर्म, आख्या नामकरणं, निष्क्रमभुक्तिचौलं निष्क्रामणमन्नप्राशनं चौलं च, उपनीतिरुपनयनं, व्रतानि माहानाम्न्यमहाव्रतौपनिषद्गोदानानि । चरणवशादन्यथात्वेऽपि सर्वेषां चत्वार्येव व्रतानि प्रायाणि । स्नानोद्वाहवितानवह्निकरणं स्नानं समावर्तनं, उद्वाहो विवाहः, वितानवह्निकरणमग्न्याधानम् इति षोडश क्रियाः सन्तु, शेषेषु देवेष्वनिष्क्रान्तयः निष्क्रामहीनाः उपनयान्तिमा अष्टौ । महिषहन्त्र्यामनिष्क्रान्तयश्चौलान्तिमाः सप्त ॥ ४८ ॥

विवरणम्

ईशे षोडशेति । क्रियाः सन्त्विति सम्बन्धः । सेको गर्भाधानम् । सीमन्तोन्नयः सीमन्तोन्नयनम् । आख्या नामकरणम् । निष्क्रम उपनिष्क्रामणम् । भुक्तिरन्नप्राशनम् । चौलं चौळकर्म । उपनीतिरुपनयनम् । व्रतानीति । सर्वचर-

1. 'प्त क्रियाः सन्तु ॥ तासां क्रि' ख. पाठः

णेष्वपि चत्वार्येव ग्राह्याणि । यथा माहानाम्निकं माहाव्रतमौपनिषदं गोदानमित्यादि । स्नानं समावर्तनं, उद्वाहो विवाहकर्म, वितानवह्निकरणं अग्न्याधानम् ॥ ४८ ॥

कुर्यात्[1] सद्यादिपञ्चाननशिवनृशिवब्रह्मपङ्क्त्यर्णनादै-
रीशे श्रीशार्यदुर्गास्वपि मनुलिपिभिः स्वाङ्गबीजैर्गणेशे ।
संस्कारानन्त्यतस्त्रीन् स्मरमुरभिदि भूरादिभिः सत्यतो द्वौ
श्रीशे वाङ्गैः षडास्ये षडणुमनुयुजार्येऽपि षण्मूलतारैः ॥४९॥

विमर्शिनी

क्रियाणां होममन्त्रानाह — कुर्यादिति । ईशे सद्यादिपञ्चाननशिवनृशिवब्रह्मपङ्क्त्यर्णनादैः सद्यादिपञ्च 'सद्योजातं प्रपद्यामी'त्यादिपञ्चब्रह्माणि, आननं तत्पुरुषः, शिव ईशानः, नृशब्देन तत्पुरुष उक्तः, पुनरपि शिव ईशान एव, ब्रह्मेति सद्योजातादीशानान्तानि पञ्च ब्रह्माणि, पङ्क्त्यर्ण व्योमव्यापि दशाक्षरं, नादः प्रासादः, एतैः संस्कारान् कुर्यात् । श्रीशार्यदुर्गास्वपि मनुलिपिभिर्मूलमन्त्राक्षरैः, गणेशे स्वाङ्गबीजैरन्त्यतः अस्त्रेण त्रीनपि, स्मरमुरभिदि शिवनारायणे भूरादिभिः सप्तव्याहृतिभिः, तत्र सत्यतो द्वावपि, श्रीशे अङ्गैः अष्टाङ्गैर्वा, षडास्ये षडणुमनुयुजा षण्मन्त्रैर्मूलमन्त्राभ्यां च । आर्येऽपीत्यपिशब्दो विकल्पार्थः, पूर्वं मूलार्णैरुक्तत्वात् । तत्र षण्मूलतारैः षण्मन्त्रमूलमन्त्रप्रणवैः संस्कारान् कुर्यात् । सर्वत्र होमे मन्त्राणां स्वाहान्तत्वमवगन्तव्यं, मन्त्राणां बीजानां व्याहृतीनां विभक्तिरहितत्वं च, पीठपरिवारादीनाममन्त्राणां स्वाहान्तविभक्तिसहितत्वं च ॥ ४९ ॥

विवरणम्

आननं तत्पुरुषः, शिव ईशानः, नृशब्देन तत्पुरुष उक्तः, ब्रह्माणि सद्योजातादीनि, पङ्क्त्यर्णो व्योमव्यापि दशाक्षरम्, नादः प्रासादः । मनुलिपिभिरिति । स्वस्वाष्टाक्षरमनोरष्टभिरक्षरैः । तानि च प्रणवरुद्धानि स्युः । गणेशे स्वाङ्गबीजैरन्त्यतस्त्रीनिति । प्रणवरुद्धैः गांगीमित्यादिषड्भिरङ्गबीजैरन्नप्राशनान्तानि पुनरन्त्येनैव चौळमुपनयनं चेत्यर्थः । भूरादिभिरिति प्रणवादित्वमिष्यते । श्रीशे वाङ्गैरित्यष्टाङ्गविकल्पः । षडास्ये षडणुमनुयुजा वेति । 'ओं

१. 'शर्वे स', २. 'रार्ये षण्मूलतारैश्चरतु षडणुमूलद्वयैर्बाहुलेये । भूराद्यैः सत्यतो द्वौ स्मरसुरदमने स्वाङ्गबीजैर्गणेशे संस्कारानन्त्यतस्त्रीन् हरिमहिषजितोर्मूलवर्णैश्च वह्नेः ।' ख. पाठः.

सनत्कुमाराय स्वाहा' इत्यादिषण्मन्त्रैर्मूलेनोपचारमनुना चेत्यर्थः। षण्मूलतारैरिति। रेवन्तादिषण्मन्त्रैर्मूलेन च प्रणवेन च। अयमपि विकल्प एव॥ ४९॥

पूर्णेषु कर्मसु समर्चितयोगपीठे-
ऽत्रावाह्य मूलमनुना लिपितत्त्वमन्त्रान्।
विन्यस्य तं सकलितं[1] परिदीप्तसप्त-
जिह्वादिकं प्रयजतामनुसन्दधानः॥ ५०॥

विमर्शिनी

क्रियाशेषमाह—पूर्णेष्विति। एवं पूर्णेषु कर्मसु सत्सु समर्चितयोगपीठेऽत्राग्नौ मूलमनुनावाह्य लिपितत्त्वमन्त्रान् विन्यस्य सकलीकृतं तं परिदीप्तसप्तजिह्वादिकं परितो दीप्ताः सप्त जिह्वा ज्वालाभेदा यस्य तम्। एतेन पक्षान्तरे जिह्वाङ्गमूर्तिन्यासादिकं सूचितम्। एवंभूतं च तमनुसंदधानः ध्यायन् प्रयजताम्॥ ५०॥

विवरणम्

पूर्णेषु कर्मस्विति। परिसमापितेषु संस्कारेषु प्राग्जिह्वादिन्याससम्भवे तैरपि कार्यो होमः। समर्चितयोगपीठ इति। 'प्राग् इहार्हतु योगपीठमि'ति यदुक्तं तदनुवादः। यद्वाधुनापि पीठपूजा कार्येति विधानं प्रागुक्तपीठं शक्तेरेव तद्गताभावेवेदं देवस्य पीठमिति च भेदः। जातकर्मणि कृते सा शक्तिः कुण्डशक्तिरूपेणैव विभावनीयेति। तं सकलितमिति। एवं सकलितम्। यद्वाङ्गायुधादिन्यासाभिप्रायमेतत्। परिदीप्तसप्तजिह्वादिकमिति। तं अनुसन्दधान इति सम्बध्यते। जिह्वादीनामनुसन्धानमात्रमेव। यद्वा, अग्न्याधानानन्तरं न्यासोऽपि कार्यः। तत्र प्रथमं लिपिन्यासं तत्त्वन्यासं च कृत्वा पुनर्जिह्वादीनां न्यासः। तदुक्तम्—

"सलिङ्गगुदमूर्धास्यनासानेत्रेषु च क्रमात्।
सर्वाङ्गेषु च विन्यस्येत् सप्तजिह्वा हविर्भुजः॥
हिरण्या गगना रक्ता कृष्णा चैव तु सुप्रभा।
बहुरूपातिरक्ता च जिह्वाः सप्तेति सात्त्विकाः॥" इति।

---

१. 'कल्प्य देवं संपूजयेत् सुपरिवारवृतं जलाद्यैः॥ ता' ख. पाठः. २. 'लितं', ख. पाठः.

आदिशब्देन मूर्त्यङ्गग्रहणम् । तदप्युक्तं —

मूर्धांसपार्श्वकट्यन्धुकटिपार्श्वांसकेषु च ।
जातवेदाः सप्तजिह्वो हव्यवाहन एव च ॥
अश्वोदरजसंज्ञश्च स वैश्वानर एव च ।
कौमारतेजाश्च तथा विश्वदेवमुखाह्वयौ ॥
स्युरष्टमूर्तयो वह्नेरग्नयेपदपूर्विकाः ॥" इति ॥

'ओमग्नये जातवेदसे नमः' इत्यादि । 'विश्वदेवमुखाह्वयावि'ति । 'ओमग्नये विश्वमुखाय नमः' । 'ओमग्नये देवमुखाय नमः' । इति मूर्तिन्यासः । पुनरङ्गन्यासः —

"सहस्रार्चिः स्वस्तिपूर्ण उत्तिष्ठपुरुषस्तथा ।
धूमव्यापी सप्तजिह्वो धनुर्धर इतीरिताः ॥" इति ॥

'ओं सहस्रार्चिषे हृदयाय नमः' इत्यादि । परिदीप्तसप्तजिह्वादिकमित्यनेनैव अग्नावावाहितस्य देवस्य तेनैवाग्निमूर्तिना सह एकीभावभावनापि प्रणवेन सूचिता । ततश्चैतदपि लभ्यते । प्राग्जिह्वाङ्गमूर्तिन्यासाकरण इदानीं तदपि कार्यमिति । प्रयजतामिति विग्रहपूजावरणपूजा चोक्ता ॥ ५० ॥

**तारव्याहृतिभि[1]ः स्वपीठमनुभिस्तारोपचारस्वमू-**
**लाङ्गैरावरणाणुभिश्च सकृदावृत्त्या घृतं मूलतः ।**
**पूर्णान्ते प्रजुहोतु भूःप्रभृतितारारव्यैः समाप्याच्र्य तं**
**रक्षेन्निष्कलितं ततो[2]ऽत्र *परिषेकान्तं विधिं चा[3]चरेत् ॥ ५१ ॥**

विमर्शिनी

**तारव्याहृतिभिः** तारेण व्याहृतिभिश्च स्वपीठमनुभिः स्वस्वपीठमन्त्रैः तारोपचारस्वमूलाङ्गैरावरणाणुभिः परिवारमन्त्रैश्च सकृद् मूलत आवृत्त्या अष्टशतमष्टाविंशतिवारमष्टवारं वा (घृतं) जुहोतु । पूर्णान्ते भूःप्रभृतितारारव्यैर्व्याहृतिभिः प्रणवैश्च जुहोतु । होमं समाप्याच्र्य प्रसन्नपूजां कृत्वा निष्कलितं तं रक्षेत् । ततोऽत्र परिषेकान्तं विधिं चाचरेत् ॥ ५१ ॥

---

१. 'पीठमूलपरिवारैः स्वैर्जुहोत्वेकशः सर्पिः साष्टशतं स्वमूलमनुना पूर्णान्वितं मन्त्रवित् । भूरादिप्रणवैः सकृत् सकृदथाराध्य प्रसाद्य प्रभुं र', २. 'ततः परिसमूह्यायं वि' ख. पाठः. ३. 'प्रा' क. पाठः.

---

* 'तन्नुयाद् पर्युक्षणान्तं विधिम्' इति विवरणपाठः ।

विवरणम्

**स्वपीठमनुभिरिति** । सर्वत्र नतिस्थाने स्वाहाकारः । तारोपचारस्वमूलाङ्गैरिति । सर्वैरपि न्यस्तमन्त्रैर्होमः सम्भववशादिष्यते । अङ्गग्रहणमायुधोपलक्षणम् । अत्र मूलाक्षराणां तारपुटितत्वम् । अङ्गानां नमोवषडाद्यनन्तरं स्वाहाकारस्त्वसौ शिरस एवेति ज्ञेयम् । आवरणाणुभिश्चेति । नेह पूजायामिवावरणसङ्कोचनमित्यर्थाद् गम्यते । सकृदिति । प्रणवव्याहृत्यादिनिर्माल्यधारिपर्यन्तमस्त्रैस्सकृत् सकृदित्यर्थः । आवृत्त्या मूलत इति । 'सर्वत्राष्टावष्टाविंशतिरावृत्तिरष्टशतमथवे'ति । पूर्णान्ते प्रजुहोत्विति । मूलत आवृत्त्येत्यत्रापि सम्बध्यते । भूःप्रभृतिताराख्यैरिति । सकृदित्यनुषङ्गः । ब्रह्मार्पणेनापि हुतमिष्यते । समाप्येति संस्रावाभिप्रायम् । आर्च्येति प्रसन्नपूजोक्ता । निष्कळितं रक्षेदिति लयाङ्गन्यासताळत्रयादिकमुक्तम् । पर्युक्षणान्तं विधिमिति । परिसमूहपर्युक्षणगन्धपुष्पाराधनपर्युक्षणान्युक्तानि । ततः स्वात्मन्यपि लयाङ्गन्यासादि कुर्यादिति ।

"मण्डपाङ्गतया मुष्टिं जनिते जातवेदसि ।
कुम्भेशभ्रमणं कुर्यादिति केचित् प्रचक्षते ॥
शक्त्या मूलेन वा हुत्वा जनिताग्नौ विशेषवित् ।
सम्पातं मण्डपे वेद्यामर्पयेदिति केचन ॥" ॥ ५१ ॥

**अथ सम्मृष्टलिप्तायां वेद्यां दक्षिणतो गुरुः ।**
**शय्याक्षेत्रं प्रकुर्वीत मूलप्रासादसम्मुखम् ॥ ५२ ॥**

विमर्शिनी

शय्याकल्पनादिकमाह — अथेति । अथ कुम्भेशपरिभ्रमणाग्निजननयोरनन्तरं गुरुः स्वयं संमृष्टलिप्तायां विशेषतश्च कृतमार्जनानुलेपायां वेद्यां दक्षिणतो दक्षिणार्धे शय्याक्षेत्रं शय्यायाः स्थानकल्पनं मूलप्रासादसंमुखं यथा भवति तथा प्रकुर्वीत ॥ ५२ ॥

विवरणम्

अथ प्राग्जलेऽधिवासितस्य बिम्बस्येह ध्यानाधिवासकृते शय्यापूजामाह — अथ संमृष्टलिप्तायामिति । प्राग्विकीर्णमक्षतादिकं विकिरादिकं वा मुष्ट्या सम्मार्ज्य गन्धतोयेन सम्प्रोक्ष्य वेदितलमालिप्य तत्रेत्यर्थः । लौकिकमेवैतदुभयं मन्तव्यम् । दक्षिणत इति । मध्यसूत्रादिति भावः । तत्रापि प्राग्द्वारे

प्रासादे किञ्चित् प्राङ्नीत्वा प्रत्यग्द्वारे किञ्चित् प्रत्यङ्नीत्वा शय्या कल्पनीया । मूलप्रासादसम्मुखमिति । प्राग्द्वारे प्राक्शिरस्कं प्रत्यग्द्वारे प्रत्यक्छिरस्कम् इत्यभिप्रायः । स्कन्दे त्वन्यथा वक्ष्यति 'तत्पूर्वतः शय्यामि'ति ॥ ५२ ॥

**कृत्वा स्वस्तिकमत्र धान्यनिचयं द्रोणाष्टकाद्युन्मितं**
**मूलेनामलतण्डुलादिसहितं क्षिप्त्वा कुशाग्रोत्तरम् ।**
**तत्रौर्णेयकतूलसंभृतपटीपट्टादिभिः कल्पितां**
**शय्यां शार्ङ्गिणि संस्तृणातु मिहिरार्णेनान्यतो मूलतः ॥ ५३ ॥**

विमर्शिनी

महत् स्वस्तिकं कृत्वात्र द्रोणाष्टकाद्युन्मितं धान्यनिचयं व्रीहिपुञ्जम् अमलतण्डुलादिसहितम् । आदिशब्देन सिद्धार्थो गृह्यते । कुशाग्रोत्तरं यथा भवति तथा मूलेन क्षिप्त्वा तत्र और्णेयकतूलसंभृतपटीपट्टादिभिः और्णेयकः कम्बलः तूलसंभृतपटी तूलैरन्तर्गृहीता पटी (കിടക്ക) । पट्टादीत्यादिशब्देन इन्द्रगोपादयः पट्टविशेषा गृह्यन्ते । तैः कल्पितां शय्यां शार्ङ्गिणि मिहिरार्णेन द्वादशाक्षरेण, अन्यतोऽन्यदेवेषु मूलेन च संस्तृणातु कल्पयेत् ॥ ५३ ॥

विवरणम्

**कृत्वा स्वस्तिकमिति** वीथीस्वस्तिकमभिप्रेतम् । यथोक्तम् —

"प्रागग्रसूत्राण्युदगग्रसूत्राण्यपि क्रमादत्र षडष्ट कृत्वा ।
त्र्येकैः पदैः स्वस्तिकमादधीत चतुर्दिशास्वन्यपदैश्च वीथीम् ॥" इति ॥

अत्र मूलेन धान्यनिचयं क्षिप्त्वेति व्रीह्यभिप्रायम् । द्रोणाष्टकाद्युन्मितमिति । द्रोणं मानमुक्तम् ।

"माषः शाणस्तलं मुष्टिरञ्जलिः प्रस्थ आढकः ।
द्रोणो गोणी च खारी च क्रमादेतच्चतुर्गुणम् ॥" इति ॥

अमलतण्डुलादिसहितमिति ।

"धान्येषु वा शालिषु वा सतण्डुले-
ष्वेतेषु वा सार्धतिलेषु वैषु ।
ससर्षपेष्वेषु करोतु शय्यां
तिलोत्तरेष्वेष्वथवा मनस्वी ॥" इति ॥

---

१. 'त्र पूर्वे औ' ख. पाठः.

तत्र शय्यां संस्तृणात्विति सम्बन्धः । और्णेयकं कम्बलं, तूलैः कार्पासादिभिः सम्भृतान्तःपूरिता पटी वस्त्रं, पट्टं क्षौमादिकम् । आदिशब्देन वर्णविचित्रपट्टादिग्रहणम् । एतैः । कल्पितामिति । खट्वायामायतफलके आयतपीठमात्रेऽपि समानमेतत् । शार्ङ्गिणि मिहिरार्णेनेति । द्वादशाक्षरेण ॥ ५३ ॥

**परार्ध्यवासोविहितोत्तरच्छदे**
**शिरोपधानादिमतीष्टविष्टरे ।**
**यजेत *तत्पीठदृढाभिमानिनीं**
**स्वकीयशक्तिं निजबीजविद्यया ॥ ५४ ॥**

विमर्शिनी

**परार्ध्यवासोविहितोत्तरच्छदे** परार्ध्यैः श्रेष्ठैर्वासोभिर्विहितमुत्तरच्छदमुपरिगतवस्त्रं यस्मिंस्तस्मिन् । शिरोपधानादिमतीत्यादिशब्देन पादोपधानकपोलस्थलादिकं गृह्यते । इष्टविष्टरे कृतपीठार्चने तत्र तत्पीठदृढाभिमानिनीं तत्पीठरूपिण्यां शय्यायां स्थिराधिष्ठात्रीं रमोमाद्यां निजबीजविद्यया विष्णौ श्रीबीजेन अन्यत्र भुवनेश्वर्या चावाह्य यजेत ॥ ५४ ॥

विवरणम्

**परार्ध्यवासोविहितोत्तरच्छद** इति । परार्ध्यमर्धतो महत् । द्वे त्विह उपर्यास्तरणे स्याताम् । शिरोपधानादिमतीति । कपोलस्थलद्वयं पादगड्डुकमित्येतद् आदिशब्देनोक्तम् । इष्टविष्टर इति । समुचितविष्टरन्यासः पीठपूजा चोक्ता । यजेतेति । आवाहनादिपूर्वकं पूजनमभिप्रेतम् । समाहित इति प्रतिपत्त्यभिप्रायम् । विधानविदिति वा पाठः । तेनात्मनः सकळीकरणादिकं गुरुगणपतिपूजापूर्वकं शय्यायामस्त्रप्रोक्षणतालत्रयादिकं शोषणादिकं शक्तिधारणेत्येतत् सर्वमुक्तम् । स्वकीयशक्तिमिति । विष्णौ लक्ष्मीं, अन्येषु मूलप्रकृतिम् । निजबीजविद्ययेति । श्रीबीजेन भुवनेश्वर्या वेत्यर्थः । यद्वा स्वकीयशक्तिमिति,

"विष्णौ श्रीः स्यात्, शिव उमा श्युमा हरिहरे गुहे ।
देवयान्यथ दुर्गायां प्रकृतिश्शक्तिरिष्यते ॥"

---

१. 'स्मिञ्छयने समाहितः स्व' क. ग. पाठः.

---

* 'तस्मिञ्छयने समाहितः' इति विवरणरीत्या पाठः.

प्रभा शास्तरि हेरम्बे विभूतिर्भुवनेश्वरी ।
श्रीर्हृल्लेखापि बीजं स्वं स्वा वा विद्या प्रभादिषु"

इति । प्रभाविभूतिदेवयानीषु तासामेव विद्या वेत्यर्थ इति ॥ ५४ ॥

**आपोहीत्यणुभिः स्मरद्विषि शिरोदेशे कुमारे तथा-**
**पोदेवीरिति मूलतस्तदितरेष्वार्येऽथवैश्यां दिशि ।**
**निद्राकुम्भमथाभिपूर्य विधिवद् गन्धाम्भसा पूजये-**
**च्छय्यान्ते परितोऽष्टदिक्षु मनुविद् विघ्नेशकुम्भानपि ॥५५॥**

विमर्शिनी

अथ मनुवित् मन्त्रविशेषज्ञो गुरुः सर्वदेवेषु शय्यायाः शिरोदेशे आर्येऽथवैश्यां दिशि स्मरद्विषि आपोहीत्यणुभिः आपोहिष्ठादिमन्त्रैः, तथा कुमारे 'आपो देवीः' इति मन्त्रेण, तदितरेषु मूलतश्च (निद्राकुम्भं) गन्धाम्भसाभिपूर्य विधिवत् कलातत्त्वावाहनादिसंयुतं पूजयेत् । शय्यान्ते शय्यासमीपे परितोऽष्टदिक्षु विघ्नेशकुम्भानप्याभिपूर्य पूजयेत् ॥ ५५ ॥

विवरणम्

**शिरोदेश** इति । शय्यायामेव । न बहिरिति भावः । निद्राकुम्भमथाभिपूर्येति । पूजयेदित्युपरि सम्बन्धः । आर्येऽथवैश्यां दिशीति । शास्तरि शिरोदेशे वेशादिशि वा तत्र प्राक्च्छिरस्के बिम्बे शिरसो दक्षिणाभ्याशे भवति । प्रत्यक्छिरस्के उत्तराभ्याशे तु गन्धाम्भसा विधिवदभिपूर्य पूजयेदित्यन्वयः । विधिवदिति । कुम्भसंस्कारतदावाहनकूर्चन्यासहेमरत्नाक्षतद्रव्यन्यासमानसपूरणाद्युक्तानि । लिपिपङ्कजपूजामूर्त्तिद्वयतत्त्वावाहनादिकमपि कार्यम् । वक्ष्यति च––

"निद्राघटेन च तथाखिलतत्त्वमूलैः" ।

इति । शय्यान्त इति । शय्याया बहिर्भाग एवेत्यर्थः । स्वस्तिकेषु व्रीहिभिः पीठं विधाय तेषु विघ्नेश्वरकलशपूजा कार्या । मनुविदिति । विघ्नेश्वरमन्त्रतदङ्गाभिज्ञत्वमुक्तम् ॥ ५५ ॥

**विष्णौ विष्णुमुखाः समूललिपयो दिक्कोणकास्त्रीक्षणे-**
**ऽनन्ताद्या अपि ते द्वये शिवहरौ गोप्त्रादयः शास्तरि ।**

---

१. 'द्वितयेऽपि ते शि' इति मूलकोशपाठो विवरणपाठश्च ।

पूज्यास्तेषु घटेषु भाविपरिवारा मूर्तयः शक्तय-
श्चान्येषु त्रिषु मूलमेव चतसृष्वाशासु वा षण्मुखे ॥ ५६ ॥

विमर्शिनी

विष्णौ तेषु घटेषु समूललिपयः मूलमन्त्राक्षरैः क्रमाद् युक्ता विष्णुमुखा विष्णुमधुसूदनाद्याश्चक्रपूजायां वक्ष्यमाणाः पूर्वादिदिक्कोणगाः पूज्याः । त्रीक्षणे अनन्ताद्याः अनन्तसूक्ष्माद्याः पूजायां वक्ष्यमाणाः । शिवहरौ ते द्वयेऽपि 'अनन्ताय विष्ण्वात्मने नमः' इत्याद्याः । शास्तरि गोप्त्रादयः गोप्तृपिङ्ग-लाक्षादयो मण्डपसंस्कार उक्ताः । अन्येषु त्रिषु दुर्गास्कन्दगणेशेषु मूर्तयः शक्तयश्च भाविपरिवाराः पूजापटले वक्ष्यमाणाः । तत्र दुर्गायां जयाद्याः शक्तयः, स्कन्दे सनत्कुमाराद्या मूर्तयः, गणेशे गणञ्जयाद्या मूर्तयः पूज्याः । षण्मुखे चतसृष्वाशासु मूलमेव वा मन्त्रः ॥ ५६ ॥

विवरणम्

विष्णौ विष्णुमुखा इति । चक्राब्जपूजायां वक्ष्यमाणा इति भावः । समूललिपय इति । अष्टाक्षरवर्णैः प्रणवपुटितैः आदौ युताः स्वस्वपदैरिह पञ्चाङ्गानि । दिक्कोणगा इति । ... ... त्रीक्षणेऽनन्ताद्या इति । एषु प्रासादः योगः । हांहीमादियुतैः स्वनामभिरिह षडङ्गानि । प्रासादयोगे प्रणवेन वा अ आ इत्यादिस्वरद्वन्द्वगतेन स्वनाम्ना वाङ्गानि । यद्वा समूललिपय इति...... मूललिपिरिह प्रासाद एव । द्वितयेऽपि ते शिवहराविति । भिन्नासंभिन्ना वा स्युरिति भावः । भाविपरिवारा इति । स्कन्दे सनत्कुमारादयः । गणपतौ गणञ्जयादयः । ते चौजस्वरयुताः । एता मूर्तयः । दुर्गायां जयाद्याः शक्तयः । सर्वेषां प्रणवेन वा प्रागुक्तवद् द्विस्वरयोगेन वा षडङ्गानि । एतत् सर्वमपि मनुविदित्येव सूचितम् । षण्मुखे चतसृष्वाशासु मूलमेव वेति पक्ष-भेद उक्तः । स्वात्मनो व्यूहरूपमेतदिति च बोद्धव्यम् ॥ ५६ ॥

मध्येवेदि विनिर्मिते रसदले कौमारके मण्डले
कौमारं कलशं प्रपूर्य विधिवत् संपूज्य तत्पूर्वतः ।
शय्यां दक्षिणसौम्यदिक्कृतसमायामां गुहे कल्पयेत्
स्वोद्यत्स्वापघटादिकामभिदधे कौमारकुम्भार्चनम् ॥ ५७ ॥

---

१. 'श्च पू' ख. पाठः. २. 'भ', ३. 'षां' घ. पाठः

विमर्शिनी

कुमारे विशेषमाह—मध्येवेदीति । गुहे मध्येवेदि वेदिमध्ये रसदले षड्दले विनिर्मिते द्वादशपटले वक्ष्यमाणविधिना संपादिते कौमारके मण्डले कौमारं कुमारदेवत्यं कलशं विधिवत् प्रपूर्य संपूज्य च तत्पूर्वतः तस्य पूर्वभागे दक्षिणसौम्यदिक्कृतसमायामां दक्षिणोत्तरदीर्घा स्वोद्यत्स्वापघटादिकां स्वस्वस्थानस्थितनिद्राकलशविघ्नेश्वरकलशयुक्तां शय्यां कल्पयेत् । कौमारकुम्भार्चनमभिदधे वच्मि ॥ ५७ ॥

विवरणम्

अथ स्कन्द एवापरं भेदमभिधत्ते — मध्येवेदीति । 'पारे मध्ये षष्ठ्या वे'ति समासः । प्रपूर्य विधिवदिति पीठपूजाकुम्भसंस्कारादिकमुक्तम् । सम्पूज्य तत्पूर्वत इति स्कन्दे मण्डलपूजापूर्वमेव शय्यापूजेत्युक्तम् । स्वोद्यत्स्वापघटादिकामिति । शय्यायामेव शिरोदेशे निद्राकलशं बहिःस्वस्तिकेषु विघ्नेश्वरकलशांश्च पूजयेदिति भावः ॥ ५७॥

**पीठान्ते ब्रह्माणं सभद्रकालीगणेशविष्णुं[1] च ।**
**ईश्वरशास्तारावपि दलषट्के हरिदिगादि समभियजेत् ॥ ५८ ॥**

विमर्शिनी

तत्पूजाविधिमाह—पीठान्त इति । सामान्यस्कन्दपीठपूजानन्तरं दलषट्के हरिदिगादि पूर्वदिग्दलमारभ्य ब्रह्माणं सभद्रकालीगणेशविष्णुं भद्रकालीं गणेशं विष्णुं च ईश्वरशास्तारावपि स्वस्वनाममन्त्रैः 'ब्रह्मणे नम' इत्यादिभिरभियजेत् ॥ ५८ ॥

विवरणम्

पीठान्त इति । समष्टिपूजानन्तरम् । हरिदिगादीति । हरिरिन्द्रः ॥ ५८ ॥

**पूर्णे हिरण्मयाम्बुजगजशिखिशक्तिस्वरून् निधायात्र ।**
**कलशे सार्णसरोजे गुहमावाह्यार्चयेत् सहावरणैः ॥ ५९ ॥**

विमर्शिनी

हिरण्मयाम्बुजगजशिखिशक्तिस्वरून् सुवर्णमयपद्मगजमयूरशक्तिवज्रान् निधाय पूर्णे कलशे सार्णसरोजे पूजितलिपिपङ्कजेऽत्र गुहमावाह्य आवरणैः परिवारैः सहार्चयेत् ॥ ५९ ॥

---

१. 'ष्णुमिह ।' इति मूलकोशपाठः

विवरणम्

**पूर्ण** इति । अत्र कलश इत्यन्वयः । हिरण्मयेति । हिरण्यकृतान् पद्मगजमयूरशक्तिवज्रानित्यर्थः । हेमरत्नाक्षतं निक्षिप्य पूरणं सामान्यसिद्धम् । सार्णसरोज इति लिपिपङ्कजपूजोक्ता । मूर्तिद्वयमप्यावाह्य पूजनीयम् ॥ ५९ ॥

**प्राग्वज्रादेः प्रयजेदादित्यानश्विनौ पितॄन् गणपम् ।**
**मात्रप्सरोवसूनिह रुद्रांश्चाभ्यन्तरे जयन्ताद्ये ॥ ६० ॥**

विमर्शिनी

**तत्र वज्रादेः** प्राक् लोकपालपूजानन्तरं तदायुधपूजायाः प्राक् जयन्ताद्येऽभ्यन्तरे ईशेन्द्रयोर्मध्याद्यन्तरालेषु 'ओं आदित्येभ्यो नमः' 'ओं अश्विभ्यां नमः' इत्यादिमन्त्रैः आदित्यानश्विनौ पितॄन् गणपं गणपतिं मात्रप्सरोवसून् मातॄरप्सरसो वसून् रुद्रांश्च प्रयजेत् ॥ ६० ॥

विवरणम्

**जयन्ताद्य** इति । ईशानेन्द्रान्तरालमारभ्येत्यर्थः ॥ ६० ॥

**गाङ्गेयरूप्यमयताम्रजकांस्यमृत्सा-**
**पात्राणि मौलिपदपार्श्वयुगाग्रभाञ्जि ।**
**विष्णौ क्रमेण घृतमाक्षिकदुग्धशान्ति-**
**वार्गव्यवन्त्यभिमृशेन्निजपञ्चतत्त्वैः ॥ ६१ ॥**

विमर्शिनी

उपहारस्थापनमाह — **गाङ्गेये**ति । विष्णौ मौलिपदपार्श्वयुगाग्रभाञ्जि शिरोभागे पादयोः समीपे पार्श्वयोरग्रभागे च स्थितानि घृतमाक्षिकदुग्धशान्तिवार्गव्यवन्ति क्रमेण आज्यमधुक्षीरशान्तिजलपञ्चगव्यपूरितानि गाङ्गेयरूप्यमयताम्रजकांस्यमृत्सापात्राणि क्रमात् सुवर्णरजतताम्रकांस्यमृन्मयपात्राणि निजपञ्चतत्त्वैः क्रमेणाभिमृशेत् संस्थाप्य स्पृष्ट्वा जपेत् ॥ ६१ ॥

विवरणम्

**गाङ्गेयरूप्यमये**ति । सुवर्णकृतं रजतकृतं च पात्रं, मृत्सापात्रं प्रशस्तया मृदा कृतं पात्रं, मौलिः शिरोप्रदेशः, पदं पादाग्रदेशः । अग्रं पुरोभागः माक्षिकं मधु, शान्तिवारिति हेमरत्नाक्षतयुतं जलं गृह्यते । निजपञ्चतत्त्वैः क्रमेणाभिमृशेदित्यन्वयः । फडन्तप्रणवप्रोक्षणं शोषणादिकं क्रमेण पञ्चतत्त्वैरिज्या चेष्यते ॥ ६१ ॥

न्यस्येत् तद्वत् पदपरिसरे पात्रयोरर्घ्यपाद्ये
क्षीरक्षौद्रे मदनदमने पार्श्वयोर्मूलतश्च।
मूलेनार्ये घृतमधु शिरोङ्घ्र्योः कुमारेऽर्घ्यपाद्ये
पात्रद्वन्द्वे रजतरचिते स्वोपचाराणुनाङ्घ्र्योः॥ ६२॥

विमर्शिनी

मदनदमने शिवे तद्वत् पदपरिसरे पादसमीपे पात्रयोरर्घ्यपाद्ये अर्घ्यं पाद्यं च, पार्श्वयोः पात्रयोः क्षीरक्षौद्रे क्षीरं मधु च मूलतो न्यस्येत्। आर्ये शिरोङ्घ्र्योः शिरस्समीपे पादसमीपे च मूलेन घृतमधु घृतं मधु च, कुमारे अङ्घ्र्योः पादयोः समीपे रजतरचिते पात्रद्वन्द्वे स्वोपचाराणुना 'ओं नमः षण्मुखाये'ति मन्त्रेणार्घ्यपाद्ये च न्यस्येत्। अत्रार्घ्यपाद्ययोर्द्रव्यं स्वस्वकलशाद्‌वगन्तव्यम्॥ ६२॥

विवरणम्

पदपरिसर इति। पदोद्देशसन्निधौ। पात्रयोरिति। पात्रं हैमादि ग्राह्यम्। मूलतश्चेत्येतदर्घ्यपाद्ययोरपि सम्बध्यते। क्षौद्रं मधु। मूलेनार्ये घृतमधु शिरोङ्घ्र्योरिति। शिरःसन्निधौ हैमादिपात्रे घृतं पादाग्रसन्निधौ च मध्विति विवेकः। अङ्घ्र्योरिति दक्षिणवामपादाग्रयोस्सन्निधाविति भावः॥ ६२॥

हैमे न्यसेच्छिरसि सुम्भरिपाविषेत्वे-
त्याज्यं पदे मधु च मध्विति रौप्यपात्रे।
मूलेन पार्श्वयुजि कांस्यजताम्रजेऽर्घ्य-
पाद्ये हरीशगणपेऽत्र हरीशवच्च॥ ६३॥

विमर्शिनी

अत्र शिवनारायणदुर्गयोर्वैष्णवोक्तं ग्राह्यं गणपतेः शिवोक्तं च। स्वस्वस्थाने स्वस्तिकानि विलिख्य धान्यानि दर्भांश्च निक्षिप्यैतानि स्थाप्यानि च॥ ६३॥

विवरणम्

हैम इति पात्रे। शिरसीति। शिरोद्देशे। मध्विवतीति। मधुवातः इत्यादिमनुभिः। पार्श्वयुजीति। दक्षिणपार्श्वे कांस्यपात्रेऽर्घ्यं वामपार्श्वे ताम्रपात्रे पाद्यं मूलेन न्यसेदित्यर्थः। हरीशगणपे तु हरीशवच्चेति। हरीशे हरिवद् गणपतौ शिववदित्यर्थः॥ ६३॥

---

१. 'ङ्घ्र्योः॥ मङ्ग' ख. पाठः. २. 'तु' क. पाठः. १. 'रोग्रोद्दे' घ. पाठः.

मङ्गलान्यष्ट परितस्तथा मङ्गलपालिकाः ।
प्रदीपादींश्च विन्यस्य मण्डयेन्मण्डपोदरम् ॥ ६४ ॥

विमर्शिनी

तथाष्टमङ्गलानि मङ्गलपालिकाः प्रदीपादींश्च परितो विन्यस्य मण्डपोदरं मण्डपान्तर्भागं मण्डयेत् अलङ्कुर्यात् ॥ ६४ ॥

विवरणम्

मङ्गलान्यष्ट परित इति । घृतमध्वाद्युक्तपात्रावरणबाह्ये स्वस्तिकानि विरचय्य तेषु प्रागाद्यष्टदिक्षु अष्टमङ्गलानि विन्यसेत् । यदुक्तम्—

"शय्याकुम्भान्तरे दिक्षु विन्यसेदष्टमङ्गलम् ।"

इति । पुनः फडन्तप्रणवप्रोक्षणादि कृत्वा हृल्लेखया श्रीबीजेन वा पूजयेत् । तथा मङ्गलपालिका इति । विद्येश्वरकलशबाह्ये परितो व्रीहिपीठेषु प्रादक्षिण्येनेति भावः । 'पौर्वाह्णिके प्रत्तबलीनि'त्यादि ह्युक्तम् । प्रदीपादींश्चेति धान्यपूर्णपात्रादिग्रहणम् ॥ ६४ ॥

न्यस्येच्छङ्खारिकेतून् मुकुरवृषसृणींश्चामरं मत्स्ययुग्मं
दिक्ष्वीशे त्र्याद्यवत्सं मुकुरवृषझषद्वन्द्वकुम्भांस्त्रिधाम्नि ।
श्रीशे स्वस्तिकाब्जं दरघटमुकुरं सोत्पलावर्तवत्सं
वत्सं कुम्भं सभेरीमुकुरझषसृणीच्छङ्खनन्द्यौ च चण्ड्याम् ॥

विमर्शिनी

अष्टमङ्गलानि विविच्याह—न्यस्येदिति । ईशे दिक्षु शङ्खारिकेतून् शङ्खं चक्रं ध्वजं च, मुकुरवृषसृणीन् आदर्शं वृषभम् अङ्कुशं च, चामरं मत्स्ययुग्मं, याज्ञिकवृक्षैः कृतानेतान् शय्याया अष्टसु दिक्षु स्वस्तिकस्थेषु तण्डुलपूर्णेषु पात्रेषु न्यस्येत् । त्रिधाम्नि त्र्याद्यवत्सम् उक्तेषु त्र्याद्यं शङ्खारिकेतून् श्रीवत्सं च, मुकुरवृषझषद्वन्द्वकुम्भान् आदर्शं वृषभं मत्स्यद्वन्द्वं पूर्णकुम्भं च । श्रीशे स्वस्तिकाब्जं स्वस्तिकं पद्मं च, दरघटमुकुरं शङ्खं पूर्णकुम्भमादर्शं च, सोत्पलावर्तवत्सम् उत्पलं नन्द्यावर्तं श्रीवत्सं च । चण्ड्यां दुर्गायां वत्सं श्रीवत्सं, कुम्भं, सभेरीमुकुरझषसृणीन् भेरीमादर्शं मत्स्यद्वयमङ्कुशं च, शङ्खनन्द्यौ च शङ्खं नन्द्यावर्तं च न्यस्येत् ॥ ६५ ॥

विवरणम्

अष्टमङ्गलान्याचष्टे—न्यस्येच्छङ्खारिकेतूनिति । अरिः चक्रं, केतुः वृषाङ्कितो ध्वजः । मुकुरं दर्पणम् । सृणिरङ्कुशः । त्र्याद्येति । शङ्खं चक्रं गरु-

ङाङ्कितध्वजश्च, वत्सः श्रीवत्सः । झषद्वन्द्वं मत्स्यमिथुनम् । स्वस्तिकेति । ... घटं पूर्णकुम्भम् । आवर्तं नन्द्यावर्तं, वत्सं पूर्ववच्छ्रीवत्सम् । शङ्खनन्द्यौ चेति । नन्दी नन्द्यावर्तः ॥ ६५ ॥

पूर्णघटध्वजवज्रं स्वस्तिकशक्ती च चामरद्वितयम् ।
नागं मयूरमष्टौ स्कन्देऽपि करोतु मङ्गलान्यत्र[1] ॥ ६६ ॥

विमर्शिनी

अत्र स्कन्दे पूर्णघटध्वजवज्रं पूर्णकुम्भं केतुं वज्रं च, स्वस्तिकशक्ती च स्वस्तिकं शक्तिं च, चामरद्वितयं, नागं गजं, मयूरमप्यष्टौ मङ्गलानि करोतु ॥ ६६ ॥

विवरणम्

नागमिति गजम् ॥ ६६ ॥

दर्पणं पूर्णकुम्भं च वृषभं चामरद्वयम् ।
श्रीवत्सं स्वस्तिकं शङ्खं दीपं विघ्ने च शास्तरि ॥ ६७ ॥

विमर्शिनी

गणपतिशास्त्रोरपि शिवोक्तवदेवाष्टमङ्गलानि योज्यानि ॥ ६७ ॥

विवरणम्

गणपतौ शिवोक्तानि शास्तरि विष्णूक्तानि । यद्वा दर्पणं पूर्णकुम्भं चेति । दीपमिति भौमदीपग्रहणम् ॥ ६७ ॥

इति संस्कृतमण्डपो[2]ऽस्य बाह्ये
शिवदिग्धाम्नि निधाय भद्रपीठम् ।
परिपूज्य कुशादिमान् प्रयायात्
प्रति तीर्थं[3] प्रतिमामिह प्रणेतुम् ॥ ६८ ॥

विमर्शिनी

एवं मण्डपाश्रितं कर्माभिधाय प्रतिमाश्रितं कर्म प्रस्तौति—इतीति । एवं संस्कृतमण्डपः संपादितमण्डपाश्रितकर्मा गुरुः अस्य बाह्ये शिवदिग्धाम्नि तस्येशभागस्थापरमण्डपे भद्रपीठं निधाय परिपूज्य पीठपूजां कृत्वा कुशादिमान् दर्भपुष्पवस्त्रगन्धादिसहितः इह अल्पमण्डपस्थभद्रपीठे प्रतिमां प्रणेतुमानेतुं प्रतितीर्थं तीर्थाभिमुखं प्रयायाद् गच्छेत् ॥ ३८ ॥

---

१. 'त्र ॥ इ पाठः. २. 'पे' क. पाठः. ३. 'बिम्बं प्र' ख. पाठः.

विवरणम्

इति संस्कृतमण्डप इत्युपसंहारः । अस्य बाह्य इति । अस्य मण्डपस्य बाह्ये । शिवदिशि यो बिम्बशुद्धिमण्डपो यत्र बिम्बशुद्धिकलशपूजनमुक्तं तस्मिन् भद्रपीठं निधाय गुरुगणपतिपूजापूर्वकं स्वं स्वं पीठं सम्पूज्य तालत्रयादि कुर्यात् । अत्र विष्णौ प्राङ्मुखतया बिम्बं निधित्सितम्, इतरेषु प्रासादसम्मुखतयेति तदुचितयोगेन पीठपूजा स्यादिति बोद्धव्यम् । कुशादिमानिति दर्भांशुकगन्धपुष्पादिग्रहणम् । इहेति । अस्मिन्नेव स्नपनमण्डपे ॥ ६८ ॥

तद्रक्षणाय परितः कृतसन्निवेशं
संहृत्य दैवतगणं सलिलस्थबिम्बे ।
उद्धृत्य वारिण इदं प्रविसृज्य वासो
दर्भैर्विघृष्य सलिलेन विशोधयेच्च ॥ ६९ ॥

विमर्शिनी

तद्रक्षणाय तद्बिम्बरक्षणाय परितः कृतसन्निवेशं कृतावस्थानं दैवतगणं सलिलस्थबिम्बे संहृत्योद्वास्य इदं बिम्बं वारिण उद्धृत्य पूर्ववेष्टितं वासो विसृज्य दर्भैर्विघृष्य सलिलेन विशोधयेच्च ॥ ६९ ॥

विवरणम्

तद्रक्षणायेति । पञ्चतत्त्वदेवतानाम् अस्त्रदेवताया दिक्पालानां च बिम्बात्मनि विलापनमुक्तम् । तत्र तीरे बिम्बाभिमुखोऽवस्थाय गुरुगणपतिवन्दनतालत्रयादिपूर्वकं मन्त्रप्राणायामादि सर्वं विधाय पञ्चतत्त्वदेवतादिषु पुष्पमाराध्य बिम्बे प्रणवेनोद्वासनं कार्यम् । जलतटे भद्रपीठं निधाय तत्र पीठपूजापीष्यते । वारिण इदमुद्धृत्येति । बिम्बं तत्पीठोद्वासनपूर्वकं प्रणवेनोद्धृत्य तीरे कुर्यात् । प्रविसृज्य वास इत्याच्छादनवस्त्रादेहानमुक्तम् । यदुक्तम्—'अर्चामथावेष्ट्य सदर्भवस्त्रैरि'ति ॥ ६९ ॥

कृत्वा तद्गतभूतसर्जनमिदं तन्मन्त्रसाङ्गीकृतं
गन्धाद्याहितचर्चनं प्रतिसरं तत्साम्प्रतिक्ये तथा ।
बद्ध्वा वस्त्रसुवेष्टितं द्विजरथेऽथारोप्य वाद्यादिभिः
साकं शाकुनजापकः स्नपनगेहं मन्त्रबिम्बं नयेत् ॥ ७० ॥

विमर्शिनी

तद्गतभूतसर्जनं प्लावनादिकं भूतसृष्टिं च यथोक्तक्रमेण कृत्वा तन्मन्त्रसाङ्गीकृतं तत्तन्मन्त्रेण सकलीकृतं गन्धाद्याहितचर्चनं गन्धादिभिरलङ्कृतं कृत-

1. 'ततया पी' घ. पाठः.

पूजनं च इदं मन्त्रबिम्बं तथा तत्साम्प्रतिक्ये तत्सम्प्रतिभवे तदानीं कौतुकबन्धयोग्ये देवे प्रतिसरं कौतुकं बद्ध्वा अथ वस्त्रसुवेष्टितं द्विजरथे द्विजैः कल्पिते रथे आरोप्य वाद्यादिभिर्वाद्यघोषादिमङ्गलध्वनिभिः साकं शाकुनजापकः द्विजैः सह 'कनिक्रददि'त्यादि जपन् स्नपनगेहं स्नानार्थं पूर्वं कल्पितं मण्डपं मन्त्रबिम्बं नयेत् प्रापयेत् ॥ ७० ॥

विवरणम्

कृत्वा तद्गतभूतसर्जनमिति । पुनर्भद्रपीठे प्राग्वन्निधाय तद्बिम्बगतभूतसर्गं विदध्यात् । जलाधिवासविधौ यत्पर्यन्तं कृतं तच्छेषकरणमेतदुक्तम् । अत्र ह्मामादिस्वस्वबीजोर्ध्वगतेत्याद्युक्तवैपरीत्येन मन्त्रप्रयोगौ भवतः । यथा — ओं ह्रौं नमः परायाकाशात्मने नम इति बिम्बमूर्ध्नि स्पृशन् पञ्चविंशतिवारेण सकृत् कुम्भकं विधाय तेनैव तदादितात्वन्तं व्यापयेदित्यादि । उद्घातावृत्त्यैव प्राणायामाः स्युरिति । इदमिति । बिम्बम् । तन्मन्त्रसाङ्गीकृतमिति सकलिपिन्यासपूर्वकं मन्त्रप्राणायामव्यापकवर्णाङ्गन्यासाभिप्रायम् । गन्धाद्याहितचर्चनमिति गन्धमाल्याद्यलङ्करणं गन्धपुष्पादिपूजनं चोक्तम् । प्रतिसरं तत्साम्प्रतिक्ये तथा बद्ध्वेति । प्रतिसरं कौतुकं तस्य साम्प्रतिक्ये साम्प्रतिकत्वे सम्प्रतिकार्यत्वे । यदुक्तम् — 'मुरभिदि जलवासोद्धृतावि'ति । 'बद्ध्वा सोपचारेणाष्टार्णेने'ति । स्थित्वा प्रार्थ्येत्याद्युक्तविधया कौतुकबन्धनं विष्णौ विधायेति भावः । तीर्थोद्वासनमपि कार्यम् । शाकुनजापक इति कनिक्रदत्स्वस्तिसूक्तजपाभिप्रायम् ॥ ७० ॥

प्रासादसम्मुखतया विनिधाय भद्रं
कर्णेत्यृचं जपतु सर्वसुपर्वबिम्बम् ।
न्यस्येत् त्रिधाम्नि हरिदिङ्मुखमिष्टपीठे
त्रीणीत्यृचा जपतु भद्रमृचं तदग्रे ॥ ७१ ॥

विमर्शिनी

तत्र सर्वसुपर्व[1](णां) देवानां बिम्बम् इष्टपीठे पूर्वं पूजिते पीठे प्रासादसम्मुखतया मूलप्रासादाभिमुख्येन विनिधाय 'भद्रं कर्णेभि'रित्यृचं जपतु । त्रिधाम्नीष्टपीठे हरिदिङ्मुखं पूर्वाभिमुखं 'त्रीणि पदा विचक्रमे' इत्यृचा न्यस्येत् । तदग्रे स्थित्वा 'भद्रं कर्णेभिः' इत्यृचं जपतु च ॥ ७१ ॥

---

१. 'र्वबि' ख. पाठः.

विवरणम्

प्रासादसम्मुखतया सर्वसुपर्वबिम्बं विनिधायेत्यन्वयः । सुपर्वाणो देवाः । इष्टपीठ इत्येतदिहापि योज्यम् । भद्रपीठं परिपूज्येति ह्युक्तम् । न्यस्येदिति त्रीणीत्यृचेति सम्बध्यते । 'त्रीणि पदे'ति मन्त्रेण । हरिदिङ्मुखमिति । इन्द्रदिगभिमुखम् । तदग्रे भद्रमृचं जपत्विति । देवाग्रे तिष्ठन् 'भद्रं कर्णेभिरि'त्यृचं जपेत् ॥ ७१ ॥

श्रीशेशाजितयोर्घृतेन घृतवत्याङ्क्त्वा हरीशे नम-
स्ते रुद्रेति विशोधयेन्मुररिपौ मूलेन मासूरकैः ।
तेजोऽसीति हरौ घृताक्तिरथवा कार्या द्वयं मूलतः
स्कन्देभाननयोः स्वकल्पविधिना शेषेष्वथैतच्चरेत् ॥ ७२ ॥

विमर्शिनी

अथ श्रीशेशाजितयोर्घृतेन घृतवत्या 'घृतवती सवितुरि'त्यृचा अङ्क्त्वा अञ्जनं कृत्वा, हरीशे 'नमस्ते रुद्र मन्यव' इति, मुररिपौ मूलेन च मासूरकैः शोधयेत् । (മാസൂരകം=കടലക്കാരപ്പൊടി.) अथवा हरौ 'तेजोऽसी'ति मन्त्रेण घृताक्तिः घृतसेचना कार्या । स्कन्देभाननयोर्द्वयं घृतसेचनं शोधनं च मूलतः, शेषेषु एतद्द्वयं स्वस्वकल्पविधिना चरेत् ॥ ७२ ॥

विवरणम्

घृतवत्येति । 'घृतवती सवितरि'त्यृचा मासूरकैर्विशोधयेदिति योज्यम् । मासूरवार्भिः क्रमादिति । यदुक्तम् —

"घृतेन मधुनालिप्य क्षालयेच्छुद्धवारिभिः ।"

इति । पुनर्मासूरजलाभ्यां शोधनं लौकिकमेव ॥ ७२ ॥

*'दीर्घायुत्वे'त्यणुः । द्रुपदमनुना 'द्रुपदादिवेदि'त्यादियजुषा । क्षालयेदिति । जलैरिति गम्यते । मूलेनैतद् गुहगणपयोराचरेत् सर्वमिति । घृता-

---

१. 'वैशे मूलतः सर्पिषा क्षौद्रेणापि विलिप्य शोधयतु वा मासूरवार्भिः क्रमात् ॥ दीर्घायुत्वेत्यणुकृतघृतालेपमुद्वर्त्य बिम्बं मासूरेण द्रुपदमनुना क्षालयेत् सुम्भहन्त्र्याम् । मूलेनैतद् गुणगणपयोराचरेत् सर्वमार्ये शैरीषैः शोधयतु घृतमध्वक्ति[illegible]न्मूलतोऽथ ॥ द' क. ग. पाठः.

---

* दीर्घायुत्वेत्यादि क. ग. गताधिकपाठमाश्रित्येदं विवरणव्याख्यानम् ।

लेपनमासूरोद्वर्तनपूर्वकं क्षालनं च । आर्ये मूलतो घृतमध्वक्तिकूर्चैरीषैरशोधयत्विति योजना । शोधनमिह लौकिकमेव ॥

**दर्भाद्यैः परिघृष्य शोधयतु दुर्गायां जलैस्त्वक्छक्-**
**न्मृत्साभस्मभिरीश्वरे प्रमथपे मृत्त्वक्छकृद्भिः क्रमात् ।**
**मृत्त्वग्भ्यां गणपे गुहे स्वकलशोक्तद्रव्यकैः स्वाणुभि-**
**र्मृद्भिः श्रीशहरीशयोः स्वविहिताभिर्वक्ष्यमाणक्रमात् ॥ ७३ ॥**

विमर्शिनी

ततो दुर्गायां दर्भाद्यैः दर्भमृत्त्वग्भिः क्रमात् परिघृष्य जलैः शोधयतु । ईश्वरे त्वक्छकृन्मृत्साभस्मभिः परिघृष्य शोधयतु । प्रमथपे मृत्त्वक्छकृद्भिः, गणपे मृत्त्वग्भ्यां, गुहे स्वकलशोक्तद्रव्यकैः सर्वैः सर्वैः स्वाणुभिश्च श्रीशहरीशयोः स्वविहिताभिर्मृद्भिर्वक्ष्यमाणक्रमात् ॥ ७३ ॥

विवरणम्

दर्भाद्यैरिति । दर्भमृत्त्वग्भिः । त्वक्छकृन्मृत्साभस्मभिरीश्वर इति वाक्यम् । गुहे स्वकलशोक्तद्रव्यकैः स्वाणुभिरिति । अत्रायमाशयः —

"मूलेन कुशकूर्चेन कौश्या गव्यसुदिग्धया ।
मुष्ट्या दार्भ्यैव वास्त्रेण क्वाथचूर्णेन वर्मणा ॥
दूर्वापिष्टेन मूलेन हृदा सर्षपपिष्टतः ।
मृदा मूलेन चोद्घृष्य तत्तत्कुम्भाभिषेचनम् ॥

इति । सर्वत्रास्त्रमेव वा मन्त्रः स्यादिति । वक्ष्यमाणक्रमादिति । यथा—'लक्ष्मीशे विहितसप्तमृत्तिकाभिरि'त्यादि । 'शार्ङ्गीश्वरे वृषविषाणे'त्यादि ॥ ७३ ॥

**दुर्गागणेशशरजन्मसु बिम्बशुद्धि-**
**स्नानात् पुरो हरिहरेश्वरयोः करोतु ।**
**स्नानान्तरे नयनमोक्षणमार्यके तत्**
**प्राक् स्नानतः सलिलवासनकर्मणो वा ॥ ७४ ॥**

१. 'र्गायां गणपे च बिम्बकलशासेकात् पुरः प्रावरे नेत्रोल्लेखनमार्यके निगदितं तत्तोयवासात् पुरः । दुर्गावद् विदधीत पावकभवे भूतेशवद् वाथ तच्छ्रीशेशाजितयोस्तु बिम्बकलशस्नानक्रमस्यान्तरे ॥ हैं' ख. पाठः

विमर्शिनी

नेत्रोन्मीलनकालमाह — दुर्गेति । दुर्गागणेशशरजन्मसु बिम्बशुद्धिस्नानात् पुरः पूर्वं नयनमोक्षणं करोतु । हरिहरीश्वरयोः स्नानान्तरे स्नानमध्ये आर्ये स्नपनतः प्राक् तद् नयनमोक्षणं, सलिलवासनकर्मतो जलाधिवासात् प्राग् वा ॥ ७४ ॥

विवरणम्

बिम्बशुद्धिस्नानात् पुर इति । यदेतच्छोधनमुक्तं तत्कृत्वा नेत्रोन्मीलनं पुनरावाह्य साङ्गीकरणादि कृत्वेत्येतदादि कार्यमिति भावः । स्नानान्तरे इति । बिम्बशुद्धिस्नपनमध्ये । वक्ष्यति च — "इत्यभिषिच्याक्षिणी विलिखेदि"ति ।

"सिञ्चेदच्छजलैस्ततो वितनुयान्नेत्रत्रयोन्मीलनम् ।"

इति । सलिलवासनकर्मतो वेति । प्रागित्यनुषङ्गः ॥ ७४ ॥

**हैमे निषिच्य चषके मधुमन्त्रजप्तं**
**सूच्या प्रगृह्य घृतमाक्षिकमक्षिमोक्षम् ।**
**नेत्रेण शास्तृगणपेशुभवेषु मन्त्री**
**त्रिष्टुम्मयेन मनुना तनुयात् कुमार्याम् ॥ ७५ ॥**

विमर्शिनी

नेत्रोल्लेखनक्रियाविधानमाह — हैम इति । मन्त्री मन्त्रविशेषज्ञो गुरुः शास्तृगणपेशुभवेषु हैमे चषके घृतमाक्षिकं घृतं मधु च निषिच्य मधुमन्त्रजप्तं 'मधु वाता' इत्यादिदृचेन जप्तं तत् सूच्या सुवर्णसूच्या प्रगृह्य नेत्रेण नेत्रमन्त्रेण अक्षिमोक्षं नयनोन्मीलनं सतारकार्चिः तारकार्चिर्भ्यां सह तारकं मूलेन तत्रस्थं तेजः प्रणवेन च तनुयात् । तारकार्चिर्लेखनं सर्वत्र समानम् । कुमार्यां त्रिष्टुम्मयेन 'जातवेदस' इत्यृचा ॥ ७५ ॥

विवरणम्

हैमे निषिच्य चषक इति । घृतमाक्षिकमिति लभ्यते । अस्त्रप्रोक्षणशोषणादि सर्वं सामान्यसिद्धम् । अक्षिमोक्षमिति । नेत्रोन्मीलनम् । मन्त्री इति ............... ॥ ७५ ॥

---

१. 'वदिभास्यषडास्ययोश्च त्रि' ख. पाठः.

हिरण्यगर्भः समिति प्रगृह्य मध्वाज्यकं चित्रमिति त्रिधाम्नि[1] ।
नेत्रं लिखेद् दक्षिणमन्यदत्राप्यायस्वमन्त्रेण सतारकार्चिः[2] ॥ ७६ ॥

विमर्शिनी

त्रिधाम्नि 'हिरण्यगर्भः समवर्तत' इति मध्वाज्यकं प्रगृह्य दक्षिणं नेत्रं 'चित्रं देवानाम्' इत्यृचा, अत्रान्यन्नेत्रम् 'आप्यायस्व'मन्त्रेण च लिखेत् ॥ ७६ ॥

विवरणम्

प्रगृह्येति । 'हैमे निषिच्य चषके मधुमन्त्रजप्तं सूच्या' इत्येतदनुषज्यते ॥ ७६ ॥

माध्वीदुग्धघृतं हिरण्यमनुना संगृह्य शार्ङ्गीश्वरे
वामं चित्रमृचोल्लिखेन्नयनमन्यद् विश्वतश्चक्षुषा ।
ललाटाक्षि हिरण्यगर्भमनुनाथापूर्य गामग्रगां
हृत्वा नेत्रपटं प्रदर्शयतु तां कर्ताथ तस्मै दिशेत् ॥ ७७ ॥

विमर्शिनी

शार्ङ्गीश्वरे हैमे चषके निषिक्तं माध्वीदुग्धघृतं 'हिरण्यगर्भः सम्' इति मनुना संगृह्य पूर्वं वामं नयनं 'चित्रं देवानाम्' इत्यृचोल्लिखेत् । अन्यद् दक्षिणं 'विश्वतश्चक्षुषा' इत्यृचा । ललाटाक्षि ललाटनेत्रं हिरण्यगर्भमनुना चोल्लिखेत् । अथानन्तरवक्ष्यमाणं सर्वत्र समानम् । नेत्रमापूर्य नेत्रपटं हृत्वा नयनमोक्षणात् पूर्वं पुरोभागे वस्त्रं प्रसार्य तत्कर्म कृत्वा नेत्रपटं हृत्वा अग्रगां गां अग्रे गामानीय तां प्रदर्शयतु । अथ कर्ता यजमानः तां गां तस्मै गुरवे दिशेत् ॥ ७७ ॥

विवरणम्

माध्वीदुग्धघृतमिति । अत्राप्येतदनुषङ्गः । माध्वी मधु । अथापूर्येत्यादि सर्वशेषत्वेन योज्यम् । नेत्रपटं हृत्वा अग्रगां गां प्रदर्शयतु इत्यन्वयः । प्रागेवाग्रे गां सन्निधाप्य तां बिम्बं चान्तरा नेत्रपटं विततं कृत्वा नेत्रोन्मीलनं कार्यम् । तस्मै इति । आचार्याय ॥ ७७ ॥

---

१. 'म्नः', २. 'म' ख. पाठः, 'दस्याप्या' क. ख. ग. घ. पाठः. ३. 'ग्रम्' ख. पाठः. ४. 'पटलं हृ' ङ. पाठः.

आवाह्य साङ्गीकरणादि कृत्वा दत्त्वोपहारान् स्नपनं करोतु ।
विघ्नार्यदुर्गाशरजेषु शेषेष्वावाहनाद्यं स्नपने कृते तु ॥ ७८ ॥

विमर्शिनी

विघ्नार्यदुर्गाशरजेषु मूलेनावाह्य साङ्गीकरणादि कृत्वा उपहारान् क्रमाद् दत्त्वा स्नपनं बिम्बशुद्धिस्नपनं करोतु । शेषेषु स्नपने कृते त्वावाहनाद्यं करोतु ॥ ७८ ॥

विवरणम्

विघ्नादिषु स्नानवेलायां बिम्बशुद्धिरित्याह —आवाह्येति । हरिहरादिषु क्षालनमेतदित्याह — शेषेष्विति ॥ ७८ ॥

लक्ष्मीशे स्वविहितसप्तमृत्तिकाभि-
मूर्धानं दिव इति मन्त्रतो विलिप्य ।
तन्मृत्सासुभृतघटाम्भसा समुद्र-
ज्येष्ठा इत्यणुपरिजापकोऽभिषिञ्चेत् ॥ ७९ ॥

विमर्शिनी

अथ बिम्बशुद्धिस्नपनकलशोपहारदानादिकं पृथक् पृथगेवाह — लक्ष्मीश इत्यादिभिः । लक्ष्मीशे स्वविहितसप्तमृत्तिकाभिः स्वकलशपूरण उक्ताभिः सप्तमृत्तिकाभिर्वल्मीकमृद्भिः 'मूर्धानं दिवः' इति मन्त्रतो विलिप्य तन्मृत्सासुभृतघटाम्भसा तन्मृद्भिः पूर्णेन ब्रह्मकलशेन 'समुद्रज्येष्ठा' इत्यणुपरिजापको गुरुरभिषिञ्चेत् ॥ ७९ ॥

विवरणम्

अथ पृथगेव तत्तद्बिम्बशुद्धिरभिधीयते — स्वविहितसप्तमृत्तिकाभिरिति । सप्तवल्मीकमृद्भिरित्यर्थः । तन्मृत्सासुभृतघटाम्भसेति । 'वल्मीकसप्तकमृदः कलशेऽथ मध्ये' इत्यमुनेत्यर्थः ॥ ७९ ॥

प्रागादिदिग्दलस्थैर्यज्ञा यज्ञा पयः पृथिव्यां च ।
याः फलिनीर्या दिव्या इत्यभिषिच्याक्षिणी विलिखेत् ॥ ८० ॥

---

१. अस्य स्थाने
'विस्पष्टतायै पृथगेव वच्मि विष्ण्वादिबिम्बस्नपनं समासात् ।
मूलाणुसाङ्गीकरणोपहारादत्युत्तरं वैतादिह प्रयोज्यम् ॥' इति ख. पाठः.

२. 'त्स्ना' क. पाठः. ३. 'सव' ङ. पाठः.

विमर्शिनी

प्रागादिदिग्दलस्थैः कलशैः 'यज्ञा यज्ञा वः', 'पयः पृथिव्यां', 'याः फलिनीः', 'या दिव्याः' इति चतुर्भिरभिषिच्याक्षिणी विलिखेत् । तदा नेत्रोल्लेखनमित्यर्थः ॥ ८० ॥

हंसः शुचिषद्विष्णोरराटमिति चानलादिदलकलशैः ।
सोमं राजानमृचा सविश्वतश्चक्षुषापि च स्नपयेत् ॥ ८१ ॥

विमर्शिनी

'हंसः शुचिषद्', 'विष्णोरराटं', 'सोमं राजानं', सविश्वतश्चक्षुषा 'विश्वतश्चक्षुः' इत्यनया चर्चा अनलादिदलकलशैः अग्न्यादिकोणदलकलशैश्च स्नपयेत् ॥ ८१ ॥

उद्वर्त्य द्रुपदादिनागलतलान्मासूरपिष्टैस्तनौ
मानस्तोकऋचा च मूर्ध्नि मुरमांसीक्षीरपिष्टामलैः ।
आलिप्याथ बहिष्ठगन्धसलिलैर्विष्णोरराटाणुना
संसिञ्चेदिदमाप इत्युपघटैर्दिक्कोणसंस्थैः सह ॥ ८२ ॥

विमर्शिनी

द्रुपदादिना 'द्रुपदादिवेन्मुमुचानः' इत्यादिना मासूरपिष्टैः आगलतलादाकण्ठपर्यन्तं तनौ देहे उद्वर्त्य मूर्ध्नि मुरमांसीक्षीरपिष्टामलैः मुरमांसीभ्यां क्षीरेण च सह पिष्टैरामलकैः 'मा नस्तोके तनये' इत्यृचा चालिप्याथ बहिष्ठगन्धसलिलैर्दिक्कोणसंस्थैः विष्णोरराटाणुना, तत्र तत्र दिक्कोणसंस्थैरुपघटैः 'इ(मा ? द)मापः' इति मनुना च सह संसिञ्चेत् ॥ ८२ ॥

विवरणम्

उद्वर्त्येति । गळात्प्रभृति बिम्बशरीरे मासूरपिष्टैर्द्रुपदादिवेत्युद्वर्तयेत् । पुनः क्षीरेण मुरमांसीभ्यां सह पिष्टं यदामलकं तेन शिरसि 'मा नस्तोके' इत्यालेपयेदित्यर्थः ॥ ८२ ॥

बिम्बकलशाभिषेकं कृत्वेत्येह्येहिपूर्वमन्त्रेण ।
आवाह्य विष्णुमेनं मूलाङ्गन्यासमाचरेन्मन्त्री ॥ ८३ ॥

विमर्शिनी

इति बिम्बकलशाभिषेकं कृत्वा 'एह्येहि' इति पूर्वमन्त्रेण मन्त्री आवाहने मन्त्रविशेषयोजनं कुर्वन् एनं विष्णुमावाह्य मूलाङ्गन्यासं मूलाङ्गन्यासव्यापकाङ्ग-न्यासादिकमाचरेत् ॥ ८३ ॥

विवरणम्

मन्त्रीति । 'एह्येहि' इत्यादिमन्त्रान्ते मूलमुक्त्वा नारायणमावाहयामी-त्येवमावाहनमुक्तम् ॥ ८३ ॥

एह्येहि भगवन्! विष्णो! लोकानुग्रहकारक! ।
यज्ञभागं गृहाणेमं वासुदेव! नमोऽस्तु ते[1] ॥
इति ॥ ८४ ॥

विमर्शिनी

आवाहनमन्त्रं पठति — एह्येहीति ॥ ८४ ॥

अर्घ्यं रातु हिरण्मयादिमनुना तस्मै सपाद्योदकं
गायत्र्याचमनीयकं समधुपर्कं च स्वया मन्त्रवित् ।
मन्त्रेणाथ बृहस्पते अतियदित्याद्येन पीताम्बरं
वेदाहंमनुनोत्तरीयमुपवीतं हैममोङ्कारतः ॥ ८५ ॥

विमर्शिनी

तस्मै विष्णवे हिरण्मयादिमनुनार्घ्यं सपाद्योदकं रातु दद्यात् । मन्त्र-विदिति तत्तदुपहारदाने 'अर्घ्यम्' इत्यादिमन्त्रयोगः सूचितः । स्वगायत्र्याचमनीयं समधुपर्कं च, 'बृहस्पते अति यत्' इत्याद्येन मन्त्रेण पीताम्बरं पीतवस्त्रं च, 'वेदाहं' मनुनोत्तरीयम्, ओङ्कारतः प्रणवेन हैममुपवीतं च ॥ ८५ ॥

विवरणम्

रात्विति । 'रा दाने' दद्यादित्यर्थः । सपाद्योदकमिति । तेनैव मन्त्रेण पाद्यमिति भावः । तदुक्तम् — 'पाद्यं तेनैव दापयेत्' इति । स्वया गायत्र्येति योज्यम् । समधुपर्कं चेति । तेनैव मन्त्रेणेति भावः । अत्रार्घ्याद्युपहारास्तत्तद्[2]-द्रव्यभाजः फडन्तप्रणवप्रोक्षणशोषणादिसंस्कृताः स्युः । पीताम्बरादिष्वपि यथार्हं समानमेतत् । मन्त्रविदिति । तत्तन्मन्त्रान्ते तत्तदुक्त्वा समर्पयामीत्येवं मन्त्रप्र-योग उक्तः । पीताम्बरमिति । रात्वित्यनुवर्तते । वस्त्रादिषु परिधापनादि कार्यम् । तदुक्तम् — 'वासस्तु परिधापयेत्' इत्यादि ॥ ८५ ॥

---

१. 'ते ॥ अ' ख. पाठः २. 'स्तद्द्रव्य' घ. पाठः.

गन्धं च पुष्पं च पवित्रकं च
दद्यादिदं विष्णुऋचा क्रमेण ।
विश्वाणुनार्चिर्मयमादधीत
व्यापय्य तं सर्गविसर्गरीत्या ॥ ८६ ॥

विमर्शिनी

'इदं विष्णुः' इत्यृचा गन्धं च पुष्पं च हैमं पवित्रकं च क्रमेण दद्यात् । विश्वाणुना 'विश्वतश्चक्षुः' इत्यृचा तं सर्गविसर्गरीत्या सृष्टिसंहारक्रमेण व्यापय्य अर्चिर्मयं तेजोमयमादधीत ॥ ८६ ॥

विवरणम्

विश्वाणुनेति । तं सर्गसंहारप्रकारेण 'विश्वतश्चक्षुः'इति व्यापय्य तेजोमयं सकलनिष्कलात्मकं विभावयेदित्यर्थः ॥ ८६ ॥

पुष्पैरोषधयः समित्यवकिरेत् सन्धूपयेद् धूरसी-
त्येतेनोपहरेत् प्रदीपकमथो तेजोसिमन्त्रेण च ।
नेत्रे चाञ्जनरञ्जिते वितनुयाद् भूयः समिद्धोणुना
येनाकस्यमनुं जपन् वितनुयाद् गोरोचनाचित्रकम् ॥ ८७ ॥

विमर्शिनी

'ओषधयः संवदन्ते' इति पुष्पैरवकिरेत् । 'धूरसि' इत्यनेन सन्धूपयेत् । अथो 'तेजोऽसि'मन्त्रेण प्रदीपकमुपहरेत् । अथो इत्यनेनान्तरान्तरा जलदानं सूचितम् । भूयः समिद्धोणुना "समिद्धो अञ्जन्" इति मन्त्रेण नेत्रे द्वे अञ्जनरञ्जिते वितनुयात् । 'ये नाकस्य' मनुं जपन् गोरोचनाचित्रकं गोरोचनया तिलकं वितनुयात् ॥ ८७ ॥

विवरणम्

समिद्धोणुनेति । 'समिद्धो अञ्जन्' इत्यनेन ॥ ८७ ॥

वनस्पतेः पुष्प इति प्रजापी
माल्यं च मालां च समर्प्य तस्मै ।
दत्त्वोपहारान् पुनरर्घ्यधारां
मूलेन दत्त्वा विकिरेत् प्रसूनैः ॥ ८८ ॥

विमर्शिनी

'वनस्पतेः पुष्प' इति प्रजापी माल्यं पुष्पं मालां च तस्मै समर्प्य पुनरुपहारान् अर्घ्यपाद्याचमनीयानि दत्त्वा अर्घ्यधारां मूलेन दत्त्वा प्रसूनैर्विकिरेत् ॥ ८८ ॥

विवरणम्

दत्त्वोपहारानिति जलगन्धादिभिः सपर्योक्ता ॥ ८८ ॥

**रथन्तरेण वैराजगायत्राभ्यां च सामभिः ।**
**स्वयोनिजैः पुरः स्थित्वा स्तुवन् सम्प्रीणयेद्धरिम् ॥ ८९ ॥**

विमर्शिनी

रथन्तरेण, वैराजगायत्राभ्यां च, स्वयोनिजैः रथन्तरस्य 'अभि त्वा शूर' इत्याद्येन वैराजस्य 'पिबा सोममिन्द्र' इत्याद्येन, गायत्रस्य 'अग्न आयूंषि' इत्याद्येन सामभिः स्तुवन् हरिं सम्प्रीणयेत् ॥ ८९ ॥

विवरणम्

स्वयोनिजैरिति । 'अभि त्वा शूर' 'पिबा सोममिन्द्र' 'अग्न आयूंषि' इत्येताः स्वयोनयस्तद्वृत्तिभिरित्यर्थः ॥ ८९ ॥

**शुद्धे तैजसपात्रके सुविमलैरापूरिते तण्डुलै-**
**र्मध्ये सान्द्रघृतं शरावमुपधायाभ्युज्ज्वलद्दीपकम् ।**
**स्वोद्यद्गोमयकल्प्तचित्रितदिगीशास्त्रैः सदूर्वाग्रकै-**
**र्दिक्ष्वश्वत्थदलैर्विभूष्य रचयेन्नीराजनीयं शुभम् ॥ ९० ॥**

विमर्शिनी

नीराजनीयसम्पादनमाह—शुद्धे इति । शुद्धे सुविमलैस्तण्डुलैरापूरिते तैजसपात्रके लोहमयपात्रे मध्ये तन्मध्ये सान्द्रघृतं पूर्णघृतम् अभ्युज्ज्वलद्दीपकम् अभितः परितः उज्ज्वलद्भिर्दीपैः उज्ज्वलद्वर्तिभिर्युतं शरावमुपधाय तस्य दिक्षु स्वोद्यद्गोमयकल्प्तचित्रितदिगीशास्त्रैः स्वस्मिन्नुद्यतानि गोमयेन कल्प्तानि श्वेतरक्तादिरजोभिश्चित्रितानि दिगीशास्त्राणि वज्रादीनि येषु तैः सदूर्वाग्रकैः दूर्वाग्रयुक्तैरश्वत्थदलैर्विभूष्य शुभं नीराजनीयं रचयेत् । तथा विष्णुसंहितायां—

"शुभे तु तैजसे पात्रे शालितण्डुलपूरिते ।
अस्त्रैरश्वत्थपत्रस्थैर्नवगोमयकल्पितैः ॥

वर्णोज्ज्वलैर्यथाशोभं वर्धमानाज्यवर्त्तिभिः ।
उज्ज्वलाभिर्युतं मध्ये कुर्यान्नीराजनं त्विदम् ॥"

इति ॥ ९० ॥

विवरणम्

नीराजनीयमाह — शुद्ध इति । मार्जनादिशुद्धिरियम् । यद्वा अस्त्रक्षालनादिशुद्ध्यभिप्रायम् । तैजसपात्रक इति । ताम्रकांस्यादिमये । सुविमलैरापूरित इति । हृदयेनेति ज्ञेयम् । शरावमस्त्रधौतं हृदैव निधाय अष्टदिक्षु चतुर्दिक्षु अग्रदिश्येव वा वर्त्तीर्हृदैव[1] विन्यस्य सान्द्रेण घृतेन शिरसापूर्यास्त्रेण ता वर्त्तीः प्रज्वालयेत् । स्वोद्यदित्याद्यश्वत्थदलविशेषणम् । तेषामुदरभागे गोमयेन वज्रशक्त्याद्यायुधानि विरचय्य तेषु रजनीरजो विकिरेत् । तदुपरि प्रतिपत्रं दूर्वाग्राण्यपि बहिरग्राणि विन्यसेत् । सर्वमेतदस्त्रेण कार्यम् । दूर्वाक्षतमपि पृथक् सम्पाद्यम् ॥ ९० ॥

**दूर्वाक्षतं मूर्धनि पादयोश्च**
**तारेण कृत्वास्त्रसमर्चितेन ।**
**नीराजयेत् तेन निजास्त्रजापी**
**कुर्वीत पुण्याहमिति त्रिधाम्नि ॥ ९१ ॥**

विमर्शिनी

नीराजनीयविनियोजनादिकमाह— दूर्वाक्षतमिति । तारेण दूर्वाक्षतं मूर्धनि पादयोश्च कृत्वा अस्त्रसमर्चितेन तेन नीराजनीयेन निजास्त्रजापी नीराजयेत् । 'ओं विष्णुः प्रीयताम्' इत्यादिविशेषयुक्तं पुण्याहं च कुर्वीत । इति त्रिधाम्नि बिम्बविशुद्धिविधिः स्यात् ॥ ९१ ॥

विवरणम्

अस्त्रसमर्चितेनेति फडन्तप्रणवप्रोक्षणशोषणाद्यस्त्रपूजनवज्रादिषु तत्तन्मनु[3]पूजनास्त्रजपाभिप्रायम् । तेनेति उक्तनीराजनीयेनेत्यर्थः । तिस्रस्त्रिवारं पञ्चवारं वा नीराजयेत् । दूर्वाक्षतं मूर्धनि पादयोश्च तारेण कृत्वेत्येतत् पुनरपि कार्यम् । 'मङ्गलानि च दर्शयेत्' इति चाहुः । इति त्रिधाम्नीति प्रकरणोपसंहारः । बिम्बशुद्धिरिति च शेषः ॥ ९१ ॥

---

१. 'र्त्तिं हृ', २. 'सं' घ पाठः. ३. 'तन्मनु' घ. पाठः.

शार्ङ्गीश्वरे वृषविषाणनदीद्वितीर-
मृद्भिर्विलिप्य शिरसि प्रणवेन सिञ्चेत् ।
तद्वत् तनौ समुपलिप्य मृदा सनाकु-
क्षेत्रोत्थयाच्छसलिलैरपि तेन सिञ्चेत् ॥ ९२ ॥

विमर्शिनी

शार्ङ्गीश्वरे शिरसि प्रणवेन वृषविषाणनदीद्वितीरमृद्भिः वृषशृङ्गाद् नदीतीरद्वयाद् गृहीताभिर्मृद्भिर्विलिप्याच्छसलिलैः शुद्धजलैः सिञ्चेत् । तनौ तद्वत् सनाकुक्षेत्रोत्थया (मृदा) वल्मीकात् क्षेत्राच्च गृहीताभ्यां मृद्भ्यां तेन प्रणवेन समुपलिप्याच्छसलिलैः सिञ्चेत् ॥ ९२ ॥

विवरणम्

प्रणवेन सिञ्चेदिति । अच्छसलिलैरभिषिञ्चेदित्यर्थः । नाकुर्वल्मीकम् ॥ ९२ ॥

एवं साधु विशोध्य तं स्नपितयेन्मृत्पूर्णकुम्भाम्भसा
मानस्तोकऋचा कषायपयसावोचाममन्त्रेण च ।
आज्यान्तैर्ध्रुवतः फलाद्भिरथ मूलेनान्तराब्लिङ्गकैः
सिञ्चेदच्छजलैस्ततो वितनुयान्नेत्रत्रयोन्मीलनम् ॥ ९३ ॥

विमर्शिनी

एवं साधु विशोध्य मृत्पूर्णकुम्भाम्भसा मध्यकलशेन मा नस्तोक ऋचा तं शार्ङ्गीश्वरं स्नपितयेत् स्नपितं कुर्यात् । कषायपयसा पूर्वदलस्थकलशेन 'अवोचाम नमः'[1] इति मन्त्रेण च, आज्यान्तैः दक्षिणपश्चिमोत्तराग्नेयनिर्ऋतिदलस्थैः गोमूत्रगोमयक्षीरदध्याज्यपूर्णकलशैः ध्रुवतश्च, अथ मूलेन वायव्यदलस्थफलाद्भिश्च, अन्तरा मध्ये मध्ये अच्छजलैः अब्लिङ्गकैः आपो हि ष्ठादिभिः सिञ्चेत् । ततो नेत्रत्रयोन्मीलनं वितनुयात् ॥ ९३ ॥

विवरणम्

मृत्पूर्णकुम्भाम्भसेति । 'मृत्क्वाथकं[2] हरिहरे' इत्यादि ह्युक्तम् । आज्यान्तैर्ध्रुवत इति । 'पृथगास्थितानि गव्यानि पञ्च' इत्युक्तैरिति भावः । फलाद्भिरथ मूलेनेति वाक्यम् । अन्तरेति प्रतिद्रव्यमन्तरा स्नानमुक्तम् ॥ ९३ ॥

---

१. 'चमानम इ' क. पाठः. २. 'का' घ. पाठः.

नमः शम्भव इत्याद्यमिषे त्वाद्यं च सिञ्चतु ।
नमो वः किरिकेत्युक्त्वा सर्वौषधिजलेन तम् ॥ ९४ ॥

विमर्शिनी

ततः ईशदलस्थितेन सर्वौषधिजलेन तं देवं 'नमः शम्भवे' इत्याद्यम् 'इषे त्वाद्यं' 'नमो वः किरिकेभ्यः' इत्याद्यं चोक्त्वा सिञ्चतु ॥ ९४ ॥

विवरणम्

नमश्शम्भव इत्याद्यमिति सर्वौषधिकलशे मन्त्रत्रयमुक्तम् ॥ ९४ ॥

तत् त्वा यामीत्याद्ययर्चा समुद्रं
गच्छेत्यापोहीत्यणुभ्यां च मन्त्री ।
गायत्र्या च स्नापयेद् दिक्स्थखण्डै-
र्गायत्र्या चोंरुद्धया कोणखण्डैः ॥ ९५ ॥

विमर्शिनी

पुनः दिक्स्थखण्डैः दिक्खण्डस्थकलशैः 'तत् त्वा यामि' इत्याद्ययर्चा, 'समुद्रं गच्छ' इति, 'आपो हि' इत्यणुभ्यां गायत्र्या च स्नापयेत् । ओंरुद्धया तारपुटितया गायत्र्या कोणखण्डैः कोणखण्डस्थकलशैश्च । मन्त्रीति मन्त्राणामादि-रेवात्रोच्यते, मन्त्रं समस्तं विद्वानित्यर्थः ॥ ९५ ॥

विवरणम्

अणुभ्यामिति खण्डद्वयापेक्षं द्विवचनम् ॥ ९५ ॥

तारेणावाह्याहिताज्ञाय तस्मै
सोमारुद्रा वीति दत्त्वार्घ्यपाद्ये ।
गन्धं पुष्पं चापि तद्वत् पवित्रं
वस्त्रं सन्दद्यात् युवंवस्त्रजापी ॥ ९६ ॥

विमर्शिनी

तारेणावाह्याहिताज्ञाय तारेणैव कृताज्ञाय तस्मै 'सोमारुद्रा विवृहतं' मन्त्रेणार्घ्यपाद्ये द्वे गन्धं पुष्पं चापि तद्वत् पवित्रं दत्त्वा युवं वस्त्रजापी वस्त्रं सन्दद्यात् ॥ ९६ ॥

---

२. 'संस्थैः' ॥ ख. पाठः.

विवरणम्

तद्वदिति। पवित्रपर्यन्तेषु स एव मनुरित्यर्थः ॥ ९६ ॥

दत्त्वोत्तरीयं च बृहस्पते अती-
त्यृचाथ वेदाहमृचोपवीतकम् ।
स्वमूलतोऽलङ्करणानि धूरसी-
त्यनेन धूपं च तथा समर्पयेत् ॥ ९७ ॥

विमर्शिनी

अथ 'बृहस्पते अति' इत्यृचा उत्तरीयं दत्त्वा 'वेदाहम्' ऋचोपवीतं समर्पयेत्। स्वमूलतोऽलङ्करणानि, तथा 'धूरसि' इत्यनेन धूपं च ॥ ९७ ॥

उद्दीप्यस्वेत्युपहरतु तस्मै प्रदीपं समिद्धो
अञ्जन्नित्यञ्जनमपि च गोरोचनां तारकेण ।
सोमारुद्रा युवमिति जपन् दर्पणं दर्शयित्वा-
ग्नाविष्णू इत्यपि मनुवरेण स्तुतिं चादधीत ॥ ९८ ॥

विमर्शिनी

पुनस्तस्मा 'उद्दीप्यस्व' इति प्रदीपमुपहरतु। 'समिद्धो अञ्जन्' इत्यञ्जनमपि च। तारकेण गोरोचनां च । 'सोमारुद्रा युवम्' इति जपन् दर्पणं दर्शयित्वा 'अग्नाविष्णू' इत्यपि मनुवरेण स्तुतिं चादधीत॥ ९८ ॥

विवरणम्

अग्नाविष्णू इति। 'अग्नाविष्णू सजोषसा वर्धन्तु गिरो या मम इन्द्रस्य पत्नीः पञ्चाग्रे सरस्वती' इति ॥ ९८ ॥

युवमेतानीति प्रार्थ्यौषधय इति विकीर्य पुष्पमपि पुण्याहम् ।
कृत्वा दद्यात् पादुकसचामरच्छत्रयानमपि तारेण ॥ ९९ ॥

विमर्शिनी

पुनः 'युवमेतानि' इति प्रार्थ्य 'ओषधय' इति पुष्पं विकीर्य 'ओं शिवनारायणः प्रीयताम् ' इति विशेषयुक्तं पुण्याहमपि कृत्वा पादुकसचामरच्छत्रयानमपि पादुकं चामरं छत्रं स्ववाहनमपि तारेण दद्यात् ॥ ९९ ॥

विवरणम्

प्रार्थ्येत्युपस्थानम् ॥ ९९ ॥

पूजाक्रमेण पुरुषादिचतुष्टयाङ्ग-
केशानसूक्तमनुभिः स्नपयेन्महेशे।
दिक्कोणमध्यगतखण्डघटैस्तु बिम्ब-
शुद्धौ तदीयपरिकुम्भगणैः समेतम्॥ १००॥

विमर्शिनी

महेशे तु बिम्बशुद्धौ दिक्कोणमध्यगतखण्डघटैः दिक्खण्डेषु कोणखण्डेषु[1] मध्यखण्डे च ब्रह्मकलशैः तदीयपरिकुम्भगणैः समेतं यथा भवति तथा पूजाक्रमेण स्वस्वदिक्प्राप्तैः पुरुषादिचतुष्टयाङ्गकेशानसूक्तमनुभिः तत्पुरुषादिचतुष्टयेन पञ्चब्रह्माङ्गैः ईशानेन च मनुभिः तं स्नपयेत्॥ १००॥

विवरणम्

पूजाक्रमेणेति। पुरुषाघोरसद्यवामैर्दिक्षु हृच्छिखाकवचशिरोभिर्विदि-[2]क्ष्वित्यर्थः॥ १००॥

ध्यात्वा देवमघोरतो दिशतु गन्धं वामतश्चाम्बरं
पुष्पं चापि शिवेन तत्पुरुषतो धूपं सदीपार्घ्यकम्।
आनम्याथ सुगन्धचर्चितकरो भागान् दिशास्वेकशो
वृत्तान्तान् विधिविष्णुरुद्रजिनवर्णैरालभेत क्रमात्॥ १०१॥

विमर्शिनी

अथ देवं यथोक्तं ध्यात्वा आवाह्य सकलीकृत्य पाद्यमाचमनं च दत्त्वा अघोरतो गन्धं दिशतु। वामतोऽम्बरं च। शिवेन ईशानेन पुष्पाणि च। तत्पुरुषतो धूपं सदीपार्घ्यकं दीपमर्घ्यं च। अथानम्य नमस्कृत्य सुगन्धचर्चितकरो भूत्वा वृत्तान्तान् भागान् चतुरश्राष्टाश्रवृत्तभागानेकशः प्रत्येकं दिशासु विधिविष्णुरुद्रजिनवर्णैः ब्रह्मविष्णुरुद्रगायत्रीभिः क्रमाद् आलभेत संस्पृशेत्॥ १०१॥

विवरणम्

ध्यात्वा देवमिति। 'शेषेष्वावाहनाद्यं स्नपने कृते तु' इत्येतदभिप्रायमेतत्। पाद्यादिभूषणान्तमुपचारैरतः समर्प्याघोरतो गन्धमित्यादि सर्वं कार्यम्। तदुक्तं—

"सकलीकृत्य देवेशं पीठं सद्येन कल्पयेत्।
ततोऽपि लेपयेद्गन्धैर्मन्त्रेण बहुरूपिणा॥"

---

१. 'ण्डेषु च' ङ. पाठः. २. 'भिश्च वि' घ. पाठः.

इत्यादि । शिवेनेति । ईशानेन । आनम्येति तदुचितमन्त्रप्रणामस्तुत्याद्यभिप्रायम् । वृत्तान्तान् भागानिति । चतुरश्राष्टाश्रवृत्तक्रमेण त्रिभागं हि लिङ्गं भवति । एकश इति । एकैकशो दिशास्वालभेत । सुगन्धाक्तकरतलस्तेन ब्रह्मगायत्र्या चतुरश्रभागमग्रादिदिक्ष्वालभ्य करतलं क्षालयेत् । एवमितरद्भागद्वयमपीति ॥ १०१ ॥

"तत्पुरुषाय विद्महे पितामहाय धीमहे ।
तन्नो ब्रह्मा प्रचोदयात् ॥
तत्पुरुषाय विद्महे जनार्दनाय धीमहे ।
तन्नो विष्णुः प्रचोदयात् ॥
तत्पुरुषाय विद्महे महादेवाय धीमहे ।
तन्नो रुद्रः प्रचोदयात् ॥"
तद्गायत्र्य इति प्रोक्ताः सितमाल्यादिभिस्ततः ।
प्रार्च्य नीराज्य पुण्याहमाचरेन्मूर्त्तिपैः सह ॥ १०२ ॥

विमर्शिनी

तद्गायत्रीराह— तत्पुरुषायेति ॥

इति तद्गायत्र्यः प्रोक्ताः । ततः सितमाल्यादिभिः श्वेतपुष्पगन्धादिभिः प्रार्च्य नीराज्य मूर्तिपैः सह पुण्याहमाचरेत् ॥ १०२ ॥

विवरणम्

सितमाल्यादिभिस्ततः प्रार्च्येति । यदुक्तं—

"ततः शुक्लानि पुष्पाणि दत्त्वा लिङ्गस्य मूर्धनि ।
नीराजनविधिं कुर्याद् यच्चान्यदपि मङ्गलम् ॥"

इति । यद्वा 'सितमाल्यादिभिर्बुधः' इति[3] पाठः । बुधशब्देन 'शेषेष्वावाहनाद्यम्' इत्येतदिदानीमेव कार्यम् । 'ध्यात्वा देवम्' इत्येतत्तु गन्धालेपनाद्युचिततया तद्रूपध्यानमात्रमिति सूचितम् । यदप्युक्तं— स्वस्वगायत्र्या स्पृशेत् ।

"आवाह्य सकलीकृत्य देवदेवमुमापतिम् ।
पाद्याद्यैः परिपूज्यास्मिन् पुण्याहं च समाचरेत् ॥"

इति । सितमाल्यादिभिरिति पाद्याद्यनन्तरं जलगन्धादिषु मध्ये पुष्पे विशेषः

---

१. 'नः।', २. 'णेति त्रि' घ. पाठः. ३. 'ति वा पा', ४. गन्धादि' क. ख. पाठः.

प्रतिपादितः। जलगन्धाद्यर्घ्यान्तानामादिपदेन ग्रहणम्। बुधग्रहणेनैतदपि साधितमिति। नीराज्येति। तत्प्रक्रिया च प्रागुक्ता। पुरआदिपञ्चदिक्ष्वपि वा नीराजनं बुधशब्देन सूचितम्। तदुक्तं—नीराज्याक्रमेण दिक्क्रमाद् इति॥ १०२॥

मूलेनावाह्य तस्मै सकलितमहसे *स्थाणवे सम्प्रदद्यात्
पाद्याद्यं भूषणान्तं नवकमथ समर्प्योर्मिकाकर्णभूषाः।
इष्ट्वा गन्धादिभिः पादुकमपि सहयानातपत्रं प्रदद्यात्
सादर्शं चाथ पुण्याहमपि चरतु नीराजनं चेति वेज्या॥ १०३॥

विमर्शिनी

पक्षान्तरमाह—मूलेनेति। मूलेनावाह्य सकलितमहसे सकलीकृततेजसे तस्मै स्थाणवे शिवाय पाद्याद्यं भूषणान्तं नवकं पाद्यार्घ्याचमनीयमधुपर्कपुनराचमनीयस्नानवस्त्रोपवीतभूषणानि सम्प्रदद्यात्। अथ ऊर्मिकाकर्णभूषाः अङ्गुलीयं कुण्डले च समर्प्य गन्धादिभिरिष्ट्वा पादुकमपि सहयानातपत्रं वाहनं छत्रं च सादर्शं दर्पणं च दद्यात्। अथ पुण्याहं नीराजनं चापि चरतु। इति वा इज्या पूजा स्यात्॥ १०३॥

विवरणम्

शिव एव मतान्तरमाह—मूलेनावाह्येति। ब्रह्मादिगायत्रीभिर्भोगत्रयस्पर्शनान्ते कृत एतत् सर्वं कार्यम्। कल्पवित् सम्प्रदद्यादिति च कल्पविद्ग्रहणमेतदर्थम्। यद्वा—सितमाल्यादिभिरित्यत्रापि समानमावहनादि सर्वमिति। अथवोपचारेण तत्तद्द्रव्यशालिनां फडन्तप्रणवप्रोक्षणादिसंस्कृतानां पाद्यादीनां प्रदानार्थमेतदुक्तम्। ऊर्मिका अङ्गुलीयकम्। कर्णभूषे च द्वे भवतः। इष्ट्वा गन्धादिभिरित्यर्घ्यदानान्तमुक्तम्। इति वेज्येति। मूलेनावाहनादि सर्वं समानम्। पाद्यादिपूजायामेव विकल्पोऽयमिति भावः॥ १०३॥

दुर्गार्याद्यणुभिः क्रमात् स्नपितयेद् गव्यैर्मृदालिप्य मृ-
द्वारा वारुणपञ्चकेन महिषारौ पावमानाणुना।
काथोदैरथ शालितण्डुलभुवा चूर्णेन लिप्त्वा समा-
सिञ्चेदञ्चितरत्नगन्धकलशाभ्यां पञ्चदुर्गाणुभिः॥ १०४॥

---

१. 'न्तप्रो' क. ख. पाठः. २. 'वा' घ. पाठः.

---

* 'स्थाणवे' इत्यस्य स्थाने कल्पविदिति विवरणरीत्या पाठः.

विमर्शिनी

महेश्वरौ मन्त्रोद्धारे वक्ष्यमाणैः दुर्गार्याद्यणुभिः पृथक् स्थितैः पञ्चभिर्गव्यैः क्रमात् स्नपितयेत् । स्वकलशोक्तया मृदा आलिप्य मृद्वारा मृज्जलपूर्णकलशेन वारुणपञ्चकेन 'अव ते हेलो वरुण' इत्यादिवक्ष्यमाणेन च । पुनः काथोदैः पावमानाणुना 'पावमानीः स्वस्त्ययनीः' इति मन्त्रेण च । अथ शालितण्डुलभुवा चूर्णेनोद्वर्त्य अश्चितरत्नगन्धकलशाभ्यां पूजिताभ्यां रत्नोदगन्धोदाभ्यां पञ्चदुर्गाणुभिश्च स्नपितयेत् ॥ १०४ ॥

विवरणम्

दुर्गार्याद्यणुभिरिति । मूलेनावाहनादि कृत्वा पाद्यादि दत्त्वा स्नानविधावेवं स्न[1]पयेत् । यदुक्तं—'आवाह्य साङ्गीकरणादि कृत्वा' इत्यादि । सें दुर्गायै[2] इत्यादिभिः । क्रमादिति पञ्चभिर्मन्त्रैः क्रमेण पञ्चभिर्गव्यैः स्नपनमुक्तम् । मृदालिप्येति । मृत्कलशोक्तमृद्भिरित्यर्थः । मृद्वारेति । मृत्कलशजलेन । 'तत्त्वा, इमं मे, अव ते हेळः, त्वं नो अग्ने, उदुत्तमम्' इति वारुणपञ्चकम् । पावमानाणुना काथोदैरिति । पावमानानुवाकेनेत्यर्थः ॥ १०४ ॥

पुण्याहं[3] प्रविधाय शेषसलिलैस्तैरेव सिक्त्वांशुके
रक्ते द्वे परिधाप्य तैर्दिशतु गन्धं पुष्पधूपावपि ।
दीपाकल्पवितानचामरयुगच्छत्राणि नीराज्य दि-
क्ष्वेनां सम्यगर्यपुरःप्रभृतिभिः स्वोक्तैः स्तुवीताणुभिः ॥ १०५ ॥

विमर्शिनी

पुनः पुण्याहं 'ओं दुर्गा प्रीयताम्' इति विशेषयुक्तं विधाय शेषसलिलैः तैरेव पञ्चदुर्गाणुभिः सिक्त्वा रक्ते द्वे अंशुके वस्त्रे परिधाप्य तैः पञ्च-

---

१ 'स्न', २. 'यै ओं आर्यायै इ' ब पाठः.

३. 'सिक्त्वा बिम्बघटैर्विधाय विबुधैः पुण्याहमेतज्जलैः
सिक्त्वा रक्तनवांशुके च परिधाप्याभ्यर्च्य दुर्गाणुभिः ।
दत्त्वाकल्पवितानचामरयुगच्छत्राणि दिक्षु क्रमा-
न्मन्त्रैः सम्यगर्यपुरःप्रभृतिभिर्नीराजयेत् पञ्चभिः ॥

सें' क. पाठः.

दुर्गाणुभिर्गन्धं पुष्पधूपावपि दीपाकल्पवितानचामरयुगच्छत्राणि दीपमलङ्कारं वितानं चामरयुगं छत्रं च दिशतु । पुनरेनां दुर्गाम्. अयंपुरःप्रभृतिभिः 'अयं पुरो हरिकेशः' इत्यादिभिर्मन्त्रैर्दिक्षु सम्यक् प्रत्येकं नीराज्य स्वोक्तैरणुभिः स्वागमोक्तमन्त्रैः स्तुवीत च ॥ १०५ ॥

विवरणम्

तैरेवेति[1] । तैरिति च पञ्चदुर्गाभिप्रायम् । नीराज्य दिक्ष्विति ।' अयं पुरो हरिकेशः' इत्यादिपञ्चमनुभिः क्रमेण प्रागाद्यूर्ध्वान्तं[2] पञ्च दिक्षु नीराजनमुक्तम् । स्वोक्तैः स्तुवीताणुभिरिति । तदुक्तम्—

"स्तुतिं च पश्चात् कुर्वीत साम्ना वाँथर्वणेन च ।
तां (हे ? मे)ति यजुषा चापि स्तुवीत पुरतः स्थितः ॥"

इति ॥ १०५ ॥

**सेनान्यां कलशैः स्वपूरणसमुक्तेन क्रमेणाञ्चितैः**
**सिञ्चेन्मन्त्रिवरः स्वमूलमनुना स्वास्त्राणुना वर्मणा ।**
**मूलेनापि हृदाग्निमील इति पूर्वर्चा त्विषेत्यादिना**
**शन्नोदेव्यणुनोपचारमनुना कौशादिगन्धान्तिमैः ॥ १०६ ॥**

विमर्शिनी

सेनान्यां तु मन्त्रिवरः मन्त्रक्रिययोरैक्यं विमृशन् गुरुः कौशादिगन्धान्तिमैरञ्चितैर्नवसु खण्डेषु स्थितैः सपरिकलशैः कलशैः क्रमात् स्वमूलमनुना स्वास्त्राणुना वर्मणा मूलेनापि हृदा 'अग्निमीळे' इति पूर्वर्चा 'इषे त्वा'-दिना 'शन्नो देव्य'णुना उपचारमनुना च नवभिर्मन्त्रैः स्वपूरणसमुक्तेन क्रमेण सिञ्चेत् ॥ १०६ ॥

विवरणम्

सेनान्यामिति । नवकलशैर्नवमन्त्रैः क्रमेणाभिषेकः । मन्त्रिवर इति । मूलेनावाहनादिपूर्वकं स्नपनमेतदित्युक्तम् । यदुक्तम्—आवाह्य साङ्गीकरणादि कृत्वा इत्यादि । यद्वा सर्वत्र प्रणवमूलयोराद्यन्तयोग उक्तः ॥ १०६ ॥

---

१. 'ति प' क. ख. पाठः. २. 'न्त', ३. 'द्या', ४. 'न्ततो यो घ. पाठः.

संस्नाप्य स्वजिनार्णतो बहुजलैर्दत्त्वांशुके द्वे युवं
वस्त्राणीत्युपवीतगन्धकुसुमस्रग्धूपदीपान् क्रमात् ।
दद्याच्चामरमातपत्रमुपचारेणाञ्जनं दर्पणं
तस्मै पादुकयुग्ममप्यथ चरेन्नीराज्य पुण्याहकम् ॥ १०७ ॥

विमर्शिनी

स्वजिनार्णतः स्वगायत्र्या बहुजलैः संस्नाप्य तस्मै स्कन्दाय 'युवं वस्त्राणि' इति मन्त्रेणांशुके द्वे दत्त्वा उपवीतगन्धकुसुमस्रग्धूपदीपान् चामरं चामरद्वयम् आतपत्रमञ्जनं दर्पणं पादुकयुग्ममपि क्रमादुपचारेण दद्यात् । अथ नीराज्य 'स्कन्दः प्रीयताम्' इति विशेषयुक्तं पुण्याहं चरेच्च ॥ १०७ ॥

विवरणम्

उपचारेणेति । उपवीतादिषु मन्त्रकथनम् ॥ १०७ ॥

स्वाष्टमूर्तिमनवः स्वकमूलं
चापि बिम्बकलशस्नपने स्युः ।
विघ्नराजि निजमूलकमार्ये
मध्यनिष्ठमुभयोः स्नपनं स्यात् ॥ १०८ ॥

विमर्शिनी

विघ्नराजि बिम्बकलशस्नपने स्वाष्टमूर्तिमनवः गणञ्जयाद्याः स्वकमूलं चापि स्युः । आर्ये नवस्वपि निजमूलं च । अत्र विघ्ने बहिः प्रदक्षिणक्रमेण आर्ये दिग्विदिक्क्रमेणेति विशेषः । उभयोरपि मध्यनिष्ठं ब्रह्मकलशान्तं स्नपनं स्यात् ॥ १०८ ॥

पञ्चोपहारान् प्रददातु विघ्ने
मूलेन ताञ्छास्तरि दर्पणं च ।
नीराज्य पुण्याहमपि प्रकुर्या-
दितीरितात्राखिलबिम्बशुद्धिः ॥ १०९ ॥

विमर्शिनी

विघ्ने पञ्चोपहारान् जलगन्धपुष्पधूपदीपान् मूलेन प्रददातु । शास्तरि तान् दर्पणं च । उभयोः नीराज्य पुण्याहमपि यथोक्तवत् कुर्यात् । अत्राखिलबिम्बशुद्धिरितीरिता ॥ १०९ ॥

---

१. 'न् दारुणं द' क. ख. पाठः.

विवरणम्

पञ्चोपहारानिति । मूलेनावाहनादि कृत्वा पाद्यादि दत्त्वा स्नपनं कार्यम् । पुनरङ्गवस्त्रादिभूषणान्ते दत्ते जलगन्धादिपञ्चोपहारदानं कार्यम् । पुनरर्घ्यमपि देयम् । मूलेनेति । अध उपरि च योज्यम् । तानिति । पञ्चोपहारान् । बिम्बशुद्धिप्रकरणमुपसंहरति — इतीरितेति ॥ १०९ ॥

दत्त्वार्घ्यमुत्तिष्ठमनुप्रजापी
प्रोत्थाप्य याने प्रविधाय बिम्बम् ।
प्रदक्षिणप्रक्रमतो नयेत
तन्मण्डपं शाकुनकादिजापी ॥ ११० ॥

विमर्शिनी

अथ सर्वेष्वप्यर्घ्यं दत्त्वा उत्तिष्ठमनुप्रजापी 'उत्तिष्ठ ब्रह्मणस्पते' इति जपन् बिम्बं प्रोत्थाप्य रथादियाने प्रविधाय शाकुनकादिजापी 'कनिक्रदत्' 'स्वस्त्या'दिकं जपन् प्रदक्षिणप्रक्रमतस्तद् बिम्बं मण्डपं नयेत ॥ ११० ॥

विवरणम्

दत्त्वार्घ्यमिति । स्वस्वोपचारेणेति ज्ञेयम् । यान इति । ब्रह्मयाने रथादौ वा । प्रदक्षिणेति । मण्डपस्येति शेषः ॥ ११० ॥

रथारोपे रथे तिष्ठन्नखिलेऽणुः प्रदक्षिणे ।
उदुत्यमिति शार्ङ्गीशे पौरुषं च जपेद्धरौ ॥ १११ ॥

विमर्शिनी

अखिले सर्वेषु देवेषु रथारोपे 'रथे तिष्ठन्' इत्यणुः[1] । शार्ङ्गीशे प्रदक्षिणे 'उदु त्यं जातवेदसम्' इति, हरौ पौरुषं पुरुषसूक्तं च जपेत् ॥ १११ ॥

विवरणम्

पौरुषं च जपेद्धराविति । चकारः प्रदक्षिण इत्येतदनुकर्षणार्थः । शिवादिषु शाकुनस्वस्तिसूक्तजपेनैव प्रदक्षिणं भवति । 'शाकुनकादिजापी' इति चोक्तम् ॥ १११ ॥

दत्त्वा द्वार्युपचारतोऽर्घ्यमखिलेषूदुत्यमित्युत्तर-
न्नाकृष्णेन युतं शिवे समवतार्यान्तर्नयेन्मन्त्रवित्[2] ।

---

१. 'णुं' ख. पाठः. २. 'कल्पवित्' इति विवरणरीत्या पाठः.

आसत्येनमनुं गुहे हरिहरे यस्मिन्नृचःपूर्वकं
मन्त्री मन्त्रमिनाक्षरं मुररिपौ शेषेषु मूलं निजम् ॥ ११२ ॥

विमर्शिनी

अखिलेषु द्वार्युपचारतोऽर्घ्यं दत्त्वा शिवे 'उदु त्यम्' 'आकृष्णेन' युतमुच्चरन् यानात् समवतार्यान्तर्नयेत् । गुहे 'आसत्येन'मनुं, हरिहरे यस्मिन्नृचःपूर्वकं 'यस्मिन् वृक्षे' इत्यादिकं, मुररिपौ इनाक्षरं द्वादशाक्षरं मन्त्रं, शेषेषु निजमूलं चोच्चरन् बिम्बमन्तर्नयेत् । मन्त्रविन्मन्त्रीति च पदाभ्यां तत्र शोभनान् मन्त्रान् यथावकाशमुच्चरेदिति सूचितम् ॥ ११२ ॥

विवरणम्

दत्त्वा द्वारीति । मण्डपद्वारे इत्यर्थः । उदु त्यमिति । शिवे तस्माद् यानाद् 'उदु त्यम्' 'आकृष्णेन' इति चोच्चरन्नवतार्यान्तर्नयेत् । कल्पविदिति । वेदिशय्ययोः प्रादक्षिण्येन नयनमुक्तम् । यस्मिन्नृचःपूर्वकमिति । 'यस्मिन् ऋचः साम' इत्याद्यृचो ग्रहणम् । मन्त्रीति ··· ··· । इनाक्षरं मुररिपाविति । द्वादशाक्षरम् ॥ ११२ ॥

वामाणुना त्रिणयनेऽथ नमो हिरण्य-
बाहादिना न्यसतु शार्ङ्गिशिवेऽधिशय्यम् ।
सत्रिष्टुभा महिषविद्विषि तारकेण
शेषेषु मूलत इनार्णत इन्दिरेशे ॥ ११३ ॥

विमर्शिनी

अथ त्रिणयने वामाणुना 'वामदेवेन' अधिशय्यं शय्यायां न्यसतु । शार्ङ्गिशिवे नमो हिरण्यबाहादिना, महिषविद्विषि सत्रिष्टुभा तारकेण, शेषेषु मूलतः, इन्दिरेशे विष्णौ इनार्णतो द्वादशाक्षरेण च न्यसतु ॥ ११३ ॥

विश्वत इति त्रिधाम्नि व्याप्यान्येषु स्वमूलतो बिम्बम् ।
शाययतु सकलयित्वा मन्त्रैः प्रासादसम्मुखमिहोक्तैः ॥ ११४ ॥

विमर्शिनी

त्रिधाम्नि 'विश्वतश्चक्षुः' इति, अन्येषु स्वस्वमूलतश्च व्याप्य सकलयित्वा इहोक्तैः शय्यारोपणोक्तमन्त्रैः प्रासादसम्मुखं शाययतु ॥ ११४ ॥

विवरणम्

विश्वत इति त्रिधाग्निं व्याप्येति । सकलयित्वा शाययत्वित्यन्वयः । मन्त्रैरिहोक्तैः प्रासादसम्मुखं शाययत्विति । वामदेवाद्युक्तमन्त्रैरेवेत्यर्थः । यदुक्तम् — 'गुह्येनेशं तु शाययेत्' इत्यादि । यद्वा इहेति शयनविषये तन्त्रान्तरोक्तैरिति । यदुक्तम् — 'विष्णौ शाययेच्चायं सो अग्निः सर्वयोगेश्वरोम्' इति । शिवे 'सकलीकृत्य वामेन अयं स इति शाययेत्' इति । हरिहरे 'नमो हिरण्यबाहवे' 'अयं स' इति । दौर्गे तारेण, स्कन्दे मूलेन, गणपतौ शास्तरि च बीजेनेति ॥ ११४ ॥

पीठे संस्थाप्योपचर्यार्घ्यनिष्ठैः
स्कन्दे बिम्बं शाययेच्चाधिशय्यम् ।
प्रासादे प्राग्द्वार्युदक्छीर्षकं च
प्रत्यग्द्वारे याम्यदिक्छीर्षकं च ॥ ११५ ॥

विमर्शिनी

स्कन्दे तु पीठे संस्थाप्य अर्घ्यनिष्ठैः अर्घ्यावसानैरुपचारैरुपचर्य अधिशय्यं शय्यायां प्रासादे प्राग्द्वारि सत्युदक्छीर्षकमुत्तरशिरस्कं, प्रासादे प्रत्यग्द्वारे याम्यदिक्शीर्षकं दक्षिणशिरस्कं च बिम्बं शाययेत् ॥ ११५ ॥

विवरणम्

स्कन्दे भेदमाह — पीठे संस्थाप्येति । भद्रपीठे पुरैव पूजितपीठे प्रासादाभिमुखतया स्थापनमुक्तम् । उपचर्यार्घ्यनिष्ठैरिति । उपचरणं पूजनं स्वोपचारेण चैतदिष्यते । अर्घ्यनिष्ठैरिति पाद्यार्घ्ययोर्ग्रहणम् । बहुवचनेनासनमपि गृह्यते । मूलेन व्यापय्य सकलीकरणमिहाप्युचितमेव । विष्णवादिषु शय्यायामेव न्यासेऽपि तदनन्तरं सकलीकरणानन्तरमेव पाद्यार्घ्योपचरणमप्युपचारेणोचितं भवति । शाययेच्चाधिशय्यमिति । शय्यायां मूलेन तच्छय्यौचित्येनोत्तरशिरस्कं दक्षिणशिरस्कं वा शाययेदित्यर्थः । यदुक्तम् —

"शय्यां दक्षिणसौम्यदिक्कृतसमायामाम्" इति ॥ ११५ ॥

इति तन्त्रसमुच्चयविवरणे चतुर्थः पटलः ॥

---

१. 'पि शुचि' क. ख. पाठः. २. 'वा', ३. 'चरताम' घ. पाठः.

इति तन्त्रसमुच्चये तुरीयः
पटलो मण्डपसंस्क्रियाक्रमाढ्यः ।
कथितः कलशेशवह्निशय्या-
विधिमान् बिम्बविशुद्धिविध्युपेतः ॥ ११६ ॥

विमर्शिनी

पटलमुपसंहरति—इतीति । (इति) तन्त्रसमुच्चये ग्रन्थे तुरीयः चतुर्थः पटलः कथितः । कथम्भूतः, मण्डपसंस्क्रियाक्रमाढ्यः मण्डपसंस्कारपरिपाट्या परिपूर्णः । कलशेशवह्निशय्याविधिमान् कुम्भेशपूजाग्निजननशय्यापूजादिभिश्च युक्तः । बिम्बविशुद्धिविध्युपेतः बिम्बशुद्धिकलशाभिषेकेण उपहारदानेन चोपेतः ॥ ११६॥

इति तन्त्रसमुच्चयविमर्शिन्यां
चतुर्थः पटलः ॥

---

शुभं भूयात् ।

## APPENDIX I.

# श्लोकानुक्रमणी ।

## APPENDIX II.

### स्मृतवाक्यानुक्रमणी ।

| पुटम् | स्मृतवाक्यानि | आकरः |
|---|---|---|
| २ | यज्वा तु विधिनेष्टवान् | अमरः(काण्डं २. ब्रह्म० श्लो० ८) |
| ,, | भक्त्यैव परया तुष्टो ... ...चतुर्भुजम् | विष्णुसंहिता (पटलः ४. श्लो० |
| ,, | ज्ञानसन्तोषनित्यत्व ... ...नुग्रहादिकृत् | ,, (प० ५. श्लो० ३१ [५०) |
| ४ | पञ्चीकृतमहाभूतपञ्चकं ... ...निर्दिष्टम् | ... |
| ,, | व्यष्ट्या चापि ... ...रसस्तु त्रिविधो मतः | ... |
| ,, | तत्राभिव्यक्तरूपाणाम् | ... |
| ,, | स पुनस्त्रिविधो रसः | ... |
| ,, | भूतानि पञ्च परमात्मनि | तन्त्रसमुच्चयः(प०५. श्लो०१५) |
| ,, | स्थूलात्मतोन्मेषविधायिका | ,, (प० १२. श्लो० १७४) |
| ,, | रसं ब्रह्माण्डसम्मितम् | ... |
| ५ | विशुद्धिसान्निध्यसमृद्धिकारकम् | तन्त्रसमुच्चयः (प०८. श्लो०१) |
| ११ | सकूर्चे गन्धपुष्पाढ्ये ... ...द्रव्यशोधनम् | ... |
| १३ | शक्त्या दत्त्वा च दक्षिणाम् | ... |
| १४ | सङ्ग्रहेण वरणक्रियाक्रमः | तन्त्रसमुच्चयः (प० १. श्लो० |
| ,, | इत्युक्त्वा दक्षिणे ........ वरयेत् ततः | ... १२) |
| ,, | दत्त्वा कूर्चान्यथैतेषां ... .. क्षालयेदुदयेन तु | ... |
| १५ | स्वहवनाद्यनुसृत्य | तन्त्रसमुच्चयः (प० १. श्लो० [२६) |
| १८ | षाण्मातुरे षट्सु | ,, (प० ५. श्लो० १०१) |
| ,, | चतुर्भिर्मूर्त्तिपैः सार्धमष्टद्वादशभिस्तु वा | ... |
| ,, | प्रार्थितस्त्वेवमाचार्यः ... ... कुर्यात् | ... |
| १९ | व्याख्या (?) स्थापित ... ... कारयेत् | ... |
| २१ | अन्तरालेषु ... ... नगरस्य च | ... |
| ,, | अष्टदिक्षु च ... ... पराङ्मुखम् | ... |
| ,, | मानुषे तु पदे वाथ कर्तव्यं शिवमन्दिरम् | ... |

| पुटम् | स्मृतवाक्यानि | आकरः |
|---|---|---|
| २१ | स्वयम्भुदैविकं ...... शुभार्थिभिः | ... |
| २२ | यत्र बीजानि त्रिरात्रेण प्ररोहन्ति सोत्तमा | ... |
| „ | हस्तमात्रं समं ...... मध्यमा हि भूः | (ईशान० क्रि० प० २३. श्लो० ३८) |
| „ | तत्खातं वा ...... भूमिरुत्तमा | „ (प० २३. श्लो० ३९) |
| „ | समया मध्यमा हि भूः | „ (प० २३. श्लो० ३८) |
| २५ | श्वेतापाटलपीतमेचकरुचः | तन्त्रसमुच्चयः (प० १. श्लो० ३२) |
| २६ | अथ सर्वा विशीर्णास्ताः ...... सा नित्यम् | निबन्धनम् (प० ११. श्लो० ५५) |
| २९ | हारिद्रं दधिलाजसक्तुपललाढ्यं | तन्त्रसमुच्चयः (प० ३. श्लो० २१) |
| ३० | इत्यनुज्ञाप्य भूतादीन् पुष्पमस्त्रेण खे क्षिपेत् | ... |
| ३२ | शतशः कर्षयित्वा ...... शुद्धिमृच्छत्य संशयम् | ... |
| ३३ | अधोमूलोर्ध्वशाखास्तु चतुरश्राश्च वर्तुलाः | निबन्धनम् (प० ११. श्लो० ६९) |
| „ | भूमिपरिग्रहार्थं कर्षणार्थं ...... देवप्रतिष्ठापनार्थम् | ... |
| ३४ | श्वेतौ रक्तौ च कपिलौ कृष्णौ जात्यनुक्रमात् | ... |
| „ | हलं युगं च पालाशं...विट्च्छूद्रयोर्भवेत् | ... |
| ३५ | सर्वौषधानि | तन्त्रसमुच्चयः (प० ३. श्लो० ८१) |
| „ | भूसरोजे च मां ध्यायेत् | ... |
| „ | त्रिपञ्चसप्तमार्गेण कर्षयेच्च प्रदक्षिणम् | ... |
| „ | पञ्चधा दशधा चापि कर्षयेल्लाङ्गलेन तु | निबन्धनम् (प० ११. श्लो० ६०, ६१) |
| „ | प्राङ्मुखो वाप्युदङ्मुखः कर्षयेत् | ... |
| | विभाषा साति कार्त्स्न्ये | (अष्टा० ५. ४. ५२) |

| पुटम् | स्मृतवाक्यानि | आकरः |
|---|---|---|
| ३६ | विश्राणनं वितरणं स्पर्शनं | अमरः (काण्डं २. ब्रह्म० श्लो० २९) |
| ३७ | स्नात्वा पुरुषमात्रं ...... जलाइमान्तमथापि वा | विष्णुसंहिता (प० १२. श्लो० ४५) |
| ,, | प्रासादस्य तु विस्ताराद् द्विहस्ताधिकविस्तृतम् | ... |
| ४१ | ईशानेऽस्य शिरः ...... शयितस्तथा | निबन्धनम् (प० १२. श्लो० १८.) |
| ,, | मूर्ध्नीशो दितिपर्जन्यौ ... हृदये ब्रह्मा | ,, (प० १२. श्लो० १९) |
| ,, | ब्रह्मा चतुर्मुखो ...... कमण्डलुम् | ... |
| ,, | सर्वे चतुर्भुजा ......स्कन्दादिकाश्च ते | ... |
| ४४ | आज्याक्षतैर्यजेदीशं ...... पापराक्षसीम् | ... |
| ४५ | भक्ष्यान्नाज्यं चरक्यै... ...क्रमाद् भवेत् | ... |
| ४६ | विहितो वास्तुबलिः स्याद् रक्षोविघ्नोपशान्तिसम्पद्धयः | ... |
| ४७ | द्वारादिग्वीक्षमाणं तु मध्ये मन्त्रघटं न्यसेत् | ... |
| ,, | या शिला कलशाधारसंज्ञा ...... परमेश्वरीम् | ... |
| ,, | संस्मरन् मन्त्रचक्रं तु ... स्मरन् यजेत् | |
| ४९ | त्वमेव परमा शक्तिः ...... सर्वदा | तन्त्रसमुच्चयः (प० १. श्लो० ७५) |
| ५१ | नमस्तेऽनन्तरूपाय विष्णवे विश्वधारिणे | ... |
| ,, | पूरयेद् वालुकाभिश्च जलैश्चोपरि पूरयेत् | ... |
| ५२ | एनपा द्वितीया | अष्टाध्यायी (२-३-३१) |
| ५३ | ईशेष्टाभिः | तन्त्रसमुच्चयः(प०१. श्लो०९२) |
| ,, | प्रारब्धाभिमुखा स्वगृह्यविहितेन | तन्त्रसमुच्चयः (प० ५. श्लो० १०६) |

| पुटम् | स्मृतवाक्यानि | आकरः |
|---|---|---|
| ५४ | प्रारभेत हवनं च मन्त्रवित् | ... |
| ,, | गायत्र्या सकलेषु | तन्त्रसमुच्चयः (प० १. श्लो० ८५) |
| ५५ | स्कन्दो बाणः | ,, (प० १२ श्लो० १५२) |
| ५६ | रेवन्तश्च तथा शास्ता | ,, (प० १२. श्लो० १५८) |
| ,, | गोप्ता च पिङ्गलाक्षश्च | ,, (प० १२. श्लो० १५९) |
| ,, | श्वोभूते प्रासादद्वारदेशं च | ... |
| ५७ | यद्वार्कांहि ....... अङ्गुलैः | तन्त्रसमुच्चयः (प० १२. श्लो० ४) |
| ५८ | उपानद्वत् प्रयुञ्जीत वर्जयेन्निम्नमुन्नतम् | विष्णुसंहिता (प० १३. श्लो० १७) |
| ६० | त्रिरात्रं रक्षाविधानं कृत्वा ततः कर्म समारभेत | ... |
| ,, | त्रिरात्रं विष्णुभूतास्तत्र क्रीडन्ति | ... |
| ६१ | भूमण्डलमनन्तस्थं सशैलाम्भोधिदिग्गजम् | विष्णुसंहिता (प० १३. श्लो० २७) |
| ६९ | व्योमव्यापिदशार्णैस्तु ...... स्तथेशसंज्ञाभिः | पाशुपतम् |
| ७५ | तदेतदण्डं प्रणवेन बिम्बम् | तन्त्रसमुच्चयः (प० ५. श्लो० ४१) |
| ,, | प्रासादप्रारम्भकाले गर्भाधानं कुर्यात् | ... |
| ७८ | श्वेताब्जाभा मृगे प्राच्या ...... शूद्रस्यैवाश्विदेवता | विष्णुसंहिता० (प० १४. श्लो० ५—७) |
| ७९ | ध्वनिर्घण्टानिभो यत्र ... मधोमुखम् | ,, (प० १४. श्लो० २७) |
| ८० | बाला शस्त्रसहा ... च ण्डालिका स्मृता | ,, (प० १४. श्लो० ११—१३) |

| पुटम् | स्मृतवाक्यानि | आकरः |
|---|---|---|
| ,, | वक्रस्थूलकृशा ... नेष्टा च सा शिला | विष्णुसंहिता (प० १४. श्लो० २१) |
| ,, | सगर्भांतपाट्यमाना ...... तां त्यजेत् | ,, (प० १४. श्लो० २५) |
| ८२ | इष्टकाहतवक्त्रेण दर्भैरप्याच्छाद्य | .... |
| ८३ | ज्वलन्तीं वा शिलां पश्येत् ...... सा शिला | ... |
| ८४ | स्फुलिङ्गबहलं तस्याः शिरः | .... |
| ,, | हेमसूच्यष्ठीलाभ्यां तु छिन्द्यात् प्रथमम्मङ्गतः | .... |
| ८५ | आरभ्य त्रिकराद्य ...... वेश्मनां | प्रयोगमञ्जरी(प० ६. श्लो० ९४) |
| ,, | त्रिचतुःपञ्चहस्तं तु ...... विधिना विदुः | भास्करीयम् (गृहप्रासादमानं श्लो० १.) |
| ८६ | ईशपूर्वाग्नियाम्यस्थं ... ...पुरोत्तमम् | पाशुपतम् |
| ८७ | लिङ्गध्वजस्थ ...... गृहस्थ | मञ्जरी (प० ८. श्लो० ३३) |
| ८८ | विस्तारायामराशौ ...... आदित्यपूर्वः | ... |
| ,, | व्यासायामसमूहे ...... योनिः | ... |
| ८९ | तत्रैकाद्यष्टपर्यन्ता ...... चत्वारस्त्वशुभाः स्मृताः | पाशुपतम् |
| ९० | आयाधिकमथ वसुदं व्ययाधिकं सर्वनाशः स्यात् | मयमतम् (अ० ९. श्लो० २४) |
| ,, | सप्तांशत्र्यधि ...... सर्ववेश्मनाम् | निबन्धनम् (प० १३. श्लो० २२) |
| ९१ | त्रिहस्ते द्विकराः ...... गेहादापञ्चदशहस्तकात् | ,, (प० १३. श्लो० ९९) |
| ९२ | जन्मोच्चरान्तरगतं ...... सम्यगुक्तः | मयमतम् |
| ,, | स्तम्भार्धोच्चमधिष्ठानं | (नि० प० १३. श्लो० २३) |

| पुटम् | स्मृतवाक्यानि | अकारः |
|---|---|---|
| ९३ | पादोच्चपङ्क्तिः ... ... शेषमप्रविशालकम् | मयमतम् (अ० १५. श्लो० ६ |
| ,, | स्तम्भाग्रविष्कम्भमुशन्ति दण्डम् | मञ्जरी (प० ६. श्लो० ४१) |
| ९५ | आद्याधिष्ठानतुङ्गाद् ...... एकमत्रोपपीठम् | मयमतम् (अ० १३. श्लो० [२२) |
| ,, | स्वाधिष्ठानसमोच्चं वा ......पादबाह्यतः | काश्यपीयम् ( ० ६. श्लो० |
| ९६ | अधिष्ठानसमुत्सेधात् ...... प्रशस्यते | ... १–३ |
| ९७ | अधिष्ठानोत्सेधमत्र ...... विदुः | काश्यपीयम्(प० ६. श्लो० ८७) |
| ९८ | कुर्यादधिष्ठान ...... क्रमेण | मञ्जरी (प० ६. श्लो० १०५) |
| ९९ | उत्सेधं विभजेत् ...... पादबन्धे | ,, (प० ६. श्लो० २४) |
| १०० | यावत् स्वयोनिरूर्ध्वस्था भवेत् तावद्धि निष्क्रमः | ... |
| ,, | तत्समं निष्क्रमं चैव अर्धं पादोनमेव च | ... |
| ,, | यावज्जगति ...... मसूरके | मयमतम् (अ० १४. श्लो० ४४) |
| १०१ | व्यासाः पञ्चदशौजांशे ...... नवधा स्मृताः | निबन्धनम् (प० १३. श्लो०) ६३) |
| १०२ | आरूढभित्तिर्विहिता ...... स्यादथवाल्पगेहे | मञ्जरी ( ० ६. श्लो० ६१) |
| १०३ | व्यासेऽभिक्तिकोष्ठे ......, पञ्चहस्तेऽपि वा तथा | ... |
| १०५ | धाम्नः प्रतिग्रीव ...... परिशोभितं च | तन्त्रान्तरम् |
| ,, | मान्वङ्गुलं ... भित्तिरवान्तरगतं तु वा | काश्यपीयम् (प० ७. श्लो० ३,४) |
| १०६ | वस्वङ्गुलं ...... सिंहास्यवन्धितम् | ,, (प० ७. श्लो० ५–७] |

| पुटम् | स्मृतवाक्यानि | आकरः |
|---|---|---|
| १०७ | द्वादशैव ...... वस्तुविनाशनम् | निबन्धनम् (प० १३. श्लो० १०१) |
| १०८ | पञ्चाग्निजाक्षयो ...... इति स्मृतः | ,, (प०१३. श्लो० |
| १०९ | स्तम्भमूलघनाः ...... दण्डविस्तरं | ... २८-३५) |
| ११० | विस्तारसदृशोत्सेधाः ...... कन्यसपोतिका | काश्यपीयम् (प० ९. श्लो० २—४) |
| १११ | योगं तु स्थापयेद् ...... मध्यमम् | .... |
| ,, | मुहूर्ते स्थापयेद् विद्वान् मध्यान्मध्यं विमुच्य च | तन्त्रान्तरम् |
| ,, | सर्वत्र प्रत्युपर्येव द्वारं कुर्याद् विचक्षणः | गुरुदेवः (ईशान० क्रि० प० ३१. श्लो० १०१) |
| ,, | स्वव्यासमूच्छा ...... वा घनाः | ... |
| ११२ | प्रतिमाद्वारमानं ...... चतुर्विस्तरम् | भास्करः (गृ० श्लो० ६०) |
| ,, | अथ तद् द्वारमानं ...... मानकम् | ,, (गृ० श्लो० ५८) |
| ११३ | स्तम्भायामे ...... भवेत् | गुरुदेवः (ईशान० क्रि० प० ३१. श्लो० १०२,१०३) |
| ,, | पादविष्कम्भ ...... घनमुच्यते | काश्यपः |
| ११४ | द्वारोच्चशेषे ...... चित्रिता | गुरुदेवः (ईशान. क्रि० प. ३१. श्लो० १११,११२) |
| ११५ | दण्डाच्चतुष्षडष्टांशं .... द्विगुणविस्तरः | गुरुदेवः(ईशान० क्रि० प० ३१. श्लो० ११३) |
| ११६ | श्रीमुखं वामदण्डं च........कवाटयोः | ... |
| ,, | समखण्डानि........वा भवेत् | गुरुदेवः(ईशान० क्रि० प० ३२ श्लो० ८०) |
| ११७ | पुरो द्वारस्य.......शुभम् | ... |
| ११८ | अथ वक्ष्ये विशेषेण ...... चित्रतोरणमेतत् स्यात् | काश्यपः (प० १२. श्लो० १—११) |

